


SRI VIDYA MAHARNAWAHA

2

"जगत् कृत्स्नम् वासुदेवमयम्"
"परिरक्षणीय परिवेदक परमार्थ-रत्न"

# श्रीविद्यामहार्णवः

## कामधेनु

द्वितीयो भागः
(सचित्र-सम्पूर्ण-सपर्यापद्धति-ग्रन्थः)



श्री ललिता महानित्या




Compiled by
Anandha Shri Swami Gnananendra Sarawathi Yethi

॥श्रीगुरुभ्यो नमः॥

''परिरक्षणीय परिवेदक परमार्थरत्न''

# श्रीविद्यामहार्णवः

Volume 2

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

दाक्षिणात्य-
परमहंस-परिव्राजक
अनन्त श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः



प्रकाशकः
श्री विद्या विमर्शन पीठम्
हनुमानघाट, वाराणसी-२२१००१
भारत



ब्रह्म श्री न. सुब्रह्मण्यअय्यर (सार)

चितानन्दनाथ

(परमगुरु)




शरीररुपी वृथक्ष में - जीवात्मा - परमात्मा रूपी पक्षियाँ

ॐ

श्रीगुरुभ्योनमः

# श्री विद्यामहार्णवः

## श्री चितानन्दनाथ लहरी कामधेनुः ज्ञानशक्तिः

### द्वितीयो भागः

### विषयानुक्रमणिका

**७. सपर्या प्रकरणम्**

**सपर्याओं के उपयुक्त काल जानें !**

प्रातःकाल महागणपति क्रमः पूर्वाह्न में बर्हियागिक्रमः अपराह्न में श्री श्यामला क्रमः रात्री में श्री वाराही क्रमः उषःकाल में (ब्रह्ममूर्त्त में) रश्मिमाला पारायण अनुकरण अजपा समर्पण, तथा महायाग क्रमः प्रयोग विधिः अनुकरण - सिद्धिप्रदः है।

## ७. सपर्या प्रकरणम्

## ४. महायागक्रम सपर्या खण्ड:

द्वितीय भागः कामेधेनु विषयक्रमाणिका समाप्तः
"जगत्कृस्नम् वासुदेवमयम्"

।।श्रीगुरुभ्यो नमः।।

"परिरक्षणीय परिवेदक परमार्थरत्न"

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्री विशालाक्षियम्बा
श्री चितानन्दनाथ लहरी-कामधेनुः

श्रीज्ञानशक्तिः

## द्वितीयो भागः

## ५. तिथिनित्या-प्रकरणम्

### तिथिनित्या पूजा विधिः

दाक्षिणात्य
परमहंस-परिव्राजक
श्री श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# ५. पंचम मुद्राकल्प तरङ्गः



**४९ त्रिमुखम्**—संमुख सक्तयोः पाण्योः कनिष्ठात्रययोगतः अंगुष्ट तर्जनी वैकल्ये त्रिमुखम्।



**५० चतुर्मुखम्**— कनिष्ठा-अनामा-मध्यमा-तर्जनी योगतः अंगुष्ठ वैकल्ये चतुर्मुखम्।



**५१ पंचमुखम्**— सर्वांगुलीनां योगतः पंचमुखम्।



**५२ षण्मुखम्**— तिर्यक् संयुज्यमानाग्री संयुक्तां गुलिमण्डलौ। हस्तौ षण्मुख-मित्युक्ता मुद्रा मुद्राविशारदैः।



**५३ अधोमुखम्**— आकुंचिताग्रौ संयुक्तौ न्युब्जौ हस्तावधोमुखम्।



**५४ व्यापकम्**— उत्तानौ तादृशावेव व्यापकं कुंचितौ करौ



**५५ शकटम्**— अधोमुखौ बद्धमुष्टा मुक्ताग्रां गुष्ठकौ करौ शकटम्।



**५६ यमपाशम्**— बद्धमुष्टिकयोः पाण्योः उत्ताना वामतर्जनी। कुंचिताग्राऽन्यथा युक्ता तर्जन्याऽनजुवक्त्रया यमपाशम्।



**५७ ग्रथितम्**— उत्तानसन्धि संलीन-बद्धांगुलि द्वयौ करौ संमुखा घटितौ दीर्घां-गुष्ठौ ग्रथित-मुच्यते।



**५८ संमुखोन्मुखम्**— ऊर्ध्वांगुलि-र्वामहस्ते तादृशा दक्षिणेन तु। अधोमुखेन संयुक्तः संमुखोन्मुखमुच्यते।



**५९ प्रलंबः**— उत्तानोत्तानकोटी च प्रलंबः कथितः करौ।



**६० मुष्टिकः**— मुष्टी चान्योन्य-संयुक्तावुत्तानी मुष्टिको भवेत्।

श्रीगणेशाय नमः श्रीसरस्वत्यै नमः श्रीगुरुभ्यो नमः

# श्रीविद्यामहार्णवः

## श्रीविशालाक्षियम्बा श्रीचितानन्दनाथ लहरी

## कामधेनुः

## द्वितीयो भागः

## तिथिनित्या-प्रकरणम्

### १. मध्यत्रिकोणस्य दक्षिणरेखायांवारूण्याद्याग्नेयान्तं प्रतिष्टित नित्या खण्डः

### नित्या कवचम्

श्री शिव उवाचः—

समस्तापद्विमुक्त्यर्थं सर्वसम्दवाप्तये । भूतप्रेतपिशाचादिपीडाशान्त्यै सुखाप्तये ।।१।।
समस्त रोगनाशाय समरे विजयाय च । चोर सिंहद्वीपि गज गवयादि भयानके ।।२।।
अरण्ये शैलगहने मार्गे दुर्भिक्षके तथा । सलिलादिमनः पीडास्वब्धौ पीतादिसङ्कटे ।।३।।
प्रजप्य नित्याकवचं सकृत् सर्वं तरत्यसौ । सुखी जीवति निर्द्वन्द्वो निःसपत्नो जितेन्द्रियः ।।४।।
शृणु तत्कवचं देवि वक्ष्ये तव तदात्मकम् । येनाहमपि युद्धेषु देवासुरजयी सदा ।।५।।
सर्वतः सर्वदाऽऽत्मानं ललिता पातु सर्वगा । कामेशी पुरतः पातु भगमालात्वनन्तरम् ।।६।।
दिशं पातु तथा दक्षपार्श्वं मे पातु सर्वदा । नित्यक्लिन्नाऽथ भेरुण्डा दिशं पातु सदा मम ।।७।।
तथैव पश्चिमं भागं रक्षेत्सा वह्निवासिनी । महावज्रेश्वरी रक्षेदनन्तरदिशं सदा ।।८।।
वामपार्श्वं सदा पातु दूती मे त्वरिता ततः । पालयेत्तु दिशं चान्यां रक्षेन्मां कुलसुन्दरी ।।९।।
नित्या मामूर्ध्वतः पातु साऽधो मे पातु सर्वदा । नित्या नीलपताकाख्य विजया सर्वतश्च माम् ।।१०।।
करोतु मे मङ्गलानि सर्वदा सर्वमङ्गला । देहेन्द्रियमनःप्राणान् ज्वालामालिनि विग्रहा ।।११।।
पालयेदनिशं चित्रा चित्तं मे पातु सर्वदा । कामक्रोधात् तथालोभान्मोहान्मानान्मदादपि ।।१२।।

पापान्मत्सरतः शोकात्संशयात्सर्वतः सदा। स्तैमित्याच्च समुद्योगात् अशुभेषु तु कर्मसु ।।१३।।
असत्यात्क्रूरचिन्तातो हिंसातश्चौर्यतस्तथा। रक्षन्तु मां सर्वदा ताः कुर्वन्त्विच्छां शुभेषु च ।।१४।।
नित्याः षोडश मां पान्तु गजारूढाःस्वशक्तिभिः । तथा हयसमारूढाः पान्तु मां सर्वतः सदा।।१५।।
सिंहारूढास्तथा पान्तु मां तरक्षुगता अपि । रथारूढाश्च मां पान्तु सर्वतः सर्वदा रणे ।।१६।।
तार्क्ष्यारूढाश्च मां पान्तु तथा व्योमगतास्तथा। भूगताः सर्वतः पान्तु माञ्च सर्वत्र सर्वदा ।।१७।।
भूतप्रेतपिशाचापस्मारकृत्यादिकान् गदान् । द्रावयन्तु स्वशक्तीनां भीषणैरायुधैर्मम ।।१८।।
गजाश्वद्वीपिपञ्चास्य तार्क्ष्यारूढाखिलायुधाः । असंख्याः शक्तयो देव्याः पान्तु मां सर्वतः सदा ।।१९।।
सायं प्रातर्जपेन्नित्याकवचं सर्वरक्षकम्। कदाचिन्नाशुभं पश्येन्न श्रृणोति च मत्समः ।।२०।।

।।इति नित्याकवचं सम्पूर्णम्।।

## *तिथिनित्या मण्डलम्*

अथ कामेश्वरी नित्या नित्या च भगमालिनी ।
नित्यक्लिन्नानिधानित्य भेरूण्डा वह्निवासिनी ।।
महाविंधेश्वरी दूती त्वरिता कुलसुन्दरी ।
नित्या नीलपताका च विजया सर्वमङ्गला ।।
ज्वालामालिनिका चित्रत्येताः पञ्चदशोद्रिताः ।
कामेश्वर्यादिका नित्या विचित्रान्ताः प्रकीर्तिताः।।

## *श्रीविद्या परिवार*

**श्री विद्याया अथोवक्ष्ये परिवार प्रपूजनम्। कृतेन येन मन्त्रज्ञो लभते वाञ्छिताधिकम्।।१।।**

**श्री विद्या का पूजन**—अब श्रीविद्या के परिवार पूजन की रीति बतलाता हूँ, जिसके करने से मान्त्रिक इच्छा से भी अधिक फल पाता है।

**शुक्लपक्षे यजेन्नित्याः कामेश्वर्यादिषोडश। कृष्णपक्षे विचित्राद्याः कामेश्वर्यवसानकाः।।२।।**
**षोडशीं च यजेन्मध्ये वक्ष्ये तद्यजनक्रमम्। एकैकं स्वर मुच्चार्य नित्यामन्त्रं समुच्चरेत्।।३।।**
**कामेश्वर्या दिनामान्ते नित्या श्रीपादुकां पठेत्। पूजयामि तर्पयामि हृदयं प्रोच्य पूजयेत्।।४।।**
**बिन्दुं परित आकल्प्य त्रिकोणे बिन्दुतोन्तिमम्। दक्षहस्तेन पुष्पादिवामेनाम्भो विनिःक्षिपेत्।।५।।**
**के चिदाहुरिहाचार्या आर्द्रकेण जलं क्षिपेत्। वामावर्तेन सम्पूज्याः कोणपार्श्वेषु पञ्चशः।।६।।**

शुक्लपक्ष में कामेश्वरी से विचित्रा तक नित्याओं का तथा कृष्ण पक्ष में विचित्रा से कामेश्वरी तक नित्याओं का (त्रिकोण की रेखाओं के पास ५-५ के क्रम से तथा वामावर्त क्रम से) पूजन करना चाहिए। मध्य (बिन्दु) में षोडशी का मूल मन्त्र से पूजन करना चाहिए।




उनकी पूजाविधि इस प्रकार है—एक-एक स्वर बोलकर (वक्ष्यमाण) नित्याओं का १-१ मन्त्र बोलना चाहिए और फिर कामेश्वरी आदि का नाम लेकर **'नित्या श्रीपादुकां पूजयामि तर्पयामि नमः'** लगाकर पूजन करना चाहिए। बिन्दु ऊपर त्रिकोण में वामावर्त क्रम से इनकी कल्पना करनी चाहिए तथा बिन्दु को अन्तिम मानना चाहिए। दाहिने हाथ से (**पूजयामि** कहते समय) पुष्पादि एवं बाँयें हाथ से (**तर्पयामि** कहते समय) विशेषार्घ्य या गाय का दूध चढ़ाना चाहिए।

आचार्यों का कहना है कि अदरख के साथ विशेषार्घ्य चढ़ाना चाहिए। त्रिकोण (की रेखाओं) के पास ५-५ के क्रम से तथा वामावर्त क्रम से इनका पूजन करना चाहिए।

## *श्रीतिथिनित्या कृष्णपक्ष एवं शुक्लपक्ष आराधना क्रमः*

| **नित्या देवी (आरोहण)** | **शुक्लपक्ष (अवरोहण)** | **कृष्णपक्ष** |
|---|---|---|
| १. कामेश्वरी | १ प्रथमा | १५. अमावास्या |
| २. भगमालिनी | २ द्वितीय | १४. चतुर्दशी |
| ३. नित्यक्लिन्ना | ३. तृतीया | १३. त्रयोदशी |
| ४. भेरुण्डा | ४. चतुर्थी | १२. द्वादशी |
| ५. वह्निवासिनी | ५. पञ्चमी | ११. एकादशी |
| ६. महावज्रेश्वरी | ६. षष्ठी | १०. दशमी |

| नित्या देवी (आरोहण) | शुक्लपक्ष (अवरोहण) | कृष्णपक्ष |
|---|---|---|
| ७. शिवदूती | ७. सप्तमी | ९. नवमी |
| ८. त्वरिता | ८. अष्टमी | ८. अष्टमी |
| ९. कुलसुन्दरी | ९. नवमी | ७. सप्तमी |
| १०. नित्या | १०. दशमी | ६. षष्ठी |
| ११. नीलपताका | ११. एकदशी | ५. पञ्चमी |
| १२. विजया | १२. द्वादशी | ४. चतुर्थी |
| १३. सर्वमङ्गला | १३. त्रयोदशी | ३. तृतीया |
| १४. ज्वालामालिनी | १४. चतुर्दशी | २. द्वितीया |
| १५. चित्रा | १५. पूर्णिमा | १. प्रथमा |

१६. महानित्या

सोलह कलाओं के साथ सर्वथा

## *श्रीषोडशनित्या ध्यानश्लोकाः*

## १. श्री कामेश्वरी नित्या

**नित्यामन्त्राः प्रवक्ष्यन्ते स्मृताः सर्वेष्टसिद्धदाः । बालातारोनमः कामेश्वरिदृग्दीर्घजादिमः ।।१।।**
**कामफलप्रदेसर्वसत्त्ववान्ते तु शङ्करि । सर्वान्ते तु जगद्वर्णात्क्षोभणान्ते करीति च ।।२।।**
**वर्मत्रयं पञ्चबाणाः प्रतिलोमाकुमारिका । कामेश्वरी मनुः प्रोक्तः षट्चत्वारिंशदर्णवान् ।।३।।**

ध्यानम्।

**बालार्ककोटिसङ्काशां माणिक्य मुकुटोज्ज्वलाम् । हारग्रैवेय काञ्चीभिरूर्मिकानूपुरादिभिः ।।१।।**
**मण्डितां रक्तवसनां रत्नाभरणशोभिताम् । षड्भुजांत्रीक्षणामिन्दुकलाकलितमौलिकाम् ।।२।।**
**पञ्चाष्टषोडशद्वन्द्वषट्कोण चतुरस्रगाम् । मन्दस्मितोल्लसद्वक्त्रां दयामन्थरवीक्षणाम् ।।३।।**
**पाशाङ्कुशौ च पुण्ड्रेक्षुचापं पुष्पशिलीमुखम् । रत्नपात्रं सुधापूर्णं वरदं बिभ्रतीं करैः ।।४।।**

**Dhyana Slokas.**

1. " She is (lustrous red) like ten million rising suns, wears a bright crown of rubies and is adorned with throat ornament (*Graiveya*), necklaces, waistchains and rings on Her hands and feet. Her ornaments are set with gems. Her raiment is red. She is six-armed and three-eyed and carries the crescent (*Kala*) of the Moon on Her head. Her face is lit up with a soft smile and Her eyes are merciful. She is in Her

*Chakra* or *Yantra* which is on a lotus. She carries in Her hands a bow of sugarcane, arrows of flowers, noose and goad and a cup made of gems filled with nectar. She makes the gesture granting boons"

**Efficacy** :— Worship of Sri Kameswari Devi pestous one with health family congenniality and mental peace of mind besides of the sowl by destroying deseaes She protects the mankind with good health.

**(२) कामेश्वरी मन्त्र का उद्धार**— अब स्मरण करने मात्र से सब अभीष्टों के देने वाली नित्याओं के मन्त्रों को बतलाता हूँ—

बाला (ऐं क्लीं सौ:) तार (ॐ) एवं 'नम: कामेश्वरि' फिर दृक् एवं दीर्घ जादि (इच्छा) फिर 'कामफलप्रदे सर्वसत्त्वव' 'शंकरिसर्व' 'जगत' 'क्षोभण' एवं 'करि' फिर वर्मत्रय (हुं हुं हुं) पञ्चबाण (द्रां द्रां क्लीं ब्लूं स:) और अन्त में प्रतिलोमा बाला (सौ: क्लीं ऐं) लगाने से ४६ अक्षर का कामेश्वरी मन्त्र बनता है।

**३. कामेश्वरी का मन्त्र— ऐं क्लीं सौः ॐ नमः कामेश्वरि इच्छा का मन्त्रभेदाःप्रदेसर्वत्ववशङ्करि सर्वजगत्क्षोभणकरि हुं हुं हुं द्रां द्रीं क्लीं ब्लूं सः सौः क्लीं ऐं।** (मन्त्रभेदा:)

**४. कामेश्वरी का पूजनमन्त्र— अं "ऐं क्लीं सौ.........०" कामेश्वरिनित्या श्री पादुकां पूजयामि तर्पयामि नमः।**

**५. कामेश्वरी गायत्री— ॐ कामेश्वर्यै विद्महे नित्यक्लिन्नायै धीमहि तन्नो नित्या प्रचोदयात्।**

## *श्रीकामेश्वरी नित्या मातृकान्यास:*

अस्य श्रीकामेश्वरी नित्या महामन्त्रस्य। सम्मोहनऋषि:। गायत्रीछन्द:। श्रीकामेश्वरीदेवता। क्लीं बीजंम्। सौ: शक्ति:। ऐं कीलकम्।

| | |
|---|---|
| **ॐ ऐं क्लीं सौः** | अङ्गुष्ठाभ्याम् नम: |
| **ॐ नमः कामेश्वरि** | तर्जनीभ्याम् नम: |
| **ॐ इच्छाकामफलप्रदे नमः** | मध्यमाभ्यां नम: |
| **ॐ सर्वसत्ववशंकरी नमः** | अनामिकाभ्यां नम: |
| **ॐ सर्वजगत् क्षोभकरि नमः** | कनिष्ठिकाभ्यां नम: |
| **ॐ सौः क्ली ऐं** | करतलपृष्ठाभ्यां नम: |
| **ॐ ऐंक्ली सौः नमः** | हृदयाय नम: |

ॐ नमः कामेश्वरि शिरसे स्वाहा
ॐ इच्छाकामफलप्रदे नमः शिखायै वषट्
ॐ सर्वसत्ववशङ्करि नमः कवचाय हुँम्
ॐ सर्वजगत्क्षोभकरि नमः नेत्रत्रयाय वौषट
ॐ सौः क्लीं ऐं नमः अस्त्रायफट्
भूर्भुवस्वरोमिति इति दिग्बन्धः

ध्यानम्

देवीं ध्यायेज्जगद्धात्रीं जपाकुसुमसन्निभाम् ।
बालभानुप्रतीकाशां शतकुम्भसमप्रभाम् ।।
रक्तवस्त्रपरीधानाम् सम्पत्विद्यावशङ्करीम् ।
नमामि वरदां देवी कामेशीमभयप्रदाम् ।।

पञ्चपूजा:—

लमिति पञ्चपूजा।

## न्यासः

ॐ ऐं ह्रीं श्रीं अं कामेश्वर्यै नमः हंसः शिरसि
ॐ ऐं ह्रीं श्रीं आं महामायायै नमः हंसः मुखावृत्ते
ॐ ऐं ह्रीं श्रीं इं वागीश्यै नमः हंसः दक्षनेत्रे
ॐ ऐं ह्रीं श्रीं ईं ब्रह्मसंज्ञितायै नमः हसः वाभनेत्रे
ॐ ऐं ह्रीं श्रीं उं अक्षरायै नमः हंसः दक्षकर्णे
ॐ ऐं ह्रीं श्रीं ऊं त्रिमात्रे नमः हंसः वामकर्णे
ॐ ऐं ह्रीं श्रीं ऋं त्रिपदायै नमः हंसः दक्षनासटे
ॐ ऐं ह्रीं श्रीं ॠं त्रिगुणात्मिकायै नमः हंसः वामनासटे
ॐ ऐं ह्रीं श्रीं लृं सुरसिद्ध्यै नमः हंसः दक्षकपोले
ॐ ऐं ह्रीं श्रीं लॄं गणाध्यक्षायायै नमः हंसः वामकपोलो
ॐ ऐं ह्रीं श्रीं एं गणमातायै नमः हंसः ऊर्ध्वोष्ठे
ॐ ऐं ह्रीं श्रीं ऐं गणेश्वर्यै नमः हंसः अधरोष्ठे
ॐ ऐं ह्रीं श्रीं ओं चण्डिकायै नमः हंसः ऊर्ध्वदन्तपङ्क्तौ

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | औं चण्डमुण्डायै | नमः हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | अं चामुण्डायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं | अः इष्टदायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं | कं स्वराणां शक्त्यै | नमः हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | खं प्रोक्तायै | नमः हंसः | दक्षकूर्परे |
| ॐ ऐं ह्रीं श्रीं | गं सर्वसिद्धिप्रदायिकायै | नमः हंसः | दक्षमणिबन्धौ |
| ॐ ऐं ह्रीं श्रीं | घं विश्वम्भरायै | नमः हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ङं विश्वयोन्यै | नमः हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | चं विश्वमात्रे | नमः हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | छं वसुप्रदायै | नमः हंसः | वामकूर्परे |
| ॐ ऐं ह्रीं श्रीं | जं स्वाहायै | नमः हंसः | वाममणिबन्धौ |
| ॐ ऐं ह्रीं श्रीं | झं स्वधायै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ञं तुष्ट्यै | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | टं ऋद्ध्यै | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं | ठं गायत्र्यै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं | डं गोगणाखगायै | नमः हंसः | दक्षल्गुफे |
| ॐ ऐं ह्रीं श्रीं | ढं वेदमात्रे | नमः हंसः | दक्षपादाङ्गुलीमूले |
| ॐ ऐं ह्रीं श्रीं | णं वरिष्ठायै | नमः हंसः | दक्षपादङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | तं सुप्रभायै | नमः हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं | थं सिद्धवाहिन्यै | नमः हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं | दं आदित्यहृदयायै | नमः हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं | धं चन्द्रायै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | नं चन्द्रभावानुमण्डलायै | नमः हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | पं ज्योत्स्नायै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | फं हिरण्मयै | नमः हंसः | वामपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | बं भव्यायै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | भं भवदुःखभयापहायै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं | मं शिवतत्वायै | नमः हंसः | जठरे |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | यं शिवायै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं | रं शान्तायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं | लं शान्तिदायै | नमः हंसः | गल पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | वं शान्तरूपिण्यै | नमः हंसः | वामकक्षौ |
| ॐ ऐं ह्रीं श्रीं | शं सौभाग्यदायै | नमः हंसः | हृदयादि दक्षकराङ्गुलयन्तं |
| ॐ ऐं ह्रीं श्रीं | षं शुभायै | नमः हंसः | हृदयादि वामकराङ्गुलयन्तम् |
| ॐ ऐं ह्रीं श्रीं | सं गौर्यै | नमः हंसः | हृदयादि दक्षपादाङ्गुल्यन्त |
| ॐ ऐं ह्रीं श्रीं | हं उमायै | नमः हंसः | हृदयादि वामपादाङ्गुल्यन्तं |
| ॐ ऐं ह्रीं श्रीं | ळं हैमवत्यै | नमः हंसः | वामयादि पादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | क्षं प्रियादक्षायै | नमः हंसः | कटयादि ब्रह्मरन्ध्रान्तम् |

## *कामेश्वरी नित्यायजनविधिः*

तन्त्रराजे (७ प०/श्लो०)

मन्त्रोद्धारस्तु तत्रैव—(३/६)

**शुचिः स्वेन युतस्त्वाद्यो ललिता स्याद्द्वितीयकः। शून्यमग्नियुतं पश्चाद्रयो व्याप्तेन संयुतः ।।१।।**

**प्राणो रसाग्निसहितः शून्ययुग्मं चरान्वितम्। नभो गोत्रा पुनश्चैषा दाहेन समयोजिता ।।२।।**

**अम्बु स्याच्चरसंयुक्तं वनशक्तियुतं च हृत्। एषा कामेश्वरी नित्या कामदैकादशाक्षरी ।।३।।**

इति। **ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः** ११ इति। तथा त्रिपुरार्णवे—

(ऋषिः सम्मोहनः प्रोक्तस्त्रिष्टुप् छन्द उदाहतम्। कामेश्वरीदेवता स्याद्ब्रह्मबीजं तु बीजकम्।।१।।

शक्तिः कामकला प्रोक्ता धराबीजं तु कीलकम्।)

तन्त्रराजे—(७/३)

**मूलविद्याक्षरैरेवं कुर्यादङ्गानि षट् क्रमात् । एकेन हृदयं शीर्षं तावताथो द्वयं द्वयात् ।।१।।**

**चतुर्भिर्नयनं तद्वदस्त्रमेकेन चोदितम् । दिक्श्रोत्रनासाद्वितये जिह्वाहृन्नाभिगुह्यके ।।२।।**

**व्यापकत्वेन सर्वाङ्गे मूर्धादिप्रपदावधि । न्यसेद्विद्याक्षराण्येषु स्थानेषु तदनन्तरम् ।।३।।**

**समस्तेन व्यापकं तु कुर्यादुक्तक्रमेण वै । अथ ध्यानं प्रवक्ष्यामि नित्यपूजासु चोदितम् ।।४।।**

**येन देवी सुप्रसन्ना ददातीष्टमयत्नतः । बालार्ककोटिसङ्काशां माणिक्यमुकुटोज्ज्वलाम् ।।५।।**

**हारग्रैवेयकाञ्चीभिरूर्मिकानूपुरादिभिः । मण्डितां रक्तवसनां रक्ताभरणशोभिताम् ।।६।।**

**षड्भुजां त्रीक्षणामिन्दुकलाकलितमौलिकाम् । पञ्चाष्टषोडशद्वन्द्वषट्कोणचतुरस्रगाम् ।।७।।**

**मन्दस्मितोल्लसद्वक्त्रां (दया? लज्जा) मन्थरवीक्षणाम् ।**
**पाशाङ्कुशौ च पुण्ड्रेक्षुचापं पुष्पशिलीमुखम् ।।८।।**
**रत्नपात्रं सुधापूर्णं वरदं बिभ्रतीं करैः । एवं ध्यात्वार्चयेद् देवीं नित्यपूजासु सिद्धये ।।९।।**
**प्रयोगादिषु सर्वत्र वक्ष्ये ध्यानानि तत्र वै । मदनोन्मादनौ पश्चात्तथा दीपनमोहनौ ।।१०।।**
**शोषणश्चेति कथिता बाणाः पञ्च पुरोदिताः। कुसुमा मेखला पश्चान्मदना मदनातुरा ।।११।।**
**अनङ्गपदपूर्वास्ताः पञ्चमी मदवेगिनी । ततो भुवनपाला स्याच्छशिरेखा त्वनन्तरा ।।१२।।**
**रेखा गगनपूर्वान्या पूज्या पत्रेषु चाष्टसु । श्रद्धा प्रीती रतिश्चैव धृतिः कान्तिर्मनोरमा ।।१३।।**
**मनोहराष्टमी प्रोक्ता देवी चात्र मनोरथा । मदनोन्मादिनी पश्चान्मोहिनी शङ्खिनी ततः ।।१४।।**
**शोषिणी च वशङ्कारी शिञ्जिनी सुभगाः ततः । सस्वराः षोडश प्रोक्ताः प्रियदर्शिनिकान्तिकाः ।।१५।।**
**पूज्यास्ताः प्रतिपत्रं तु प्रत्येकं षोडशच्छदे । पूषा चेद्धा सुमनसा रतिः प्रीतिर्धृतिस्तथा ।।१६।।**
**ऋद्धिः सौम्या मरीचिश्च परतस्त्वंशुमालिनी। शशिनी चाङ्गिरा च्छाया ततः सम्पूर्णमण्डला ।।१७।।**
**तुष्ट्यमृताख्या कथिताः कलाः स्युः सस्वरा विधिः । षोडशस्वपि पत्रेषु पूजयेत्ता यथाक्रमम् ।।१८।।**
**बहिः षट्कोणकोणेषु डाकिन्याद्यास्तथार्चयेत् । तद्बहिश्चतुरस्त्रस्थलोकेशास्तत्समा यजेत् ।।१९।।**
**वटुकं गणपं दुर्गां क्षेत्रेशं चाभितो यजेत् । अग्न्याद्यस्त्रेषु विद्यादिसप्ताक्षर्य्यन्तरास्थितैः ।।२०।।**
**तन्नामभिर्बलिं तेभ्यो दद्याद्गन्धादि चोदितैः । ततस्तामङ्गविद्याभ्यां क्लृप्तार्घ्यः पूजयेच्छिवाम् ।।२१।।**
**प्रागुक्तैरुपचाराद्यैर्होमं कुर्यात्ततस्तथा । घृताक्तैर्मधुराक्तैर्वा प्रसूनैररुणैः शुभैः ।।२२।।**
**अन्नाद्याभ्यां प्रजुहुयात्ततः प्राग्वत्समापयेत्।** इति।

अथ प्रयोगः——तत्र प्रातः कृत्यादियोगपीठन्यासान्ते कामेश्वरीविद्यया प्राणायामत्रयं कृत्वा, शिरसि **सम्मोहनाय ऋषये नमः**। मुखे **त्रिष्टुप्छन्दसे नमः**, हृदये **कामेश्वरीदेवतायै नमः**। गुह्ये **कंबीजाय नमः**। पादयोः **इंशक्तये नमः**। नाभौ **लंकीलकाय नमः**।

इति विन्यस्य मम कर्तव्यपूर्णाभिषेकाख्यद्वितीयदीक्षाफलसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा,

| | | |
|---|---|---|
| ॐ ऐं हृदयाय नमः। | इति षडङ्गन्यासं विधाय, | दक्षनसि **ॐ क्लि नमः।** |
| ॐ **सकलह्रीं** शिरसे स्वाहा। | दक्षनेत्रे **ॐ ऐं नमः।** | वामे **ॐ न्ने नमः।** |
| ॐ **नित्य** शिखायै वषट्। | वामे **ॐ सकलह्रीं नमः।** | जिह्वायां **ॐ म नमः।** |
| ॐ **क्लिन्ने** कवचाय हुम्। | दक्षश्रोत्रे **ॐ नि नमः।** | हृदये **ॐ द नमः।** |
| ॐ **मदद्रवे** नेत्रत्रयाय वौषट्। | वामे **ॐ त्य नमः।** | नाभौ **ॐ द्र नमः।** |
| ॐ **सौः** अस्त्रायफट्, | | गुह्ये **ॐ वे नमः।** |

सौः इति सर्वाङ्गे व्यापकं विन्यस्य, ध्यानं विधाय मानसपूजान्ते स्वर्णादिपट्टे कुंकुमादिना पञ्चदलकमलं कृत्वा तद्बहिरष्टदलं तद्बहिः षोडशदलं तद्बहिः षट्कोणं तद्बहिश्चतुर्द्वारयुक्तं चतुरस्रमिति पूजाचक्रं निर्माय स्वपुरतश्चन्दनादिपीठे संस्थाप्य, तत्र कामेश्वरीविद्यया पुष्पाञ्जलिं विनिःक्षिप्यार्ध्यादिस्थापनाद्यात्मपूजान्ते पीठपूजां कृत्वा, तत्र कामेश्वरीविद्यया मूर्ति परिकल्प्या-वाहनादिपुष्पोपचारान्ते लयान्तं सम्पूज्य, पञ्चदलकमलकेसरेषु अग्नीशासुरवायव्यदेव्यग्रतस्तदादिचतुर्दिक्षु च षडङ्गानि सम्पूज्य, देव्याः पृष्ठभागे पञ्चदलाष्टदलयोरन्तराले प्राग्वद्दिननित्यापूजोक्तगुरुत्रयं सम्पूज्य, पञ्चदलेषु देव्यग्रादिप्रादक्षिण्येन

**ह्रीं श्रीं द्रांमदनबाणाय नमः ॐ ह्रीं श्रीं क्लीं दीपनबाणाय नमः। ॐ ह्रीं श्रीं सः शोषणाबाणाय ॐ ह्रीं श्रीं द्रीं उन्मादनबाणाय नमः। ॐ ह्रीं श्रीं ब्लूं मोहनबाणाय नमः। नमः,**

इति सम्पूज्य, तद्बहिरष्टदलेषु देव्यग्रादिप्रादक्षिण्येन,

**ॐ ह्रीं श्रीं अनङ्गकुसुमा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गमेखला पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गमदना पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गमदनातुरा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गमदवेगिनी पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गभुवनपाला पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गशशिरेखा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अनङ्गगगनरेखा पादुकां पूजयामि नमः।**

ततः षोडशदलेषु

**ॐ ह्रीं श्रीं अं श्रद्धा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं आं प्रीति पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं इं रति पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ई धृति पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं उं कान्ति पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ऊं मनोरमा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ऋं मनोहरा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ॠं मनोरथा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं लृं मदना पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ॡं उन्मादिनी पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं एं मोहिनी पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ऐं (शान्ति? शंखिनी) पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ओं शोषिणी पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं औं वशंकरी पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अं शिञ्जिनी पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं अः सुभगा पादुकां पूजयामि नमः।**

इति सम्पूज्य, तद्बहिः षोडशदलाग्रेषु—

**ॐ ह्रीं श्रीं अं पूषापादुकां पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं आं इद्धा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं इं सुमनसा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं इं रति पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं उं प्रीतिपादुकां पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ऊं धृति पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ऋं ऋद्धि पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ॠ सौम्या पादुकां पूजयामि नमः।**

ॐ ह्रीं श्रीं लृं मरीचि पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं ऐं अङ्गिरा पादुकां पूजयामि नमः।
ॐ ह्रीं श्रीं लॄ मरीचि पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं ओं छाया पादुकां पूजयामि नमः।
ॐ ह्रीं श्रीं लृं अंशुमालिनी पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं औं सम्पूर्णमण्डला पादुकां पूजयामि नमः।
ॐ ह्रीं श्रीं एं शशिनी पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं अं तुष्टिपादुकां पूजयामि नमः।
ॐ ह्रीं श्रीं अः अमृतापादुकां पूजयामि नमः।

इति सम्पूज्य, तद्बहिः षट्कोणेषु—दक्षिणाग्रकोणे

ॐ ह्रीं श्रीं ऐं डाकिनी पादुकां पूजयामि नमः। वामाग्रे ॐ ह्रीं श्रीं ऐं काकिनी पादुकां पूजयामि नमः। पृष्ठदक्षिणे ॐ ह्रीं श्रीं ऐं राकिणी पादुकां पूजयामि नमः। पृष्ठकोणे ॐ ह्रीं श्रीं ऐं शाकिनी पादुकां पूजयामि नमः। देव्यग्रे ॐ ह्रीं श्रीं ऐं लाकिनी पादुकां पूजयामि नमः। पृष्ठवामे ॐ ह्रीं श्रीं ऐं हाकिनी पादुकां पूजयामि नमः।

इति सम्पूज्य, षट्कोणाद्बहिश्चतुरस्राभ्यन्तरे आग्नेयकोणे

ॐ ह्रीं श्रीं ऐं वटुक पादुकां पूजयामि नमः। नैर्ऋते ॐ ह्रीं श्रीं ऐं दुर्गा पादुकां पूजयामि नमः। ईशाने ॐ ह्रीं श्रीं गं गणपति पादुकां पूजयामि नमः। वायव्ये ॐ ह्रीं श्रीं ऐं क्षं क्षेत्रेश पादुकां पूजयामि नमः।

इति सम्पूज्य, तद्बहिः चतुरस्रे देव्याः पृष्ठभागमारभ्य पूर्वादिदशदिक्षु

ॐ ह्रीं श्रीं ऐं लंइन्द्रशक्तिपादुकां पूजयामि नमः। ॐ ह्रीं श्रीं ऐं रंअग्निशक्ति पादुकां पूजयामि नमः।

इत्यादिलोकपालांस्तदायुधानि च शक्त्यन्तैस्तन्नामभिः सम्पूज्य, धूपदीपनैवेद्यान्ते कुरुकुल्लाबलिं वटुकगणपदुर्गाक्षेत्रेशबलिं च दत्त्वा जपादिकं शेषं समापयेत्। अत्र पञ्चदशनित्यास्वपि पूजादौ सर्वभूतबलिं पूजान्ते सप्ताक्षर्या कुरुकुल्लाबलिं दद्यात्।

।।इति कामेश्वरीनित्यायजनविधिः।।

## २. श्री भगमालिनी नित्या

ध्यानम्

अरुणामरुणाकल्पां सुन्दरीं सुस्मिताननाम्। त्रिनेत्रां बाहुभिः षड्भिरुपेतां कमलासनाम्।।१।।
कल्हारपाशपुण्ड्रेक्षुकोदण्डान्वामबाहुभिः। दधानां दक्षिणैः पद्ममङ्कुशं पुष्पसायकम्।।२।।
तथाविधाभिः परितो वृतां शक्तिगणैस्तुतैः। अक्षरोत्थाभिरन्याभिः स्मरोन्मादमदात्मभिः।।३।।
पञ्चत्रिंशच्छतार्णैस्तैः रूपिणी शक्तिपञ्चकम्। सप्ताक्षरीं च संयोज्य शक्तीस्तत्संख्यका यजेत्।।४।।

**Dhyana Sloka**

2. "She is beautiful and red, of smiling countenance, three-eyed, six-armed, seated on a lotus. She carries the night-water-lily, noose, sugarcane bow in Her left hands, in the right hands She holds a lotus, a goad, and flowery arrows. She is surrounded by *Shaktis* on all sides like Herself."

**Efficacy:—** Sri Bhagamalini Devi gives worshipper the power to attract others, besides rendering strength to win over enemies in case of women, She protects the pregnant ladies for safer delivery and prevents abortions and premature births and gives fertility

**वाग्बीजं भगकर्णाढ्यानिद्रा गेभगिनीति च । भगोदरीतिवर्णान्ते भगमाले भगावहे ।।१०।।**
**भगगुह्ये भगान्तेस्याद्योने भगनिपातिनि । सर्वान्ते भगशब्दान्ते वशङ्करिभगेति च ।।११।।**
**रूपे नित्यपदं क्लिन्ने भगस्वाग्निः सदीपकः । पेसर्वभस्मृतिर्दीर्घानिमेह्यानयवाग्नयः ।।१२।।**
**देरेते सुसझिण्टीशः पावकस्तेभगार्णकाः। क्लिन्ने क्लिन्नद्रवेक्लेदयद्रावय च केशवः ।।१३।।**
**मोधे भगान्ते विच्चे च क्षुभक्षोभयसर्व च । सत्त्वान्भगेश्वरिप्रान्ते वाग्ब्लूं जंब्लूं च भेंपुनः ।।१४।।**
**ब्लूं मोंब्लूं हेंपुनर्ब्लूं होंक्लिन्ने सर्वाणि भाक्षरम् । गानिमेवशमानान्ते मारुतः स्त्रीं हरेति च ।।१५।।**
**ब्लें मायाङ्गत्रिभूवर्णाप्रोदिताभगमालिनी ।**

**२. भगमालिनी मन्त्र का उद्धार—** वाग् बीज (ऐं) फिर 'भग' एवं कर्णाढ्या निद्रा (भु) फिर 'गे भगिनि' 'भगोदरि' भगमाले भगावहे, 'भगगुह्ये भग' के बाद 'योनेभगनिपातिनि' सर्व 'भग' 'वशंकरिभग' 'रूपेनित्य' 'क्लिन्ने भगस्व' तथा सदीपक अग्नि (रू) फिर 'पे सर्वभ' एवं दीर्घास्मृति (गा) फिर 'न मे ह्यानय व' एवं अग्नि (र) फिर 'देरेतेसु' एवं संझिटीश पावक (रे) फिर 'ते भग' 'क्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय' एवं केशव (अ) फिर 'मोघे भग' 'विच्चे' 'क्षुभक्षोभय सर्व' 'सत्वान् भगेश्वरि' फिर वाक् (ऐं) 'ब्लूं जं ब्लूं' 'में' 'ब्लू मों ब्लूं हें' 'सर्वाणिभ' 'गानिमेवशमान' एवं मारुत (य) फिर 'स्त्रीं हर' 'ब्लें' और अन्त में माया (ह्रीं) लगाने से १३६ अक्षर का भगमालिनी का मन्त्र बतलाया गया है।

३. श्रीभगमालिनी गायत्रीमन्त्र— **ॐ भगमालिन्यै सर्ववशंक्यै-धीमहि विद्यमहे तन्नो नित्या प्रचोदयात्।**

४. भगमालिनी का मन्त्र—**ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये-भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभक्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लू जं ब्लू में ब्लू मों ब्लूं हें ब्लू हों क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं।**

५. पूजा मन्त्र—**आं 'ऐं भगभुगे....०'' भगमालिनी नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

६. गायत्री—**ॐ भगमालिन्यै विद्महे सर्ववशंकर्यै धीमहि तन्नो नित्या प्रचोदयात्।**

## श्रीभगमालिनी नित्या मातृकान्यासः

अस्य श्रीभगमालिनी महामन्त्रस्य। मदन ऋषि:। **त्रिष्टुप्छन्दः**
श्रीभगमालिनी **देवता**। **ऐं** बीजं। **ह्रीं** शक्ति: **ब्लूं** कीलकम्

**ॐ ब्लां** अङ्गुष्ठाभ्यां नम: **ॐ ब्लां** हृदयाय नम:
**ॐ ब्लूं** तर्जनीभ्यां नम: **ॐ ब्लूं** शिरसे स्वाहा
**ॐ ब्लें** मध्यमाभ्यां नम: **ॐ ब्लें** शिखाये वषट्
**ॐ ब्लैं** अनामिकाभ्यां नम: **ॐ ब्लैं** कवचाय हुम्
**ॐ ब्लौं** कनिष्ठिकाभ्यां नम: **ॐ ब्लौं** नेत्रत्रयाय वौषट्
**ॐ ब्लः** करतलपृष्ठभ्यां नम: **ॐ ब्लः** अस्त्राय फट

भू र्भुवस्वरोमिति इति दिग्बन्ध:

ध्यानम्

**भगरूपां भगमयां दुकूलवसनां शिवां ।**
**सर्वालङ्कारसंयुक्तां सर्वलोकवशङ्करीम् ।।**
**भगोदरीं महादेवीं रक्तोत्पलसमप्रभाम् ।**
**कामेश्वराङ्कनिलयां वन्दे श्रीभगमालिनीम् ।**

पञ्चपूजा

लमिति पञ्चपूजा

**न्यासः**

| | | | |
|---|---|---|---|
| **ॐ ऐं ह्रीं श्रीं** | **अं भगमालिन्यै** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं** | **आं भगायै** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं** | **इं भाग्यायै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **ई भगिन्यै** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **उं भगोदर्यै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं** | **ऊं गुह्यायै** | **नमः हंसः** | वामकर्णे |
| **ॐ ऐं ह्रीं श्रीं** | **ऋं दाक्षायण्यै** | **नमः हंसः** | दक्षनासटे |
| **ॐ ऐं ह्रीं श्रीं** | **ॠं कन्यायै** | **नमः हंसः** | वामनासटे |
| **ॐ ऐं ह्रीं श्रीं** | **लृं दक्षयज्ञविनाशिन्यै** | **नमः हंसः** | दक्षकपोले |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | ॡं जयायै | नमः हंसः | वामकपोलो |
| ॐ ऐं ह्रीं श्रीं | एं विजयायै | नमः हंसः | ऊर्ध्वोष्ठे |
| ॐ ऐं ह्रीं श्रीं | ऐं अजितायै | नमः हंसः | अधरोष्ठे |
| ॐ ऐं ह्रीं श्रीं | ओं चापराजितायै | नमः हंसः | ऊर्ध्वदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | औं सुदीप्तायै | नमः हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | अं लेलिहानायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं | अः करालायै | नमः हंसः | कण्ठे |
| ॐ ऐं ह्रीं श्रीं | कं स्वरशल्यै | नमः हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | खं आकाशनिलयायै | नमः हंसः | दक्ष कूर्परे |
| ॐ ऐं ह्रीं श्रीं | गं ब्राह्मै | नमः हंसः | दक्षमणिबन्धो |
| ॐ ऐं ह्रीं श्रीं | घं बालायै | नमः हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ङ ब्रह्मचारिण्यै | नमः हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | चं बाह्यास्यरतायै | नमः हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | छं प्रह्वयै | नमः हंसः | वाम कूर्परे |
| ॐ ऐं ह्रीं श्रीं | जं सावित्र्यै | नमः हंसः | वाममणिबन्धो |
| ॐ ऐं ह्रीं श्रीं | झं ब्रह्मपूजितायै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ञं प्राज्ञायै | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | टं मात्रे | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं | ठं परायै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं | डं बुद्ध्यै | नमः हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं | ढं विश्वमात्रे | नमः हंसः | दक्षपादाङ्गुलीमूले |
| ॐ ऐं ह्रीं श्रीं | णं शाश्वत्यै | नमः हंसः | दक्षदाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | तं मैत्र्यै | नमः हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं | थं कात्यायिन्यै | नमः हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं | दं दुर्गायै | नमः हंसः | वामगुलफे |
| ॐ ऐं ह्रीं श्रीं | धं दुर्गसन्तारिणी परायै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | नं मूलप्रकृत्यै | नमः हंसः | वामपादाङ्गुल्यग्रे |

| | | | |
|---|---|---|---|
| ओं ऐं ह्रीं श्रीं | पं इशानायै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | फं पुंस्प्रदानेश्वर्यै | नमः हंसः | वामपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | बं आप्यायिन्यै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | भं पावन्यै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं | मं पवित्रायै | नमः हंसः | जठरे |
| ॐ ऐं ह्रीं श्रीं | यं मङ्गलायै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं | रं यमायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं | लं ज्योतिष्मत्यै | नमः हंसः | गलपृष्ठे |
| ॐ ऐं ह्रीं श्रीं | वं संहरिण्यै | नमः हंसः | वामकक्षे |
| ॐ ऐं ह्रीं श्रीं | शं सृष्ट्यै | नमः हंसः | हृदयादि दक्षकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | षं स्थित्यै | नमः हंसः | हृदयादि वामकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | सं अन्तकारिण्यै | नमः हंसः | हृदयदि दक्षपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | हं अघोरायै | नमः हंसः | हृदयादि वामपादाङ्गुल्यन्तं |
| ॐ ऐं ह्रीं श्रीं | ळं घोररूपायै | नमः हंसः | हृदयादि पादाङ्गुलयन्तं |
| ॐ ऐं ह्रीं श्रीं | क्षं शक्तियै | नमः हंसः | कटयादि पादाङ्गुलयन्तं |
| ॐ ऐं ह्रीं श्रीं | भगमालिन्यै | नमः हंसः | कटयादि ब्रह्मरन्ध्रान्तम् |

## *भगमालिनीनित्यायजनविधिः*

तत्र श्रीतन्त्रराजे—(८ प०)

**अथ षोडशनित्यासु तृतीयां भगमालिनीम् । शृणु देवि प्रवक्ष्यामि साङ्गां सावरणां क्रमात् ।।१।।**
**तदङ्गान्यथ तद्ध्यानं तदावरणदेवताः । तत्पूजायाः क्रममिति मन्त्रोद्धारस्तथैव च।।२(-३।९)**
**कामेश्वर्यादिरादिः स्याद्रसश्चाथ स्थिरा रसा । धरायुक् सचरा पश्चात् स्थिरा पश्चाद्रसः स्मृतः ।।३।।**
**स्थिराशून्येऽग्निसंयुक्ते रसः स्यात्तदनन्तरम् । स्थिरा भूसहिता गोत्रा सदाहोऽग्नी रसः स्थिरा ।।४।।**
**नभश्च मरुता युक्तं रसा चरसमन्विता । ततो रसः स्थिरा पश्चान्मरुता सह योजिता ।।५।।**
**अम्बु हंसश्च सचरो रसोऽथ स्यात् स्थिरायुतः । स्थिरा धरान्वितो हंसो व्याप्तेन च चरेण तु ।।६।।**
**रसः स्थिरा ततो व्याप्तं भूयुतं शून्यमग्नियुक् । रसः स्थिरा ततः साग्निः शून्यं जवियुतो मरुत् ।।७।।**
**रयः शून्यं चाग्नियुतं हृद्दाहः साम्ब्वतः परम्। रसः स्थिराम्बु च वियत् स्वयुतं प्राण एव च ।।८।।**
**दाहोऽग्नियुग्रहस्तस्मात् स्थिरा क्ष्मा दाहसंयुता । सचरः स्याज्जवी पूर्वविद्यतार्तीयतः क्रमात्।।९।।**

चतुष्टयमथार्णानां रसस्तदनु च स्थिरा । हृदम्बुयुक् क्ष्मया दाहः सचरः स्याज्जवी च हृत् ।।१०।।
दाहोऽम्बुमरुता युक्तो व्योम साग्नी रसस्तथा। स्थिरा त मरुता युक्ता शून्यं साग्नि नभश्चरौ।।११।।
हंसो व्याप्तमरुद्युक्तः शून्यं व्याप्तमतोऽम्बु च। दाहो गोत्रा चरयुता तथा दाहस्तथा रयः ।।१२।।
हृद्धरासहितं दाहरयौ चरसमन्वितौ । रसः स्थिरा ततः प्राणो रसाग्निसहितो भवेत् ।।१३।।
शून्ययुग्मं चरयुतं ततः पूर्वमतः परम् । शून्ययुग्मं च गोत्रा स्याद्दाहयुक्ताम्बुना चरः ।।१४।।
प्राणो रसाचरयुतो गोत्रा व्याप्तमतः परम् । गोत्रा दाहमरुद्युक्ता त्वम्बु व्याप्तमतो भवेत् ।।१५।।
वातो नभश्च भूयुक्तं वाश्चरेण समन्त्रितम् । रसः स्थिराम्ब्वग्नियुतं वायुयुग्मं चरान्वितम् ।।१६।।
ग्रासो धरायुतः पश्चाद्रसः शक्त्या समन्वितः। ग्रासो भूसहितो देवि रसो व्याप्तं ततश्च हृत् ।।१७।।
दाहेनाम्बु च हृत्पश्चाद्रयोऽम्बुमरुदन्वितः । शून्यं च केवलं भद्रे रसश्च सचरा स्थिरा ।।१८।।
वियदम्बुयुतं दाहस्त्वग्नियुक् स्वयुतः शुचिः । भूमी रसाक्ष्मास्वयुता पञ्चैकान्तरिताः स्थिताः ।।१९।।
तदन्तरितबीजानि स्वसंयुक्तानि पञ्च वै । तानि क्रमाज्ज्या सचरो रसो भूश्च नभोयुता ।।२०।।
हंसश्चरयुतो द्विः स्यात् ततः प्राणो रसाग्नियुक्। शून्ययुग्मं चरयुतं हृद्दाहोऽम्बुमरुद्युतः ।।२१।।
व्योमाग्निसहितं पश्चाद्रसश्च मरुता स्थिरा । शून्यं साग्नि नमः कुर्याच्चरेण सहितं प्रिये।।२२।।
अम्बु पश्चाद्वियत् तस्मान्नभश्च मरुदन्वितम् । शून्यं व्याप्तं च हृद्युक्तं रयदाहस्ववह्निभिः।।२३।।
हंसः सदाहोऽम्बुरसाचरस्वैः संयुतो भवेत् । हंसः स्याद् दाहवह्निस्वैर्युक्तमन्त्यमुदीरितम्।।२४।।
पञ्चत्रिंशच्छतार्णैः स्यान्नित्याऽसौ भगमालिनी । इति।

ऐं भगभुगे भगिनी भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐंब्लूंजंब्लूंभेंब्लूंमोंब्लूंहेंब्लूंहें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं ह ब्लें ह्रीं इति।।त्रिपुरार्णवे।

ऋषिरस्यातु सुभगो गायत्रीच्छन्द उच्यते। देवतेयं तु बीजं तु हरब्लेमात्मकं प्रिये ।।१।।
शक्ति श्रीबीजमन्त्यं तु कीलकं परमेश्वरि ।

इति। इयं, भगमालिनीनित्या। तन्त्रराजे—(८।३)

अङ्गानि मन्त्रवर्णैः स्यादाद्येन हृदुदीरितम् । ततश्चतुर्भिः शीर्षं स्याच्छिखा त्रिभिरुदीरिता ।।१।।
चतुष्टयत्रयैः शेषाण्यङ्गानि षडिति क्रमात् । अरुणामरुणाकल्पां सुन्दरीं सुस्मिताननाम् ।।२।।
त्रिनेत्रां बाहुभिः षडभिरुपेतां कमलासनाम् । कह्लारपाशपुण्ड्रेक्षुकोदण्डान् वामबाहुभिः ।।३।।
दधानां दक्षिणैः पद्ममङ्कुशं पुष्पसायकम् । तथाविधाभिः परितोवृतां शक्तिभिरात्मभिः ।।४।।
अक्षरोत्थाभिरन्याभिः स्मरोन्मादमदात्मभिः । पञ्चत्रिंशच्छतार्णैस्तै रूपिणीशक्तिपञ्चकम् ।।५।।

सप्ताक्षरीं च संयोज्य शक्तीस्तत्संख्यका यजेत् । मदनां मोहिनीं लोलां भञ्जनीमुद्यमां शुभाम् ।।६।।
ह्लादिनीं द्राविणीं प्रीतिं रतिं रक्तां मनोरमाम् । सर्वोन्मादां सर्वसुखां सभङ्गामभितोद्यमान् ।।७।।
अनल्पां व्यक्तविभवां विविधक्षोभविग्रहे। एताः स्युः शक्तयः पञ्चपञ्चाशद्भिः शतं त्विति ।।८।।
ताभिर्वृता तु तां देवीं पूजयेद्वाञ्छिताप्तये । अथ पूजाक्रमं देवि शृणु सर्वार्थदायकम् ।।९।।
येन विश्वं वशे भूयादपि स्थावरजङ्गमम्। चतुरस्त्रद्वयं कृत्वा कुर्याद् द्वारं तु पश्चिमे ।।१०।।
तन्मध्येऽब्जं पञ्चदलं कृत्वा तत्कर्णिकागतम् । योनिद्वयं ततो मध्ये तिर्यग्रेखाविधानतः ।।११।।
योनिः कुर्याच्च तत्संख्या योनयः परिकीर्तिताः । अग्राद्विलोमगास्तासु शक्तीः संस्थाप्य पूजयेत् ।।१२।।
मध्ये वृत्तद्वयं कृत्वा तत्र विंशतिरेखया । निष्पाद्य तावतीर्योनीर्मदनाद्याः समर्चयेत् ।।१३।।
वृत्तान्तराले त्वभितो यजेदङ्गानि षट् क्रमात् । तन्मध्ये भगमालां तामावाह्योक्तस्वरूपिणीम् ।।१४।।
संस्थापनादिभिर्युक्तामर्चयेदुपचारकैः । अर्घ्यामङ्गैश्च मूलेन संस्थाप्याभ्युक्ष्य मूलतः ।।१५।।
द्वारस्य पार्श्वयो रागद्वेषशक्ती तथार्चयेत् । शब्दस्पर्शौ तथा रूपं रसं गन्धं च पूर्ववत्।।१६।।
तदन्तवृत्तयोर्मध्ये षडङ्गानि तथार्चयेत् । तदन्तर्भगमालायां मदनाद्यास्तथार्चयेत् ।।१७।।
मध्यस्थदेवीमभितो यजेत्तान्यायुधान्यपि । ततो देवीं षोडशभिरुपचारैरुदीरितैः ।।१८।।
पूजयेदाद्यवर्णेन विदद्यात्तद्बलिद्वयम् । जपेदष्टोत्तरशतमग्रे देव्यास्तु नित्यशः ।।१९।।
प्राग्वदग्निमुखं कृत्वा होमं कुर्याद् दशांशतः । संयोज्य बिन्दौ तां प्राग्वन्मूलेनाभ्यर्च्य तां तथा।।२०।।
स्वात्मन्युद्वासयेदुक्तप्रकारेण महेश्वरि । देव्यात्मा वशयेद्विश्वं नरनारीनराधिपान् ।।२१।।

इति।। अथ प्रयोगः—तत्र प्राग्वदासनपूजनादियोगपीठन्यासान्तं कृत्वा मूलविद्यया प्राणायामत्रयं कृत्वा शिरसि **सुभगाय** ऋषये नमः। हृदये **श्रीभगमालिनीनित्यायै देवतायै नमः।** पादयोः श्रीं शक्तये नमः। **नाभौ** ह्रीं कीलकाय नमः, मुखे **गायत्रीच्छन्दसे नमः।** गुह्ये **हरब्लें बीजाय नमः।**
इति विन्यस्य, ममाभीष्टसिद्धये जपे विनियोगः, इति कृताञ्जलिरुक्त्वा,

**ॐ हृदयाय नमः। ॐ भगिनी शिखायै वषट्। ॐ भगमाले नेत्रत्रयाय वौषट्। ॐ भगसुभगे शिरसे स्वाहा। ॐ भगोदरि कवचाय हुम्। ॐ भगावहे अस्त्राय फट्,**

इति मन्त्रैः करषडङ्गन्यासं विधाय प्राग्वन्मूलविद्यया व्यापकं विन्यस्य अरुणामित्यादि यथोक्तरूपां ध्यात्वा, मानसपूजां विधाय स्वर्णादिपट्टे कुङ्कुमादिभिरन्तर्बहिर्विभागेन चतुरस्त्रद्वयेन चतुरङ्गुलान्तरालां समचतुरस्त्रां वीथीं कृत्वा, तस्याः पश्चिमभागे मध्ये द्वारं विधाय, तस्य चतुरस्त्रस्य मध्ये पञ्चदलं पद्मं विरच्य,

वृत्तद्वययुक्तायां तत्कर्णिकायां समत्रिरेखां कर्णिकामध्यवृत्तस्पष्टकोणाग्रकां यथामानां योनिं कृत्वा, तस्या एकां रेखां चतुर्विंशतिधा विभज्य तैरंशैस्त्रयोविंशतिचिह्नानि कृत्वा तस्यास्तिसृषु रेखास्वपि तथा कृत्वा, तेष्वेकांशमानमभितस्त्यक्त्वा तदन्तः प्राग्वत्समत्रिरेखां योनिं विधाय, तस्यां योन्यामेकां रेखामेकविंशतिधा विभज्य, तेषु विंशतिचिह्नानि प्रतिरेखमिति। रेखात्रयेऽपि प्रत्येकं कृत्वा, तेषु बाह्याभ्यन्तरचिह्नेषु चिह्नाच्चिह्नमिति क्रमेण पञ्चचत्वारिंशद् रेखास्तिर्यग्रूपाः प्रतिपार्श्वं विलिखेदिति। एवं कृते बाह्यरेखाग्राण्याभ्यन्तररेखाग्राणि च त्रिकोणानि पञ्चत्रिंशदधिकशतसंख्यानि सम्भवन्ति। तदन्तस्त्र्यस्त्ररेखात्रयस्पृष्टरेखं भ्रमेण वृत्तं निष्पाद्य तदन्तरेऽपि तद्व्यासपञ्चमांशमानभ्रमेण वृत्तं विधाय, तदन्तरेऽप्येकांशमाने वृत्तान्तरं कृत्वा पूर्ववृत्तयोर्विष्कम्भषोडशांशसहितं विष्कम्भमानं त्रिगुणीकृत्य, तत्र समुदायमानं दशधा विभज्य तेष्वेकैकांशेन चिह्नानि परितस्तद्वृत्तद्वये प्रतिवृत्तं दशदश विधाय, तेषु क्रमेण बाह्याभ्यन्तरं तस्माद्बाह्यमिति गोमूत्रिकाक्रमेण तिर्यग्रूपा विंशतिरेखा विलिखेत्। एवं कृते बाह्याभ्यन्तरवृत्तस्पष्टाग्राणि च त्रिकोणान्यभितो विंशतिसंख्यकानि सम्भवन्ति। इत्थं पूजाचक्रं निर्माय, प्राग्वत् पुरतः संस्थाप्य भगमालिनीविद्यया मूर्तिं संकल्प्यावाहनादिपुष्पोपचारान्ते देव्याः पृष्ठभागे वृत्ताभ्यन्तरे एव प्राग्वत् प्रकाशानन्दादिगुरुपङ्क्तित्रयं पूजयित्वा, पञ्चदलकर्णिकामध्यगतवृत्तद्वयान्तराले प्राग्वदग्नीशासुरवायव्यदेव्य-ग्रतस्तदादिचतुर्दिक्षु षडङ्गानि सम्पूज्य, द्वारस्य वामदक्षिणपार्श्वयोः।

**ॐ ऐं रागशक्ति पादुकां पूजयामि नमः।** **ॐ ऐं द्वेषशक्ति पादुकां पूजयामि नमः।**

इति सम्पूज्य, पञ्चदलकर्णिकामध्यगतयोनिद्वयान्तराले पञ्चत्रिंशदधिकशतशक्तीः सम्पूज्य, तदन्तर्वृत्तद्वयान्तरालस्थविंशतित्रिकोणेषु देव्यग्रमारभ्य, वामावर्तेन **ॐ ऐं मदनापादुकां पूजयामि नमः।** एवं

**ॐ ह्रीं श्रीं मोहिनी पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं रक्ता पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं लोला पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं मनोरमा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं भञ्जिनी पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं सर्वोन्मादा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं उद्यमा पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं सर्वसुखा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं शुभा पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं अभङ्गा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं ह्लादिनी पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं अभितोद्यमा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं द्राविणी पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं अनल्पा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं प्रीति पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं व्यक्तिविभवा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं रति पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं विविधविग्रहा पादुकां पूजयामि नमः।**
**ॐ ह्रीं श्रीं क्षोभविग्रहा पादुकां पूजयामि नमः।**

इति सम्पूज्य, तदन्तरा वृत्तवीथिं रेखाभिः षोढा विभज्य, तेषु षट्सु खण्डेषु देव्यग्रखण्डमारभ्य,

ॐ ऐं इक्षुकोदण्डाय नमः, एवं ॐ ह्रीं श्रीं पद्माय पादुकां पूजयामि नमः।
ॐ ह्रीं श्रीं पाशाय पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं अंकुशाय पादुकां पूजयामि नमः।
ॐ ह्रीं श्रीं कह्लाराय पादुकां पूजयामि नमः। ॐ ह्रीं श्रीं पुष्पसायकेभ्यो नमः,

इति सम्पूज्य तदन्तरा वृत्तवीथि सम्पूज्य धूपदीपादि सर्वं प्रागवत् समापयेत्, इति भगमालिनीनित्यायजनविधिः।

## ३. श्री नित्यक्लिन्ना नित्या

ध्यानम्।।

**अरुणामरुणाकल्यामरुणांशुकधारिणीम् । अरुणासृग्विलेपां तां चारुस्मेरमुखाम्बुजाम्।।१।।**
**नेत्रत्रयोल्लसद्वक्त्रां भाले घर्माम्बुमौक्तिकैः । विराजमानां मन्दारलसदर्द्धेन्दु शेखराम्।।२।।**
**चतुर्भिर्बाहुभिः पाशमङ्कुशं पानपात्रकम् । अभयं बिभ्रतीं पद्ममध्यासीनां मदालसाम्।।३।।**

**Dhyana Sloka**

1. "She is red with red raiment and smeared with red sandal-paste. She smiles. Three eyes enhance the beauty of Her face. On Her forehead are beads of sweat shining like pearls. Above it is the half-moon. In Her four hands She holds the noose, goad, drinking cup, and with the last hand makes the gesture dispelling fear. She is seated in the middle of the lotus, listless with desire." (Madalasa.)

**Efficacy:—** Ladies will be very congenial with their life partners, Show them their affection in thought, word and deed. The Devi gives the family a feeling of Unity ie. parents and children will show mutual love and affinity

**नित्यक्लिन्ने मदद्रान्ते पद्मनाभयुतञ्जलम् ।।१६।।**
**मायाद्याग्निप्रियान्तेयं नित्यक्लिन्नाशिवाक्षरः ।**

**२. नित्यक्लिन्ना के मन्त्र का उद्धार—** 'नित्यक्लिन्ने मदद्र' के बाद पद्मनाभ सहित जल (वे) तथा प्रारम्भ में माया (ह्रीं) और अन्त में अग्नि प्रिया (स्वाहा) लगाने से ११ अक्षर का नित्यक्लिन्ना का मन्त्र बनता है। (मन्त्र भेदः)

३. नित्यक्लिन्ना का मन्त्र— **ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा।**

४. इनका पूजन मन्त्र— **इं 'ह्रीं नित्यक्लिन्ने.......०'' नित्य क्लिन्ना नित्या श्री पादुकां पूजयामि तर्पयामि नमः।**

**५.** श्रीनित्यक्लिन्ना गायत्री मन्त्र— **ॐ नित्यक्लिन्नायै विद्महे नित्यमदद्रवायै धीमहि तन्नो नित्या प्रचोदयात्।**

## *श्रीनित्यक्लिन्ना नित्या मातृका न्यासः*

अस्य श्री नित्यक्लिन्ना नित्या महामन्त्रस्य ब्रह्माऋषिः। विराटछन्दः। श्री नित्यकिलिन्ना देवता ह्रां बीजम्। स्वाहा शक्तिः क्लीं कीलकम्।

| | | |
|---|---|---|
| ॐ ह्रां अङ्गुष्ठाभ्यां | नमः | ॐ ह्रां हृदयाय नमः |
| ॐ ह्रीं तर्जनीभ्यां | नमः | ॐ ह्रीं शिरसे स्वाहा |
| ॐ ह्रूं मध्यमाभ्यां | नमः | ॐ ह्रूं शिखायै वषट् |
| ॐ ह्रें अनामिकाभ्यां | नमः | ॐ ह्रें कवचाय हुम् |
| ॐ ह्रैं कनिष्ठिकाभ्यां | नमः | ॐ ह्रैं अस्त्रायफट् |
| ॐ ह्रैं करतलपृष्ठाभ्यां | नमः | ॐ ह्रैं नेत्रत्रयाम वौषट् |

भू भुर्वस्वरोमि इति दिग्बन्धः

ध्यानम् :—

**पद्मरागमणिप्रख्यां हेमताटङ्कभूषितां । रक्तवस्त्रधरां देवीं रक्तमाल्यानुलेपनाम् ।।**

**अञ्जनाञ्चितनेत्रा तां पद्मपत्रनिभेक्षणाम्। नित्यक्लिन्नां नमस्यामि चतुर्भुजविराजिताम्।।**

पञ्चपूजा

लमिति पञ्चपूजा

**न्यासः**

| | | | |
|---|---|---|---|
| **ॐ ऐं ह्रीं श्रीं** | **अं नित्यकिलिन्नंये** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं** | **आं नित्यमदद्रवे** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं** | **इं विश्वरूपिण्यै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **ई योगेश्वर्यै** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **उं योगगम्यायै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं** | **ऊं योगमात्रे** | **नमः हंसः** | वामकर्णे |
| **ॐ ऐं ह्रीं श्रीं** | **ऋ वसुन्धरायै** | **नमः हंसः** | दक्षनासापुटे |
| **ॐ ऐं ह्रीं श्रीं** | **ॠं धन्यायै** | **नमः हंसः** | वामनासापुट |
| **ॐ ऐं ह्रीं श्रीं** | **लृं धनेश्वर्यै** | **नमः हंसः** | दक्षकपोले |
| **ॐ ऐं ह्रीं श्रीं** | **लॄं धान्यायै** | **नमः हंसः** | वामकपोले |

| | | | | |
|---|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | एं रत्नादायै | नमः | हंसः | ऊर्ध्वोष्ठे |
| ॐ ऐं ह्रीं श्रीं | ऐं पशुवर्धिन्यै | नमः | हंसः | अधरोष्ठे |
| ॐ ऐं ह्रीं श्रीं | ओं कूष्माण्डायै | नमः | हंसः | ऊर्ध्वदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | औं दारुण्यै | नमः | हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | अं चण्ड्यै | नमः | हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं | अः स्वराणां शक्त्यै | नमः | हंसः | कण्ठे |
| ॐ ऐं ह्रीं श्रीं | कं घोरायै | नमः | हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | खं घोरस्वरूपायै | नमः | हंसः | दक्षकूर्परे |
| ॐ ऐं ह्रीं श्रीं | गं मातृकायै | नमः | हंसः | दक्षमणिबन्धो |
| ॐ ऐं ह्रीं श्रीं | घं माधव्यै | नमः | हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ङ दक्षायै | नमः | हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | चं एकाक्षरायै | नमः | हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | छं विश्वमूर्त्यै | नमः | हंसः | वामकूर्परे |
| ॐ ऐं ह्रीं श्रीं | जं विश्वायै | नमः | हंसः | वाममणिबन्धो |
| ॐ ऐं ह्रीं श्रीं | झं विश्वेश्वर्यै | नमः | हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ञं ध्रुवायै | नमः | हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | टं शर्वायै | नमः | हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं | ठं क्षमादिभूतात्मायै | नमः | हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं | डं भूतिदायै | नमः | हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं | ढं भूतिवर्धिन्यै | नमः | हंसः | दक्षपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | णं भूतेश्वरप्रियायै | नमः | हंसः | दक्षपादांङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | तं भूतिर्भूतमालायै | नमः | हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं | थं यौवन्यै | नमः | हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं | दं वैदेहीपूजितायै | नमः | हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं | धं सीतायै | नमः | हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | नं मायावीयै | नमः | हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | पं भववाहिन्यै | नमः | हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | फं सत्वस्थायै | नमः | हंसः | वामपार्श्वे |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | बं सत्वनिलयायै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | भं सत्वासत्वचिकीर्षणायै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं | मं विश्वस्थायै | नमः हंसः | जठरे |
| ॐ ऐं ह्रीं श्रीं | यं विश्वनिलयायै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं | रं श्रीफलायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं | लं श्रीनिकेतनायै | नमः हंसः | गलपृष्ठे |
| ॐ ऐं ह्रीं श्रीं | वं श्रियै | नमः हंसः | वामकक्षे |
| ॐ ऐं ह्रीं श्रीं | शं शशाङ्कधरायै | नमः हंसः | हृदयादि दक्षकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | षं नन्दायै | नमः हंसः | हृदयादि वामकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | सं अम्बिकायै | नमः हंसः | हृदयदि दक्षपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | हं आनन्दायै | नमः हंसः | हृदयादि वामपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | ळं अनादिनिधनायै | नमः हंसः | कटयादि पादांगुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | क्षं आनन्दकलिकायै | नमः हंसः | कटयादि ब्रह्मरन्ध्रान्तम् |

## *नित्यक्लिन्ना नित्या पूजाविधिः*

तत्र श्रीतन्त्रराजे—(९ प०। श्लो० १)

**अथ षोडशनित्यासु चतुर्थी शृणु पार्वति। नित्यक्लिन्नाभिधानां तां तन्मन्त्रं प्रागुदीरितम्।।१।।**

इति। तदुद्धारस्तु तत्रैव—(३।३२)

**हंसस्तु दाहवह्निस्वैर्युक्तः प्रथममुच्यते। कामेश्वर्यास्तृतीयादिवर्णानामष्टकं भवेत् ।।१।।**

**हृदम्बु मरुता युक्तं हंसश्च मरुता युतः। एकादशाक्षरी नित्यक्लिन्ना नित्या समीरिता ।।२।।**

इति। तथा— "**तदङ्गानि च तद्ध्यानं तच्छक्तीस्ताभिरर्चनम्।**" इति। त्रिपुरार्णवे—

**ऋषिर्ब्रह्मा समुद्दिष्टो विराट् छन्द इतीरितम्। नित्यक्लिन्ना देवतोक्ता वनिता द्राविणी परा।।१।।**

**बीजमाद्यं वह्निजाया शक्तिर्त्रेकीलकं मतम्।**

इति। तन्त्रराजे—(९।३)

**आद्येन मन्त्रवर्णेन हृदयं समुदीरितम्। ततो द्वाभ्यां पुनर्द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयेन च।।१।।**

**कुर्याच्छेषाणि चाङ्गानि करयोश्च न्यसेत् क्रमात्। तन्त्रे षडङ्गं यत्रोक्तं तत्र तत्र करद्वये ।।२।।**

न्यसेदङ्गुष्ठमूलादिकनिष्ठाग्रान्तमूद्ध्र्वगम् । शेषं तलद्वये न्यस्य हृद्दृक्श्रोत्रनसीर्द्वयोः ।।३।।
त्वचि ध्वजे च पायौ च पादयोरर्णकान् न्यसेत्। अरुणामरुणाकल्पामरुणांशुकधारिणीम् ।।४।।
अरुणस्त्रग्विलेपां तां चारुस्मेरमुखाम्बुजान्। नेत्रत्रयोल्लसद्वक्त्रां भाले घर्माम्बुमौक्तिकैः ।।५।।
विराजमानां मुकुटलसदर्धेन्दुशेखराम्। चतुर्भिर्बाहुभिः पाशमङ्कुशं पानपात्रकम् ।।६।।
अभयं बिभ्रतीं पद्ममध्यासीनां मदालसाम्। ध्यात्वैवं पूजयेन्नित्यक्लिन्नानित्यां स्वशक्तिभिः ।।७।।
क्षोभिणी मोहिनी लोला त्रिकोणादिषु शक्तयः। नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ।।८।।
मदद्रवा द्राविणी च द्रविणा चाष्टपत्रगा। मदाबिला मङ्गला च मन्मथार्ता मनस्विनी ।।९।।
मोहामोदा मानमयी माया मन्दा मनोवती। चतुरस्त्रगताः पूज्या मदारुणचलेक्षणाः ।।१०।।
मध्यनित्यासमाकारवर्णबाह्वायुधान्विताः । चतुरस्त्रद्वयं कृत्वा प्राक्प्रत्यक्द्वारसंयुतम् ।।११।।
तन्मध्येऽष्टदलं पद्मं तन्मध्ये त्र्यस्त्रकं तथा । अर्घ्यं षडङ्गमूलाभ्यां कृत्वा तां प्राङ्मुखोऽर्चयेत् ।।१२।।
चतुरस्त्रे पश्चिमादिनिर्ऋत्यन्तं भजेच्च ताम् । द्वारपार्श्वेषु कोणेषु दिक्षु ता दश पूजयेत् ।।१३।।
तदन्तरष्टपत्रेषु पश्चिमादिप्रदक्षिणम्। अर्चयेदष्टशक्तीस्तास्तदन्तर्योनिकोणगाः ।।१४।।
अग्र्यात्प्रदक्षिणं तिस्त्रः शक्तीश्चोक्तविधानतः। कर्णिकायोनिमध्यस्थदेशे वाय्वीशवह्निषु ।।१५।।
निर्ऋत्यां पुरतो दिक्षु यजेदङ्गानि षट् क्रमात्। ततो देवीं तु तां नित्यां नित्यक्लिन्नामुदीरितैः ।।१६।।
उपचारैरर्चयेच्च बलिं दद्याच्च पूर्ववत्। तदग्रतो जपेद्विद्यां सहस्त्रं यदि वा शतम् ।।१७।।
ततोऽभ्यर्च्य शिवां होमं कुर्यादुक्तक्रमेण तु । आज्यसिक्तान्धसाज्येन पुष्पैर्वा सौरभान्वितैः ।।१८।।
जुहुयात् प्राग्वदुदितसंख्यं प्राग्वत् समापयेत्। अभ्यर्च्य देवीमथ तां स्वात्मन्युद्वास्य पूर्ववत् ।।१९।।
न्यासं कृत्वा स्तोत्रयुगं जपित्वा तन्मयंश्चरेत् ।इति।।

**अथ प्रयोगः—** तत्र प्राग्वदासनपूजादियोगपीठन्यासान्ते नित्यक्लिन्नाविद्यया प्राणायामत्रयं कृत्वा,

शिरसि **ॐ ब्रह्मणे ऋषये नमः।** **श्रीनित्याक्लिन्नानित्यायै** मुखे **ॐ विराज छन्दसे**
हृदये **ॐ** **देवतायै नमः।** **नमः।** गुह्ये **ॐ ह्रीं बीजाय**
पादयोः **ॐ स्वाहा शक्तये नमः।** **नमः।** नाभौ **ॐ न्ने**
**कीलकाय नमः,**

इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुवत्वा ह्रीं

**ॐ हृदयाय नमः।** **ॐ क्लिन्ने** शिखायै वषट्। **ॐ द्रवे** नेत्रत्रयाय वौषट्।
**ॐ नित्य शिरसे स्वाहा।** **ॐ मद कवचाय हुम्।** **ॐ स्वाहा** अस्त्राय फट्,

इति करषडङ्गन्यासं कृत्वा,

हृदये **ॐ ह्रीं नमः।** वामे **ॐ न्नेंनमः।** लिङ्गे **ॐ वेंनमः।**
दक्षनेत्रे **ॐ निंनमः।** दक्षिणनासायां **ॐ मंनमः।** गुदे **ॐ स्वांनमः।**
वामे **ॐ त्यंनमः।** वामे **ॐ दंनमः।** पादयोः **ॐ हांनमः,**
दक्षश्रोत्रे **ॐ क्लि नमः।** त्वचि **ॐ द्रंनमः।**

इति विन्यस्य प्राग्वन्मूलविद्यया व्यापक कृत्वा, ध्यानादिमानसपूजान्ते स्वर्णादिपट्टे कुङ्कुमादिना पूर्वपश्चिमयोर्द्वारद्वययुतं चतुरस्रद्वयं कृत्वा, तन्मध्येऽष्टदलपद्मं निर्माय तत्कर्णिकायां स्वाभिमखाग्रं त्रिकोणं कृत्वा, प्राग्वत् स्वपुरतः संस्थाप्याभ्यर्च्यार्घ्यादिस्थापनाद्यात्मपूजान्ते भुवनेश्वरीपीठमभ्यर्च्य, तत्र नित्यक्लिन्नाविद्यया तन्मूर्ति परिकल्प्यावाहनादिपुष्पोपचारान्ते कोणान्तः प्राग्वद् देवीं परितः षडङ्गानि सम्पूज्य, तद्बहिर्देव्याः पृष्ठभागे प्राग्वत् प्रकाशानन्दादिगुरुपङ्क्तित्रयमभ्यर्च्य, चतुरस्रे देव्यग्रतस्तद्द्वारस्य दक्षिणे **ॐह्रींश्रीं मदाबिलापादुकां पूजयामि नमः।** उत्तरे

**ॐ ह्रीं श्रींमङ्गला पादुकां पूजयामि नमः।** **ॐ ह्रीं मानमयी पादुकां पूजयामि नमः।**
**ॐ ह्रीं मन्मथार्ता पादुकां पूजयामि नमः।** **ॐ ह्रीं माया पादुकां पूजयामि नमः।**
**ॐ ह्रीं मनस्विनी पादुकां पूजयामि नमः।** **ॐ ह्रीं मन्दा पादुकां पूजयामि नमः।**
**ॐ ह्रीं मोहा पादुकां पूजयामि नमः।** **ॐ ह्रीं मनोवती पादुकां पूजयामि नमः,**
**ॐ ह्रीं आमोदा पादुकां पूजयामि नमः।**

इति प्रादक्षिण्येन सम्पूज्यान्तस्त्रिकोणेषु देव्यग्रकोणमारभ्य

**ॐ ह्रीं क्षोभिणी पादुकां पूजयामि नमः,** **ॐ ह्रीं लोला पादुकां पूजयामि नमः,**
**ॐ ह्रीं मोहिनी पादुकां पूजयामि नमः,**

इति प्रादक्षिण्येन सम्पूज्य, पुनर्मध्ये नित्यक्लिन्नां तद्विद्यया सम्पूज्य धूपदीपादिकं सर्वं कृत्वा प्राग्वत् समापयेत्, इति नित्यक्लिन्नानित्यायजनविधिः।।

## ४. श्री भेरुण्डा नित्या

ध्यानम्।।

**तप्तकाञ्चनसङ्काशदेहां नेत्रत्रयान्विताम् । चारुस्मिताञ्चितमुखीं दिव्यालङ्कारभूषिताम् ।।१।।**
**ताटङ्कहारकेयूर रत्नवस्त्रकमण्डिताम् । रशनानूपुरोर्म्यादि भूषणैरतिसुन्दरीम् ।।२।।**

पाशाङ्कुशौ चर्मखड्गौ गदावज्रधनुःशरान् । करैर्दधानामासीनां पूजायामन्यदा स्थिताम् ।।३।।

शक्तीश्च तत्समाकारतेजोहेतिभिरन्विताः । पूजयेत्तद्वदभितः स्मितः सौम्यमुखः सदा ।।४।।

## Dhyana Slokas

1. "Her body is like molten gold. She has three eyes and Her face is lit with smiles. She is adorned with ornaments of celestial beauty, with earrings, necklace, armlets, waiste-chain and rings on hands and feet. She carries the noose, goad, shield, sword, mace and thunderbolt (*Vajra*) and bow."

**Efficacy :—** The Devi assures us a good health and prevents one from death due to in-take of poison. Protector of Body and Soul.

**बान्तोरेफासनस्तारसंयुतोङ्कुशसम्पुटः ।।१७।।**
**चवर्गवर्णाश्चत्वारोवह्निमन्बिन्दुसंयुताः ।**
**बह्निप्रियान्तस्ताराद्योभेरुण्डायादशाक्षरः।।१८।।**

**२. भेरुण्डा मन्त्र का उद्धार**— तार संयुत रेफासन बान्त (भ्रों)—यह अंकुश (क्रों) से सम्पुटित (क्रों भ्रों क्रों) फिर वह्नि, मनु एवं बिन्दु संयुक्त चवर्ग के ४ वर्ग (च्रौं छ्रौं ज्रौं झ्रौं) और अन्त में अग्निप्रिया (स्वाहा) तथा प्रारम्भ में तार (ॐ) लगाने से १० अक्षर का भेरुण्डा का मन्त्र बनता है।

३. भेरुण्डा का मन्त्र— **ॐ क्रों भ्रों क्रों च्रौं छ्रौं ज्रौं झ्रौं स्वाहा। (मन्त्र भेदः)**

४. इनका पूजन मन्त्र— **ईं ॐ क्रों भ्रों...०'' भेरुण्डा नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

५. भेरुण्डा गायत्री मन्त्रः— **भेरुण्डायै विद्महे विषहरायै धीमहि तन्नो नित्या प्रचोदयात्।**

### *श्रीभेरूण्डा नित्या न्यासः*

अस्यश्री श्री भेरूण्डा नित्या महामन्त्रस्य। महाविष्णु ऋषिः। गायत्रीछन्दः। श्री भेरूण्डा नित्या देवता। भ्रों बीजम् स्वाहा शक्तिः। क्रों कीलकम्

**ॐ भ्रां** अंगुष्ठाभ्यां **नमः ॐ भ्रां** हृदयाय **नमः**
**ॐ भ्रीं** तर्जनीभ्यां **नमः ॐ भ्रीं** शिरसे **स्वाहा**
**ॐ भ्रूं** मध्यमाभ्यां **नमः ॐ भ्रूं** शिखायै **वषट्**
**ॐ भ्रों** अनामिकाभ्यां **नमः ॐ भ्रों** कवचाय **हुम्**

**ॐ भ्रौं** कनिष्ठिकाभ्यां **नमः ॐ भ्रौं** नेत्रत्रयाय **वौषट्**

**ॐ भ्रः** करतलपृष्ठाभ्यां **नमः ॐ भ्रः** अस्त्राय **फट्**

**ॐ भूर्भुवस्वरों** मिति दिग्बन्धः

ध्यानम्

**शुद्धस्फटिकसंकाशां पद्मपत्रसमप्राभम्। मध्याह्लादित्यसंकाशां शुभ्रवस्त्रसमन्वितां ।।**

**श्वेतचन्दन लिप्तांगीं शुभ्रमाल्यविभूषिताम्। बिभ्रतीं चिन्मयां मुद्रामक्षमालं च पुस्तकम्।**

**सहस्त्रपद्मकमले समासीनां शुचिस्मिताम्। सर्वविद्याप्रदाम् देवीं भेरूण्डां प्रणमाम्यहम् ।**

पञ्चपूजाः—

लमिति पञ्चपूजा

| | | | |
|---|---|---|---|
| ॐ ऐं ह्लीं श्रीं | अं भेरूण्डायै | नमः हंसः | शिरसि |
| ॐ ऐं ह्लीं श्रीं | आं भैरव्यै | नमः हंसः | मुखावृत्ते |
| ॐ ऐं ह्लीं श्रीं | इं साध्व्यै | नमः हंसः | दक्षनेत्रे |
| ॐ ऐं ह्लीं श्रीं | ईं नताख्यानन्तसम्भवायै | नमः हंसः | वामनेत्रे |
| ॐ ऐं ह्लीं श्रीं | उं त्रिगुण्यै | नमः हंसः | दक्षकर्णे |
| ॐ ऐं ह्लीं श्रीं | ऊं घोषिणयै | नमः हंसः | वामकर्णे |
| ॐ ऐं ह्लीं श्रीं | ऋं घोषायै | नमः हंसः | दक्षनास्पुटे |
| ॐ ऐं ह्लीं श्रीं | ॠं लक्ष्म्यै | नमः हंसः | वामनास्पुटे |
| ॐ ऐं ह्लीं श्रीं | लृं पुष्टायै | नमः हंसः | दक्षकपोले |
| ॐ ऐं ह्लीं श्रीं | लॄं शुभायै | नमः हंसः | वामकपोले |
| ॐ ऐं ह्लीं श्रीं | एं लयायै | नमः हंसः | ऊर्ध्वोष्ठे |
| ॐ ऐं ह्लीं श्रीं | ऐं धर्मायै | नमः हंसः | अधरोष्ठे |
| ॐ ऐं ह्लीं श्रीं | ओं दयायै | नमः हंसः | ऊर्ध्वदन्तपङ्क्तौ |
| ॐ ऐं ह्लीं श्रीं | औं धर्मबुद्ध्यै | नमः हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्लीं श्रीं | अं धर्माधर्मपुटच्छयायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्लीं श्रीं | अः ज्येष्टायै | नमः हंसः | कण्ठे |
| ॐ ऐं ह्लीं श्रीं | कं यमस्यै | नमः हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्लीं श्रीं | खं भगिन्यै | नमः हंसः | दक्षकूर्परे |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | गं चैलायै | नमः हंसः | दक्षमणिबन्धे |
| ॐ ऐं ह्रीं श्रीं | घं कौशेयवासिन्यै | नमः हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ङं भ्रमणायै | नमः हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | चं भ्रामिण्यै | नमः हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | छं भ्राम्यायै | नमः हंसः | वामकूर्परे |
| ॐ ऐं ह्रीं श्रीं | जं भ्रमायै | नमः हंसः | वाममणिबन्धे |
| ॐ ऐं ह्रीं श्रीं | झं ज्ञानापहारिण्यै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ञं माहेन्द्रीण्यै | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | टं वारूण्यै | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं | ठं सौम्यायै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं | डं कौवेर्यै | नमः हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं | ढं हव्यवाहिन्यै | नमः हंसः | दक्षपादाङ्गुलिमूले |
| ओं ऐं ह्रीं श्रीं | णं वायव्यै | नमः हंसः | दक्षपाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | तं नैर्ऋत्यै | नमः हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं | थं इशान्यै | नमः हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं | दं लोकपालैकरूपिण्यै | नमः हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं | धं मोहिन्यै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | नं मोहजनन्यै | नमः हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | पं स्मृत्यै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | फं वृत्तान्तबाधिन्यै | नमः हंसः | वामपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | बं यक्षाणां | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | भं जनन्यै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं | मं यक्ष्यै | नमः हंसः | जठरे |
| ॐ ऐं ह्रीं श्रीं | यं सिद्धिर्वेश्रवणालयायै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं | रं मेधायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं | लं श्रद्धायै | नमः हंसः | गलपृष्ठे |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | वं धृत्यै | नमः हंसः | वामकक्षा |
| ॐ ऐं ह्रीं श्रीं | शं प्राज्ञायै | नमः हंसः | हृदयादि दक्षकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | षं सर्वदेवनमस्कृतायै | नमः हंसः | हृदयादि वामकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | सं आशायै | नमः हंसः | हृदयदि दक्षपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | हं वाञ्छायै | नमः हंसः | हृदयादि वामपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | ळं निरीहेच्छायै | नमः हंसः | कट्यादि पादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | क्षं भूतानुवर्तिन्यै | नमः हंसः | कट्यादि ब्रह्मरन्ध्रान्तम् |

## *भेरुण्डा नित्या पूजाविधि*

तत्र श्रीतन्त्रराजे— (१० प० । श्लो: १)

**अथ षोडशनित्यासु भेरुण्डा पञ्चमी तु या । तद्विधानं शृणु प्राज्ञ कथयामि यथाविधि।।१।।**
**मन्त्रोद्धारस्तृतीयेऽभूदङ्गान्यावृतिदेवताः । पूजाक्रमं चे' इति।**

मन्त्रोद्धारस्तु तृतीयपटले—(३।३५)

**भूः स्वेन युक्ता प्रथमं प्राणो दाहेन तद्युतम् । रसो दाहेन तद्युक्तं प्राणो दाहवनस्वयुक्।।१।।**
**कं च दाहेन तद्युक्तं प्रभा दाहेन तद्युता । ज्या च दाहेन तद्युक्ता नित्यक्लिन्नान्ततो द्वयम्।।२।।**
**एषा नवाक्षरी नित्या भेरुण्डा सर्वसिद्धिदा।** इति।

**"ओं क्रों भ्रों क्रों झ्रों छ्रों ज्रों स्वाहा"। त्रिपुरार्णवे—**

**ऋषिरस्या महाविष्णुर्गायत्रीछन्द उच्यते। देवतेयं वरारोहे ओं, क्रों भ्रों तृतीयं बीजमुच्यते।।१।।**
**वह्निजाया तु शक्तिः स्यात् कीलकं सृणिरेव च ।** इति। तन्त्रराजे—(१० । ४)
**आद्यन्तद्वयमध्यस्थैः षड्भिः कुर्यात् षडङ्गकम्। रन्ध्राज्ञामुखकण्ठेषु हन्नाभ्याधारपद्द्वये।।१।।**
**न्यसेन्मन्त्रार्णनवकं मातृकान्यासपूर्वकम् । ततः शक्तीसवृतिस्था ध्यानं च शृणु पार्वति।।२।।**
**बाह्यावृतौ तु ब्रह्म्याद्या युगशक्तीश्च पूजयेत् । तदन्तरष्टपत्रेषु विजयां विमलां शुभाम्।।३।।**
**विश्वां विभूतिं विनतां विविधां विमलां क्रमात्। तदन्तरष्टकोणेषु कमलां कामिनीं तथा।।४।।**
**किरातीं कीर्तिसहितां कुर्दिनीं कुलसुन्दरीम् । कल्याणीं काककोलां च पूजयेदुक्तयोगतः।।५।।**
**डाकिनीं राकिणीं तद्वल्लाकिनीं काकिनीं तथा। शाकिनीं हाकिनीं षट्सु कोणेषु क्रमतोऽर्च्चयेत्।।६।।**
**इच्छाज्ञानक्रियाशक्तीस्त्रिषु कोणेषु पूजयेत् । अष्टकोणान्तरालेषु पूजयेदायुधाष्टकम्।।७।।**
**चतुरस्त्रद्वयं कृत्वा चतुर्द्वारसमन्वितम् । तदन्तरष्टपत्राब्जं वृत्तयुग्ममथान्तरा।।८।।**

**अष्टास्त्रं भूपुरद्वन्द्वात्तच्च वृत्तसमन्वितम् । तदन्तस्तादृशं कुर्यात् षट्कोणं वा तु विग्रहम्।।९।।**
**तदन्तस्तादृशीं कुर्याद्योनिं तन्मध्यतो यजेत् । भेरुण्डां पञ्चमीं नित्यामुक्तशक्तिभिरावृताम्।।१०।।**
**अर्घ्यं षडङ्गमूलाभ्यां संसाध्य प्राङ्मुखो यजेत्। बलिं च षोडशार्णेन दद्यादाद्यन्तयोः क्रमात्।।११।।**
**अथ ध्यानं प्रवक्ष्यामि देव्याः सर्वार्थसाधकम् । तदावृत्तिस्थशक्तीनां क्रमेण शृणु पार्वति।।१२।।**
**तप्तकाञ्चनसङ्काशदेहां नेत्रत्रयान्विताम् । चारुस्मिताञ्चितमुखीं दिव्यालङ्कारभूषिताम्।।१३।।**
**ताटङ्कहारकेयूररत्नस्तवकमण्डिताम् । रसनानूपुरोर्म्यादिभूषणैरतिसुन्दरीम् ।।१४।।**
**पाशाङ्कुशौ खेटखड्गौ सदावज्रधनु शरान् । करैर्दधानामासीनां पूजायामन्यदास्थिताम्।।१५।।**
**शक्तीश्च तत्समाकारतेजोहेतिभिरन्विताः । पूजयेत्तद्वदभितः स्मितसौम्यमुखां सदा।।१६।।**
**एवं देवीमावृतिभिरावृतामर्चयेत् तथा । बालिर्माद्यन्तयोर्दद्यात् पूर्वोक्तविधिना युतम्।।१७।।**

इति। अथ प्रयोगः। तत्र प्राग्वदासनपूजादियोगपीठन्यासान्ते भेरुण्डाविद्यया प्राणायामत्रयं कृत्वा,

शिरसि **ॐ महाविष्णवे ऋषये नमः।** हृदये **श्रीभेरुण्डानित्यादेवतायै नमः।**

पादयोः **स्वाहाशक्तये नमः।** नाभौ **क्रों कीलकाय नमः,**

मुखे **गायत्रीच्छन्दसे नमः।** गुह्ये **भ्रां बीजाय नमः।**

इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा

**क्रों** हृदयाय नमः। **क्रों** शिखायै वषट्। **छों** नेत्रत्रयाय वौषट्।

**भ्रों** शिरसे स्वाहा। **झों** कवचाय हुम्। **ज्रों** अस्त्राय फट्,

इति करषडङ्गन्यासं कृत्वा,

ब्रह्मरन्ध्रे **ॐ नमः।** कण्ठे **क्रों नमः।** मूलाधारे **ज्रों नमः।**

आज्ञायां **क्रों नमः।** हृदि **झ्रों नमः।** दक्षपादे **स्वां नमः।**

मुखे **भ्रों नमः।** नाभौ **छ्रों नमः।** वामपादे **हां नमः।**

इति विन्यस्य प्राग्वद्व्यापकं कृत्वा "तप्तकाञ्चनसङ्कासदेहा"मित्यादि ध्यात्वा मानसपूजान्ते प्राग्वत् स्वर्णादिपट्टे कुङ्कुमादिना चतुर्द्वारयुक्तं चतुरस्रद्वयं कृत्वा, तदन्तरष्टदलं पद्मं तदन्तर्वृत्तं तदन्तरष्टास्रं पुनस्तदन्तर्वृत्तं तदन्तः षट्कोणं तदन्तर्वृत्तं तन्मध्ये स्वाभिमुखाग्रत्रिकोणरूपां योनिं च कृत्वा, प्राग्वत् संस्थाप्याघ्यादिस्थापनाद्यात्मपूजान्ते प्राग्वद् भुवनेश्वरीपीठमभ्यर्च्यावाहननादि-प्राणप्रतिष्ठान्ते योनिमुद्रां प्रदर्श्यासनादिपुष्पोपचारान्ते योन्यन्तर्देव्यभितः प्राग्वत् षडङ्गानि सम्पूज्य, योनिहृत्तयोरन्तराले देव्याः पृष्ठभागे प्राग्वद्गुरुपङ्क्तित्रयमभ्यर्च्य, चतुरस्रद्वयपार्श्वयोः

**ॐ ह्रीं ब्राह्मी पादुकां पूजयामि नमः।** **ॐ ह्रीं माहेश्वरी पादुकां पूजयामि नमः,**

**ॐ ह्रीं कौमारी पादुकां पूजयामि नमः,** **ॐ ह्रीं वैष्णवी पादुकां पूजयामि नमः,**

पश्चिमद्वारपार्श्वयोः पूर्वद्वारस्योत्तरदक्षिणपार्श्वयोः

**ॐ ह्रीं वाराही पादुकां पूजयामि नमः, ॐ ह्रीं इन्द्राणी पादुकां पूजयामि नमः,**

**ॐ ह्रीं चामुण्डा पादुकां पूजयामि नमः, ॐ ह्रीं महालक्ष्मी पादुकां पूजयामि नमः,**

दक्षिणद्वारपार्श्वयोः इति सम्पूज्य, चतुरस्रवायुकोणे

**ॐ ह्रीं कृतयुगशक्ति पादुकां पूजयामि नमः,** ईशाने

**ॐ ह्रीं त्रेतायुगशक्ति पादुकां पूजयामि नमः,** आग्नेये

**ॐ ह्रीं द्वापरयुगशक्ति पादुकां पूजयामि नमः,** निर्ऋतिकोणे

**ॐ ह्रीं कलियुगशक्ति पादुकां पूजयामि नमः,**

इति सम्पूज्य, तदन्तरष्टदलेषु देव्यग्रदलमारभ्य प्रादक्षिण्येन

**ॐ ह्रीं विजया पादुकां पूजयामि नमः, ॐ ह्रीं विभूति पादुकां पूजयामि नमः,**

**ॐ ह्रीं विमला पादुकां पूजयामि नमः, ॐ ह्रीं विनता पादुकां पूजयामि नमः,**

**ॐ ह्रीं शुभा पादुकां पूजयामि नमः, ॐ ह्रीं विविधा पादुकां पूजयामि नमः,**

**ॐ ह्रीं विश्वा पादुकां पूजयामि नमः, ॐ ह्रीं विमना पादुकां पूजयामि नमः,**

इति सम्पूज्य, तदन्तरष्टकोणेषु देव्यग्रमारभ्य प्रादक्षिण्येन

**ॐ ह्रीं कमला पादुकां पूजयामि नमः, ॐ ह्रीं कुर्दिनी पादुकां पूजयामि नमः,**

**ॐ ह्रीं कामिनी पादुकां पूजयामि नमः, ॐ ह्रीं कुलसुन्दरी पादुकां पूजयामि नमः,**

**ॐ ह्रीं किराती पादुकां पूजयामि नमः, ॐ ह्रीं कल्याणी पादुकां पूजयामि नमः,**

**ॐ ह्रीं कीर्ति पादुकां पूजयामि नमः, ॐ ह्रीं कालकोला पादुकां पूजयामि नमः,**

इति सम्पूज्य, तदन्तः षट्कोणेषु देव्या वामाग्रकोणे

**ॐ ह्रीं डाकिनीपादुकां पूजयामि नमः,** दक्षिणाग्रकोणे

**ॐ ह्रीं राकिणीपादुकां पूजयामि नमः,** पृष्ठकोणे

**ॐ ह्रीं लाकिनीपादुकां पूजयामि नमः,** पृष्ठवामाग्रकोणे

**ॐ ह्रीं काकिनीपादुकां पूजयामि नमः,** दक्षिणपृष्ठकोणे

**ॐ ह्रीं शाकिनीपादुकां पूजयामि नमः,** देव्यग्रकोणे

**ॐ ह्रीं हाकिनीपादुकां पूजयामि नमः**

इति सम्पूज्य, ततस्त्रिकोणे देव्यग्रकोणमारभ्य प्रादक्षिण्येन

**ॐ ह्रीं इच्छाशक्ति पादुकां पूजयामि नमः, ॐ ह्रीं ज्ञानशक्ति पादुकां पूजयामि नमः,**
**ॐ ह्रीं क्रियाशक्ति पादुकां पूजयामि नमः,**

इति सम्पूज्याष्टकोणषट्कोणयोरन्तराले देव्या दक्षिणाग्रादितः पृष्ठदक्षिणाग्रान्तं स्थानचतुष्टयं परिकल्प्य

**ॐ ह्रीं शरेभ्यो नमः, ॐ ह्रीं खड्गाय नमः, ॐ ह्रीं अङ्कुशाय नमः, ॐ ह्रीं पाशाय नमः**

इति दक्षिणाधःकरादितदूर्ध्वकरान्तस्थान्यायुधानि सम्पूज्य, देव्याः पृष्ठवामभागमारभ्य वामाग्रावधि स्थानचतुष्टयं परिकल्प्य, तेषु

**ॐ ह्रीं गदायै नमः, ॐ ह्रीं चर्मणे नमः, ॐ ह्रीं धनुषे नमः, ॐ ह्रीं वज्राय नमः,**

इति सम्पूज्य प्राग्वल्लोकपालांस्तदायुधानि च सम्पूज्य, पुनर्मध्यस्थनित्यां तद्विद्यया सम्पूज्य धूपादिसर्वं प्राग्वत्समापयेत्, इति भेरुण्डानित्यापूजाविधिः।।

## ५. श्री वह्निवासिनी नित्या

ध्यानम्।

**तप्तकाञ्चनसङ्काशां नवयौवनसुन्दरीम् । चारुस्मेरमुखाम्भोजां विलसन्नयनत्रयाम्।।१।।**
**अष्टाभिर्बाहुभिर्युक्तां माणिक्याभरणोज्ज्वलाम्। पद्मरागकिरीटांशु सम्भेदारुणिताम्बराम्।।२।।**
**पीतकौशेयवसनां रत्नमञ्जीरमेखलाम् । रत्नमौक्तिकसम्भिन्नस्तबकाभरणोज्ज्वलाम्।।३।।**
**रक्ताब्जकम्बुपुण्ड्रेक्षुचापपूर्णेन्दुमण्डलाम् । दधानां बाहुभिर्वामैः कल्हारं हेमशृङ्गकम्।।४।।**
**पुष्पेषु मातुलिङ्गं च दधानां दक्षिणैः करैः । स्वसमानाभिरभितः शक्तिभिः परिवारिताम्।।५।।**

**1. Dhyana Sloka:—** "With the beauty of early youth She is lustrous like burning gold. Her lotus face with three eyes is lit by a gentle smile. She is eight armed and dressed in yellow silk with ruby ornaments. Such is the strength of the rays of the rubies on Her diadem that they make ruddy the surrounding region. Her radiance is enhanced by anklets and waist-chain of gems, pearls and other ornaments making clusters of jewels In Her left hands She holds a red lotus, a conch, a bow of red sugarcane and the full moon and in Her right hands a white water lily, a golden horn, flowery arrows and a citron (Matulungga). She is suroundeded on all sides by Shaktis like into Her."

**Efficacy:—** Bestows radiance in body, renders all wordly attainments and makes one unparallelled in the three worlds.

**मायान्ते वह्निवासिन्यैप्रणवाद्योनमोन्तिकः।**
**मन्त्रोयं वह्निवासिन्यानववर्णसमीरितः।।१९।।**

**२. वह्निवासिनी के मन्त्र का उद्धार—** माया (ह्रीं) के बाद "वह्निवासिन्यै" और अन्त में नमः तथा प्रारम्भ में प्रणव लगाने से वह्निवासिनी का ९ अक्षर का मन्त्र बतलाया गया है। (मंत्र भेदाः)

३. वह्निवासिनी का मन्त्र— **ॐ ह्रीं वह्निवासिन्यै नमः।**

४. वह्निवासिनी पूजन मन्त्र— **उं 'ॐ ह्रीं वह्निवासिन्यै नमः' वह्निवासिनीनित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

५. वह्निवासिनी गायत्री मन्त्र— **वह्निवासिन्यै विद्महे सिद्धिप्रदायै धीमहि तन्नो नित्या प्रचोदयात्।**

## *श्री वह्निवासिनी नित्या न्यासः*

अस्य श्रीवह्निवासिनी नित्या महामन्त्रस्य। वसिष्ठ ऋषिः गायत्रीछन्दः। श्रीवह्निवासिनीदेवता। ह्रीं बीजं नमः शक्तिः! ॐ कीलकम्।

| | | | |
|---|---|---|---|
| ॐ ह्रां अंगुष्ठाभ्याम् | नमः | ॐ ह्रां | हृदयाय **नमः** |
| ॐ ह्रीं तर्जनीभ्याम् | नमः | ॐ ह्रीं | शिरसे **स्वाहा** |
| ॐ ह्रूं मध्यमाभ्याम् | नमः | ॐ ह्रूं | शिखायै **वषट्** |
| ॐ ह्रे अनामिकाभ्याम् | नमः | ॐ ह्रे | कवचाय **हुम्** |
| ॐ ह्रैं कनिष्ठिकाभ्याम | नमः | ॐ ह्रैं | नैत्रत्रयाय**वौषट्** |
| ॐ ह्रौं करतलपुष्ठाभ्याम् | नमः | ॐ ह्रौ | अस्त्राय **फट्** |

ॐ भूर्भुवस्वरों इति दिग्बन्धः

ध्यानम्—

**वह्निकोटि प्रतीकाशां सूर्यकोटि समप्रभां । अग्निज्वाला समाकीर्णां सर्वरोगोपहारिणीं।।**
**कालमृत्युप्रशमनी भयमृत्युनिवारिणीं । परमायुष्यदां वन्दे नित्यां श्रीवह्निवासिनीं।।**

पञ्चपूजा लामिति पञ्चपूजाः—

| | | | |
|---|---|---|---|
| **ॐ ऐं ह्रीं श्रीं** | **अं वाह्निवासिन्यै** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं** | **आं वह्निनिलयायै** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं** | **इं वह्निरूपिण्यै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **ई यज्ञविद्यायै** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **उं महाविद्यायै** | **नमः हंसः** | दक्षकर्णे |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | ऊं ब्रह्मविद्यायै | नमः हंसः | वामकर्णे |
| ॐ ऐं ह्रीं श्रीं | ऋं गुहालयायै | नमः हंसः | दक्षनासपुटे |
| ॐ ऐं ह्रीं श्रीं | ॠं भूतेश्वर्यै | नमः हंसः | वामनासपुटे |
| ॐ ऐं ह्रीं श्रीं | लृं ब्रह्मधात्र्यै | नमः हंसः | दक्षकपोले |
| ॐ ऐं ह्रीं श्रीं | लॄं विमलायै | नमः हंसः | वामकपोले |
| ॐ ऐं ह्रीं श्रीं | एं कनकप्रभा | नमः हंसः | ऊध्वोष्ठे |
| ॐ ऐं ह्रीं श्रीं | ऐं विरूपाक्षायै | नमः हंसः | अधरोष्ठे |
| ॐ ऐं ह्रीं श्रीं | ओं विशालाक्ष्यै | नमः हंसः | ऊर्ध्वदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | औं हिरण्याक्ष्यै | नमः हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | अं शंताननायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं | अः त्र्यक्षायै | नमः हंसः | कण्ठे |
| ॐ ऐं ह्रीं श्रीं | कं कमलायै | नमः हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | खं विद्यायै | नमः हंसः | दक्ष कूर्परे |
| ॐ ऐं ह्रीं श्रीं | गं सिद्धविद्यायै | नमः हंसः | दक्षमणिबन्धे |
| ॐ ऐं ह्रीं श्रीं | घं धराधिपायै | नमः हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ङं देवमात्रे | नमः हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | चं दितये | नमः हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | छं पुण्यायै | नमः हंसः | वामकूर्परे |
| ॐ ऐं ह्रीं श्रीं | जं दनुःयै | नमः हंसः | वाममणिबन्धे |
| ॐ ऐं ह्रीं श्रीं | झं कद्रूयै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ञं सुपर्णिकायै | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | टं अपांनिध्यै | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं | ठं महावेगायै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं | डं महोर्भिवरूणालयायै | नमः हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं | ढं इष्टायै | नमः हंसः | दक्षपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | णं तुष्टिकर्यै | नमः हंसः | दक्षपाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | तं च्छायायै | नमः हंसः | वामोरूमूले |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | थं सामगायै | नमः हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं | दं रुचिरायै | नमः हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं | धं परायै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | नं ऋग्यजुःसामविलयायै | नमः हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | पं देवोत्पत्यै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | फं स्तुतिप्रियायै | नमः हंसः | वामपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | बं प्रद्युम्नायै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | भं अदयितायै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं | मं साध्व्यै | नमः हंसः | जठरे |
| ॐ ऐं ह्रीं श्रीं | यं सुखसौभाग्यसिद्धिदायै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं | रं सर्वकामप्रदायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं | लं भद्रायै | नमः हंसः | गलपृष्ठे |
| ॐ ऐं ह्रीं श्रीं | वं सुभद्रायै | नमः हंसः | वामकक्षे |
| ॐ ऐं ह्रीं श्रीं | शं सर्वमङ्गलायै | नमः हंसः | हृदयादि दक्षकराङ्गुल्यन्वं |
| ॐ ऐं ह्रीं श्रीं | षं धामिन्यै | नमः हंसः | हृदयादि वामकराङ्गुल्यन्वम् |
| ॐ ऐं ह्रीं श्रीं | सं धमन्यै | नमः हंसः | हृदयदि दक्षपादाङ्गुल्यन्वम् |
| ॐ ऐं ह्रीं श्रीं | हं माध्वीयै | नमः हंसः | हदयादि वामपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | ळं मधुकैटभमर्दिन्यै | नमः हंसः | कट्यादि पादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं | क्षं अबाणप्रहरिणी | नमः हंसः | कट्यादि ब्रह्मरन्ध्रान्तम् |

## *वह्निवासिनी नित्या पूजाविधिः*

श्रीतन्त्रराजे—(११ प० । श्लो०)

**अथ षोडशनित्यासु या षष्ठी समुदीरिता। सा विद्या वह्निवासिन्याः कथिताभून्नवाक्षरी।।१।।**

इति। तथा तत्रैव—(३ प० ३८ श्लो०)

**भेरुण्डाद्यमिहाद्यं स्यान्नित्यक्लिन्नाद्यनन्तरम् । ततोऽम्बु शून्यं हंसाग्नियुतम्बु मरुद्युतम् ।।१।।**

**हृदग्निना युतं शून्यं व्याप्तेन शुचिना च युक् । शून्यं नमः शक्तियुतं नवार्णेयमुदीरिता।।२।।**

**नित्या सर्वार्थदा वह्निवासिनी विश्वघस्मरा।**

इति। "ॐ ह्रीं वह्निवासिन्यै नमः"।। त्रिपुरार्णवे—

ऋषिर्वसिष्ठश्छन्दः स्याद्गायत्री देवता त्वियम् । आद्यन्तं बीजशक्ती स्यात् कीलकं मध्यमेन च ।।१।।

इति। तन्त्रराजे—(११।३)

विद्याद्वितीयबीजेन स्वरान् दीर्घान्नियोजयेत् । मायान्तान् षड्भिरेवाङ्गान्याचरेत् स्वकराङ्गयोः।।१।।

नवाक्षराणि विद्याया नवरन्ध्रेषु विन्यसेत् । व्यापकं तु समस्तेन कुर्याद् देव्यात्मसिद्धये।।२।।

सर्वास्वपि च विद्यासु व्यापकं न्यासमाचरेत् । तेन तत्तन्मयो भूयात् साधकस्तेन सिद्धयः ।।३।।

तस्याचिरेण देवीनां प्रसादात् सम्भवन्ति च । मातृकायाः षडङ्गं च मातृकान्यासमेव च ।।४।।

सर्वासां प्रथमं कृत्वा पश्चात् तत्रोदितं न्यसेत् । ललितायास्तु वर्गैस्तत् प्रोक्तमष्टाभिरेव च ।।५।।

तेन तस्यास्तु लिपिशो न्यासो नैव समीरितः । तप्तकाञ्चनसङ्काशां नवयौवनसुन्दरीम् ।।६।।

चारुस्मेरमुखाम्भोजां विलसन्नयनत्रयाम् । अष्टाभिर्बाहुभिर्युक्तां माणिक्याभरणोज्ज्वलाम्।।७।।

पद्मरागकिरीटांशुसंभेदारुणिताम्बराम् । पीतकौशेयवसनां रक्तमञ्जीरमेखलाम् ।।८।।

रत्नमौक्तिकसंभिन्नस्तबकाभरणोज्ज्वलाम् । रक्ताब्जकम्बुपुण्ड्रेक्षुचापपूर्णेन्दुमण्डलाम् ।।९।।

दधानां बाहुभिर्वामैः कह्लारं हेमशृङ्गकम् । पुष्पेषु मातुलिङ्गं च दधानां दक्षिणैः करैः ।।१०।।

स्वसमानाभिरभितः शक्तिभिः परिवारिताम् । एवं ध्यात्वार्चयेद्वह्निवासिनीं विश्वविग्रहाम् ।।११।।

ज्वालिनीविस्फुलिङ्गिन्यौ मङ्गला सुमनोहरा। कनका कितवा विश्वा विविधा चेति शक्तयः ।।१२।।

अष्टकोणेषु सम्पूज्यास्तदग्रात्तु प्रदक्षिणम् । दलेषु द्वादशस्वेता राशिशक्तीः समर्चयेत् ।।१३।।

मायासप्ताक्षरीमध्यगतैर्नामाभिरीरितैः । धस्मरा सर्वभक्षा च विश्वा च विविधोद्भवा ।।१४।।

चित्ररूपा निःसपत्ना निरातङ्का च पावनी । अचिन्त्यवैभवा रक्ता दशमी परिकीर्तिता ।।१५।।

बलिदेवीति सम्प्रोक्ता कुरुकुल्लाद्यविद्यया । यत्र नोक्ता देवता तु बलिकर्मणि तत्र ताम् ।।१६।।

सप्ताक्षर्या समोपेतां विदध्याद्बलिदेवताम् । वृत्तयोर्नवयोनिं तु कृत्वा तद्बहिरम्बुजम् ।।१७।।

द्वादशच्छदसंयुक्तं विदध्याद् वृत्तयुग्मकम् । तद्बहिश्चतुरस्त्रे द्वे द्वारद्वयसमन्विते ।।१८।।

पूर्वपश्चिमयोस्तस्मिंश्चक्रे देवीं तथार्चयेत् ।

इति।। अथ प्रयोगः तत्र प्रागवदासनादियोगपीठन्यासान्ते वह्निवासिनीविद्यया प्राणायामत्रयं कृत्वा।

शिरसि ॐ वसिष्ठऋषये नमः।
मुखे ॐ गायत्रीच्छन्दसे नमः।
हृदि ॐ वह्निवासिनीनित्यादेवतायै नमः।
गुह्ये ॐ ह्रीं बीजाय नमः।
पादयोः ॐ नमःशक्तये नमः।
नाभौ ॐ वह्निवासिन्यै कीलकाय नमः,

इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगा, इति कृताञ्जलिरुक्त्वा षड्दीर्घयुक्तद्वितीयबीजेन षडङ्गन्यासं कृत्वा,

दक्षनेत्रे **ॐ नमः।** वामे **ॐ ह्रीं नमः।** दक्षकर्णे **ॐ वं नमः।** वामे **ॐ ह्रिं नमः।** दक्षनसि **ॐ वां नमः।** वामे **ॐ सिं नमः।** मुखे **ॐ न्यै नमः।** लिङ्गे **ॐ नं नमः।** गुदे **ॐ मः नमः,**

इति विन्यस्य मूलेन व्यापकं विधाय, तप्तकाञ्चनसङ्काशामित्यादि ध्यात्वा मानसपूजान्ते स्वर्णदिपट्टे कुङ्कुमादिना द्वादशदलकमलं विलिख्य तत्कर्णिकायां वृत्तद्वयं विधाय, तन्मध्ये प्राग्वन्नवयोनिचक्रं कृत्वा, पद्माद्बहिर्वृत्तद्वयं विधाय तद्बहिः पूर्वपश्चिमयोर्द्वारयुतं चतुरस्रद्वयं कुर्यादिति पूजाचक्रं निर्माय, प्राग्वत् संस्थाप्याभ्यर्च्यार्घ्यस्तापनाद्यात्मपूजान्ते प्राग्वद् भुवनेश्वरीपीठमभ्यर्च्य, तत्र वह्निवासिनीविद्यया मूर्तिं परिकल्प्यावाहनादिपूजोपचारान्ते बाह्याभ्यन्तरवृत्तयोरन्तराले प्राग्वत् षडङ्गानि सम्पूज्य, अष्टकोणेषु देव्यग्रादिप्रादक्षिण्येन

**ॐ ह्रीं ज्वालिनी पादुकां पूजयामि नमः।** **ॐ ह्रीं कनका पादुकां पूजयामि नमः।**
**ॐ ह्रीं विस्फुलिङ्गिनी पादुकां पूजयामि नमः।** **ॐ ह्रीं कितवा पादुकां पूजयामि नमः।**
**ॐ ह्रीं मङ्गला पादुकां पूजयामि नमः।** **ॐ ह्रीं विश्वा पादुकां पूजयामि नमः।**
**ॐ ह्रीं मनोहरा पादुकां पूजयामि नमः।** **ॐ ह्रीं विविधा पादुकां पूजयामि नमः,**

इति सम्पूज्य, द्वादशदलेषु देव्यग्रादिप्रादक्षिण्येन

**ॐ ह्रीं मेषा पादुकां पूजयामि नमः।** **ॐ ह्रीं तुला पादुकां पूजयामि नमः।**
**ॐ ह्रीं वृषा पादुकां पूजयामि नमः।** **ॐ ह्रीं कीटा पादुकां पूजयामि नमः।**
**ॐ ह्रीं मिथुना पादुकां पूजयामि नमः।** **ॐ ह्रीं चापा पादुकां पूजयामि नमः।**
**ॐ ह्रीं कर्कटा पादुकां पूजयामि नमः।** **ॐ ह्रीं मकरा पादुकां पूजयामि नमः।**
**ॐ ह्रीं सिंहा पादुकां पूजयामि नमः।** **ॐ ह्रीं कुम्भा पादुकां पूजयामि नमः।**
**ॐ ह्रीं कन्या पादुकां पूजयामि नमः।** **ॐ ह्रीं मीना पादुकां पूजयामि नमः,**

इति सम्पूज्य, चतुरस्रे देव्यग्रद्वारस्य दक्षिणभागमारभ्य प्रादक्षिण्येन

**ॐ ह्रीं द्यस्मरा पादुकां पूजयामि नमः।** **ॐ ह्रीं विविधोद्भवा पादुकां पूजयामि नमः।**
**ॐ ह्रीं सर्वभक्षा पादुकां पूजयामि नमः।** **ॐ ह्रीं चित्ररूपा पादुकां पूजयामि नमः,**
**ॐ ह्रीं विश्वा पादुकां पूजयामि नमः।**

इति पश्चिमद्वारापार्श्वद्वयवायव्योत्तरेशानेषु सम्पूज्य, पूर्वद्वारस्योत्तरदक्षिणपार्श्वद्वयाग्नेयदक्षिण-निर्ऋतिकोणेषु च

ॐ ह्रीं निःसपत्ना पादुकां पूजयामि नमः। ॐ ह्रीं निरातङ्का पादुकां पूजयामि नमः।
ॐ ह्रीं पावनी पादुकां पूजयामि नमः। ॐ ह्रीं अचिन्त्यवैभवा पादुकां पूजयामि नमः।
ॐ ह्रीं रक्ता पादुकां पूजयामि नमः।

इति सम्पूज्य, तद्बहिः प्राग्वल्लोकपालांश्च तदायुधानि च सम्पूज्य धूपदीपादिसर्वं प्राग्वत्समापयेत्,—इति वह्निवासिनीनित्यायजनविधिः।।

## *मध्य त्रिकोणस्य पूर्वरेखायां आग्नेयादीशानान्तं प्रतिष्ठित तिथिनित्या खण्डः*

## ६. श्री महावज्रेश्वरी नित्या

ध्यानम्।

रक्तां रक्ताम्बरां रक्तगन्धमालविभूषणाम् । चतुर्भुजां त्रिनयनां माणिक्यमुकुटोज्ज्वलाम् ।।१।।
पाशाङ्कुशाविक्षुचापं दाडिमी सायकं तथा । दधानां बाहुभिर्नेत्रैः दयादम(पर)सुशोतलैः ।।२।।
पश्यन्ती साधकं त्र्यश्र षट्कोणाब्जमहीपुरे । चक्रमध्ये सुखासीनां स्मेरवक्त्रसरोरुहाम् ।।३।।
शक्तिभिः स्वस्वरूपाभिरावृतां पोतमध्यगे । सिंहासनेऽभितः प्रेङ्खत्पोतस्थाभिः स्वशक्तिभिः ।।४।।
वृत्तान्ताभिर्विनोदानि यातायातादिभिः सदा । कुर्वाणामरुणाम्भोधौ चिन्तयेन्मन्त्र(वज्र)नायिकाम् ।।५।।

**1. Dhyana Sloka:—** "She is seated at Her ease on Her *Chakra* (*Yantra*) consisting of a triangle, hexagon, lotuses and Mahipura (*Bhupura*) placed on a throne (*Singhasana*). She is seated on this throne in a golden boat flowing in an ocean of blood. She has four arms and three eyes. She is red, attired in red raiment. surrounded with red unguent and garlended wwith red flowers . On Her head is a diadem of lustrous rubies. In Her hands, She carries noose, goad, sugarcane bow and arrows of pomegranate flowers. She tooks upon Her Sadhaka with the cooling gaze of mercy. Her lotus face being in smiles. She is surrounded in the boat, which is swaying, by Shaktis unto Her."

**Efficacy :—** Sri Maha Vajresnari Devi, wards off all the evils and makes the worshipper free from all the troubles.

**तारोमायाशिखीवह्नि पद्मनाभेन्दुसंयुतः ।।१७।।**
**सविसर्गो भृगुर्नित्यक्लिन्ने पश्चान्मदद्रवे ।।**
**स्वाहान्तो मनुवर्णोयं महाविद्येश्वरी मनुः ।।१८।।**

**२. महावज्रेश्वरी के मन्त्र का उद्धार—** तार (ॐ) माया (ह्रीं) वह्नि पद्मनाभ एवं इन्दु सहित शिखी (फ्रें) फिर विसर्ग सहित भृगु (सः) फिर 'नित्यक्लिन्ने' 'मदद्रवे' और अन्त में 'स्वाहा' लगाने से महाविद्येश्वरी का १४ अक्षर का मन्त्र बनता है।

३. महावज्रेश्वरी के मन्त्र— **ॐ ह्रीं फ्रें सः नित्यक्लिन्ने मदद्रवे स्वाहा।**

४. महावज्रेश्वरी गायत्री मन्त्र— **ॐ महावज्रेश्वरी विद्महे वज्रं नित्यायै धीमही तन्नो नित्या प्रचोदयात्।**

५. इनका पूजन मन्त्र— **ॐ ॐ ह्रीं फ्रें सः.........०'' महावज्रेश्वरी नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

## *श्रीमहावज्रेश्वरी नित्या न्यासः*

अस्यश्री महावज्रेश्वरी नित्या महामन्त्रस्य। ब्रह्मर्र्षिः। गायत्री छन्दः। श्रीमहावज्रेश्वरी देवता। ॐ बीजम्। फ्रें शक्तिः। ह्रीं कीलकम्।

**ॐ ॐ** अंगुष्ठाभ्यां **नमः ॐ ॐ** हृदयाय **नमः**

**ॐ ह्रीं** तर्जनीभ्यां **नमः ॐ ह्री** शिरसे **स्वाहा**

**ॐ फ्रेसः** मध्यमाभ्यां **नमः ॐ फ्रेसः** शिखायै **वषट्**

**नित्यक्लिन्न** कवचाय हुम्

**ॐ नित्यक्लिन्ने** अनामिकाभ्यां **नमः मदद्रवे** नेत्रत्रयाय **वौषट्**

**ॐ मदद्रवे** कनिष्ठिकाभ्यां **नमः स्वाहा** अस्त्राय **फट्**

**ॐ स्वाहा** करतलपृष्ठाभ्यां नमः **भूर्भुवस्वरोम्** इति दिग्बन्धः

ध्यानम्

**तप्तकाञ्चनसङ्काशां कनकाभरणान्विताम्। हेमताङ्कसंयुक्तां कस्तूरीतिलकान्विताम्।।**
**हेमचिंताकसंयुक्तां पूर्णचन्द्रमुखाम्बुजाम्। पीताम्वरसमोपेतां पुण्यमाल्यविभूषिताम्।**
**मुक्ताहारसमोपेतां मकुटेन विराजिताम्। महावज्रेश्वरीं वन्दे सर्वैश्वर्यफलप्रदाम्।**

पञ्चपूजाः—

लमिति पञ्चपूजा

| | | |
|---|---|---|
| **ॐ ऐं ह्रीं श्रीं अं महावज्रेश्वर्यै** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं आं नित्यायै** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं इं विधिस्थायै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं ईं चारुहासिन्यै** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं उं उषायै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं ऊं निरद्धपत्न्यै** | **नमः हंसः** | वामकर्णे |

ॐ ऐं ह्लीं श्रीं ॠं रेवत्यै नमः हंसः दक्षनासापुटे
ॐ ऐं ह्लीं श्रीं ॠं रैवतात्मजायै नमः हंसः वामनासापुटे
ॐ ऐं ह्लीं श्रीं लृं हलायुधायै नमः हंसः दक्षकपोले
ॐ ऐं ह्लीं श्रीं लॄं प्रियायै नमः हंसः वामकपोलो
ॐ ऐं ह्लीं श्रीं एं मायायै नमः हंसः ऊर्ध्वोष्ठे
ॐ ऐं ह्लीं श्रीं ऐं गोकुलायै नमः हंसः अधरोष्ठे
ॐ ऐं ह्लीं श्रीं ओं गोकुलालयायायै नमः हंसः ऊर्ध्वदन्तपङ्क्तौ
ॐ ऐं ह्लीं श्रीं औं कृष्णनुजायै नमः हंसः अधोदन्तपङ्क्तौ
ॐ ऐं ह्लीं श्रीं अं कृष्णरजायै नमः हंसः जिह्वाग्रे
ॐ ऐं ह्लीं श्रीं अः नन्दयै नमः हंसः कण्ठे
ॐ ऐं ह्लीं श्रीं कं दुहित्रै नमः हंसः दक्षबाहुमूले
ॐ ऐं ह्लीं श्रीं खं सुतायै नमः हंसः दक्ष कूर्परे
ॐ ऐं ह्लीं श्रीं गं कंसविद्राविण्यै नमः हंसः दक्षमणिबन्धे
ॐ ऐं ह्लीं श्रीं घं क्रुद्धायै नमः हंसः दक्षकराङ्गुलिमूले
ॐ ऐं ह्लीं श्रीं ङं सिद्धचारणसेवितायै नमः हंसः दक्षकराङ्गुल्यग्रे
ॐ ऐं ह्लीं श्रीं चं गोक्षीराङ्गायै नमः हंसः वामबाहुमूले
ॐ ऐं ह्लीं श्रीं छं धृतवत्यै नमः हंसः वामकूर्परे
ॐ ऐं ह्लीं श्रीं जं भव्यायै नमः हंसः वाममणिबन्धे
ॐ ऐं ह्लीं श्रीं झं गोपजनप्रियायै नमः हंसः वामकराङ्गुलिमूले
ॐ ऐं ह्लीं श्रीं ञं शाकम्भर्यै नमः हंसः वामकराङ्गुल्यग्रे
ॐ ऐं ह्लीं श्रीं टं सिद्धविद्यायै नमः हंसः दक्षोरूमूले
ॐ ऐं ह्लीं श्रीं ठं वृद्धायै नमः हंसः दक्षजानुनि
ॐ ऐं ह्लीं श्रीं डं सिद्धकर्यै नमः हंसः दक्षगुल्फे
ॐ ऐं ह्लीं श्रीं ढं क्रियायै नमः हंसः दक्षपादाङ्गुलिमूले
ॐ ऐं ह्लीं श्रीं णं दावाग्नये नमः हंसः दक्षपाङ्गुल्यग्रे
ॐ ऐं ह्लीं श्रीं तं विश्वरूपायै नमः हंसः वामोरूमूले
ॐ ऐं ह्लीं श्रीं थं विश्वेश्यै नमः हंसः वामजानुनि

ॐ ऐं ह्रीं श्रीं दं दितिसम्भवायै नमः हंसः वामगुल्फे
ॐ ऐं ह्रीं श्रीं धं आधारचक्रनिलयायै नमः हंसः वामपादाङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं नं द्वारशालावगाहिन्यै नमः हंसः वामपादाङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं पं सूक्ष्मायै नमः हंसः दक्षपार्श्वे
ॐ ऐं ह्रीं श्रीं फं सूक्ष्मतरायै नमः हंसः वामपार्श्वे
ॐ ऐं ह्रीं श्रीं बं स्थूलायै नमः हंसः पृष्ठे
ॐ ऐं ह्रीं श्रीं भं सप्रपञ्चायै नमः हंसः नाभौ
ॐ ऐं ह्रीं श्रीं मं निरामयायै नमः हंसः जठरे
ॐ ऐं ह्रीं श्रीं यं निष्प्रञ्चायै नमः हंसः हृदये
ॐ ऐं ह्रीं श्रीं रं क्रियातीतायै नमः हंसः दक्षकक्षे
ॐ ऐं ह्रीं श्रीं लं क्रियारूपायै नमः हंसः गलपृष्ठे
ॐ ऐं ह्रीं श्रीं वं फलप्रदायै नमः हंसः वामकक्षे
ॐ ऐं ह्रीं श्रीं शं प्राणाख्यायै नमः हंसः हृदयादि दक्षकराङ्गुल्यन्तम्
ॐ ऐं ह्रीं श्रीं षं मन्त्रमात्रे नमः हंसः हृदयादि वामकराङ्गुल्यन्तम्
ॐ ऐं ह्रीं श्रीं सं सोमसूर्यामृतप्रदायै नमः हंसः हृदयदि दक्षपादाङ्गुल्यन्तम्
ॐ ऐं ह्रीं श्रीं हं छन्दःख्यातायै नमः हंसः हृदयादि वामपादङ्गुल्यन्तम्
ॐ ऐं ह्रीं श्रीं ळं चिद्रूपायै नमः हंसः कट्यादि पादांगुल्यन्तं
ॐ ऐं ह्रीं श्रीं क्षं परमानन्ददायिन्यै नमः हंसः कट्यादि ब्रह्मरन्ध्रान्तम्
निरानन्दा स्मृतायै

## *श्री महावज्रेश्वरी नित्यायजनविधिः*

तत्र श्रीतन्त्रराजे—(१२५.)

अथ षोडशनित्यासु सप्तमी या समीरिता । तस्या विधानं वक्ष्यामि शृणु सर्वर्थसाधकम् ।।१।।
प्रोक्तैव विद्या प्रागेव द्वादशाक्षरविग्रहा । तदङ्गानि लिपिन्यासं ध्यानं शक्तिभिरर्चनम् ।।२।।

इति। तथा—(३।४१)

द्वितीयं वह्निवासिन्या नित्यक्लिन्नाचतुर्थकम् । पञ्चमं भगमालाद्यं भेरुण्डाया द्वितीयकम् ।।१।।
नित्यक्लिन्नाद्वितीयं च तृतीयं षष्ठसप्तमौ । अष्टमं नवमं च स्यादेतदाद्यमितीरितम् ।।२।।
महावज्रेश्वरीनित्या द्वादशार्णा समीरिता ।

इति। ''ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं'' ।। त्रिपुरार्णवे— ''ऋषिर्ब्रह्मा च गीयते। गायत्री छन्द आख्यातं देवता परमेश्वरी''।परमेश्वरी वज्रेश्वरी।।'' आद्यन्ते बीजशक्ती तु वाग्भवं कीलकं भवेत्।।'' इति तन्त्रराजे—(१२।४)

द्वयमेकैकमप्यत्र द्वयं द्वयमथ द्वयम् । मायया पुटितं कृत्वा कुर्यादङ्गानि षट् क्रमात् ।।१।।
(प्रत्येकं शक्तिपुटितैर्मन्त्राणैर्दशभिर्न्यसेत्।) हृक्श्रोत्रनासावाग्वक्षोनाभिगुह्येषु च क्रमात् ।।२।।
रक्तां रक्ताम्बरां रक्तगन्धमालाविभूषणाम् । चतुर्भुजां त्रिनयना माणिक्यमुकुटोज्ज्वलाम्।।३।।
पाशाङ्कुशाविक्षुचापं दाडिमीसायकं तथा । दधानां बाहुर्भिनैत्रर्दयामदसुशीतलैः ।।४।।
पश्यन्तीं साधकं त्र्यस्रषट्कोणाब्जमहीपुरे । चक्रमध्ये सुखासीनां स्मेरवक्त्रसरोरुहाम्।।५।।
शक्तिभिः स्वस्वरूपाभिरावृतां पोतमध्यगाम् । सिंहासनेऽभितः प्रेङ्खत्पोतस्थाभिश्च शक्तिभिः।।६।।
वृतां ताभिविनोदानि यातायातादिभिः सदा । कुर्वाणमरुणाम्भोधौ चिन्तयेन्मन्त्रनायिकाम् ।।७।।
इच्छाज्ञानक्रियास्तत्र त्रिकोणास्थाश्च शक्तयः । डाकिन्याद्याः षडस्रस्था पद्मद्वादशपत्रगाः ।।८।।
हृल्लेखा क्लेदिनी क्लिन्ना क्षोभिणी मदनातुरा । निरञ्जना रागवती तथैव मदनावती ।।९।।
मेखला द्राविणी वेगवती द्वादशशक्तयः । ततः षोडशपत्रस्थाः शक्तीराकर्णयाम्बिके ।।१०।।
कमलां कामिनीं कल्पां कलां कलितकौतुके । किरातां कालकदने कौशिकीं कम्बुवाहिनीम्।।११।।
कांतरां कपटां कीर्तिं कुमारीं कुङ्कुमामपि । चतुरस्रस्याश्च शक्तीराकर्णय च ताः क्रमात् ।।१२।।
भञ्जिनीवेगिनी भोगा चपला पेशला सती । रतिः श्रद्धा भोगलोला मदोन्मत्ते मनस्विनी ।।१३।।
दिक्षु द्वारेषु पार्श्वेषु कोणादिषु च संस्थिताः । द्वादशैतामहादेव्याश्चतुरस्राभितो यजेत् ।।१४।।
कृत्वार्घ्यमङ्गमूलाभ्यां प्रोक्तरूपां ततोऽर्चयेत् । शोणाब्धि हेमपोतं च सिंहासनमतः परम् ।।१५।।
तत्र चक्रं ततो देवीं प्राग्वदावाह्य शक्तिभिः । मायासप्ताक्षरीमध्यगतैर्नामभिरर्चयेत् ।।१६।।
बलिं दद्याच्च तदनु सप्ताक्षर्या पुरोक्तया । देव्यास्तु कुरुकुल्लाया होमं कुर्याद्यथाविधिः।।१७।।
भृताक्तैररुणैः पुष्पैर्घृतैर्वा होममाचरेत् । प्राग्वत् समापयेदित्थमर्चनं ते समीरितम् ।।१८।।

इति ।। अथ प्रयोगः तत्र प्राग्वदासनपूजादियोगपीठन्यासान्ते मूलमन्त्रेण प्राणायामत्रयं कृत्वा,

शिरसि **ब्रह्मणे ऋषये नमः।** हृदि **वज्रेश्वरीनित्यादेवतायै नमः।** पादयोः **ह्रीं शक्तये नमः।**
मुखे **गायत्रीच्छन्दसे नमः।** गुह्ये **ह्रीं बीजाय नमः।** नाभौ **ऐं कीलकाय नमः,**

इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः,

इति कृताञ्जलिरुक्त्वा, **ॐ ऐं** शिरसे **स्वाहा।** **ॐ नित्य** कवचाय **हुम्।**
**ॐ ह्रीं** क्लिन्ने हृदयाय **नमः।** **ॐ क्रों शिखायै वषट्।** **ॐ मद** नेत्रत्रयाय **वौषट्।**

ॐ द्रवेह्रीं अस्त्राय फट्, दक्षकर्णे ॐ ह्रीं ऐंह्रीं नमः। मुखे ॐ ह्रीं मंह्रीं नमः।
इति करषडङ्गन्यासं विधाय, वामकर्णे ॐ ह्रीं क्रोंह्रीं नमः। वक्षसि ॐ ह्रीं दंह्रीं नमः।
दक्षनेत्रे ॐ ह्रीं क्लींह्रीं नमः। दक्षनसि ॐ ह्रीं त्रिंह्रीं नमः। नाभौ ॐ ह्रीद्रंह्रीं नमः।
वामनेत्रे ॐ ह्रीं त्रेंह्रीं नमः। वामनसि ॐ ह्रीं त्यंह्रीं नमः। लिङ्गे ॐ ह्रीवेंह्रीं नमः।

इति विन्यस्य मूलेन व्यापकं विधाय, "रक्तां रक्ताम्बरा" मित्यादि ध्यात्वा मानसपूजां विधाय, प्राग्वत्स्वर्णादिपीठे ङ्कुमादिना स्वाभिमुखाग्रत्रिकोणरूपां योनिं विधाय तद्बहिर्द्वादशदलपद्मं तद्बहिः षोडशदलपद्मं तद्बहिश्चतुर्द्वारयुतं चतुरस्रद्वयं कुर्यात्, इति पूजाचक्रं निर्माय प्राग्वत्स्वपुरतः संस्थाप्याभ्यर्च्यार्घर्यस्थापनाद्यात्मपूजान्ते भुवनेश्वरीपीठार्चने मण्डूकादिपृथिव्यन्तमभ्यर्च्य,

तदनु ॐ ह्रीं शोणसमुद्राय नमः। ॐ ह्रीं कनकपोताय नमः। ॐ ह्रीं रत्नसिंहासनाय नमः।

इति सम्पूज्य तदनु धर्मादिपीठमन्वन्तं प्राग्वत्सम्पूज्य तत्र मूलविद्यया मूर्तिं परिकल्प्यावाहनादि-पुष्पान्तैरुपचारैरुपचर्य्य, त्रिकोणमध्ये प्राग्वत् षडङ्गानि सम्पूज्य, त्रिकोणयोरन्तराले देव्याः पृष्ठे प्राग्वद्गुरुपङ्क्तित्रयमभ्यर्च्यान्तस्त्रिकोणे देव्यग्रादिप्रादक्षिण्येन ह्रींहृल्लेखापादुकां पूजयामि।

ॐ ह्रीं क्लेदिनी पादुकां पूजयामि नमः। ॐ ह्रीं क्लिन्ना पादुकां पूजयामि नमः।
ॐ ह्रीं क्षोभिणी पादुकां पूजयामि नमः। ॐ ह्रीं मदना पादुकां पूजयामि नमः।
ॐ ह्रीं मदनातुरा पादुकां पूजयामि नमः। ॐ ह्रीं निरञ्जना पादुकां पूजयामि नमः।
ॐ ह्रीं रागवती पादुकां पूजयामि नमः। ॐ ह्रीं मदनावती पादुकां पूजयामि नमः।
ॐ ह्रीं मेखता पादुकां पूजयामि नमः। ॐ ह्रीं द्राविणी पादुकां पूजयामि नमः।
ॐ ह्रीं वेगवती पादुकां पूजयामि नमः।

इति सम्पूज्य, तद्बहि।

षोडशदलेषु कमलापादुकां पूजयामि नमः, कामिनी पादुकां पूजयामि नमः,
कल्पापादुकां पूजयामि नमः, कला पादुकां पूजयामि नमः,
कलितापादुकां पूजयामि नमः, कौतुका पादुकां पूजयामि नमः,
किरातापादुकां पूजयामि नमः, काला पादुकां पूजयामि नमः,
कदनापादुकां पूजयामि नमः, कौशिकी पादुकां पूजयामि नमः,
कम्बुवाहिनीपादुकां पूजयामि नमः, कातरा पादुकां पूजयामि नमः,
कपटापादुकां पूजयामि नमः, कीर्ति पादुकां पूजयामि नमः,
कुमारीपादुकां पूजयामि नमः, कङ्कुमा पादुकां पूजयामि नमः,

इति प्राग्वत्सम्पूज्य, चतुरस्रे देव्यग्रादिद्वारचतुष्टयस्य पार्श्वेषु पश्चिमद्वारस्य दक्षिणभागादिप्रादक्षिण्येन **भञ्जिनीपादुकां पूजयामि नमः, वेगिनीपादुकां पूजयामि नमः, भोगापादुकां पूजयामि नमः, चपलापादुकां पूजयामि नमः, पेशलापादुकां पूजयामि नमः, सतीपादुकां पूजयामि नमः, रतिपादुकां पूजयामि नमः, श्रद्धापादुकां पूजयामि नमः, प्रीतिपादुकां पूजयामि नमः, इति सम्पूज्य, वायव्यादिकोणचतुष्टये प्राग्वत् प्रादक्षिण्येन भोगलोलापादुकां पूजयामि नमः, मदनापादुकां पूजयामि नमः, उन्मत्तापादुकां पूजयामि नमः, मनस्विनीपादुकां पूजयामि नमः,** इति निर्ऋत्यन्तं सम्पूज्य प्राग्वल्लोकपालार्चादि शेषं समापयेत्, इति वज्रेश्वरीनित्यायजनविधिः।।

## ७. श्री शिवदूती नित्या

ध्यानम्।

**निदाघकालमध्याह्न दिवाकरसमप्रभाम् । नवरत्न किरीटां च त्रीक्षणामरुणाम्बराम् ।।१।।**
**नानाभरणसम्भिन्न देहकान्तिविराजिताम् । शुचिस्मितामष्टभुजां स्तूयमानां महर्षिभिः ।।२।।**
**पाशं खेटं गदां रत्नचषकं वामबाहुभिः । दक्षिणैरङ्कुशं खड्गं कुठारं कमलं तथा ।।३।।**
**दधानामाधु(नां साधः?)काभीष्ट दानोद्यम समन्विताम् ।**
**ध्यात्वैवं पूजयेद्देवीं दूतीं दुर्नीतिनाशिनीम् ।।४।।**

**1. Dhyana Sloka:—** "She has eight arms and three eyes and is bright like the midday sun in summer. She is garbed in red raiment and wears various kinds enhance its beauty. There are nine gems in Her diadem. Her face smiles gently. The great Rishis are hymning Her praise. In Her left hands She carries a horn, shield (*Kheta*), mace, and cup (*Chashaka*) made of gems. In Her right hauds She holds a goad, sword (*Khadga*) are (*Kuthara*) and a lotus. She is the Destroyer of wickedness and is eager to grant the pleasing objects of desire."

**Efficacy :—** Sri Sivadoothy Devi annihipates injublice and Unvighteousness fullfill all righteous desires, bestous wealth and all the attainments-material otherwise

**शिवदूतीचतुर्थ्यन्ता मायाद्याहृदयान्तिका।।१७।।**
**शिवदूती मनुःप्रोक्तः सप्तवर्णोखिलेष्टदः।।**

**२. शिवदूती के मन्त्र का उद्धार**—चतुर्थ्यन्त शिवदूती (शिवदूत्यै) के प्रारम्भ में माया (ह्रीं) तथा अन्त में हृदय (नमः) लगाने से सर्वाभीष्टप्रद शिवदूती का ७ अक्षर का मन्त्र कहा गया है।

**३. शिवदूती के मन्त्र— ह्रीं शिवदूत्यै नमः।**

४. शिवदूती पूजन मन्त्र—ऋं 'ह्रीं' **शिवदूत्यै नमः' शिवदूती नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

५. शिवदूती गायत्री मन्त्र— **ॐ शिवदूत्यै विद्महे शिवङ्कर्यै धीमहि तन्नो नित्या प्रचोदयात्।**

## *श्रीशिवदूती नित्या न्यासः*

अस्य श्रीशिवदूती नित्या महामन्त्रस्य। ईश्वर ऋषिः गायत्रीछन्दः। श्री शिवदूती नित्या देवता। ह्रीं बीजं नमः शक्तिः। शिवदूत्यै कीलकम्।

| | | | |
|---|---|---|---|
| **ॐ ह्रां** | अङ्गुष्ठाभ्यां नमः | **ॐ ह्रां** | हृदयाय **नमः** |
| **ॐ ह्रीं** | तर्जनीभ्यां नमः | **ॐ ह्रीं** | शिरसे **स्वाहा** |
| **ॐ ह्रूं** | मध्यमाभ्यां नमः | **ॐ ह्रूं** | शिखायै **वषट्** |
| **ॐ ह्रें** | अनामिकाभ्यां नमः | **ॐ ह्रें** | कवचाय **हुम्** |
| **ॐ ह्रैं** | कनिष्ठिकाभ्यां नमः | **ॐ ह्रैं** | नेत्रत्रयाय **वौषट्** |
| **ॐ ह्रौं** | करतलपृष्ठाभ्यां नमः | **ॐ ह्रौं** | अस्त्राय **फट्** |

**भूर्भुवस्वरोम्** इति दिग्बन्धः

ध्यानम्।

**बालसूर्य प्रतीकाशां बन्धूक प्रसवारूणां । विधि विष्णु शिवस्तुत्या देवगन्धर्व सेविताम् ।।**
**रक्तारविन्द सङ्काशां सर्वाभरणभूषितां । शिवद्वतीं नमस्यामि रत्नसिंहासनस्थिताम् ।**

पञ्चपूजा—

लमिति पञ्चपूजा

| | | |
|---|---|---|
| **ॐ ऐं ह्रीं श्रीं अं शिवदूत्यै** | **नमः हंसः** | शिरसिं |
| **ॐ ऐं ह्रीं श्रीं आं सुनन्दायै** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं इं आनन्दिन्यै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं ई विषपघ्निन्यै** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं उं पतालखण्डमध्यस्थायै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं ऊं हल्लेखायै** | **नमः हंसः** | वामकर्णे |

| | | |
|---|---|---|
| ॐ ऐं ह्रीं श्रीं ॠं वनखचर्यै | नमः हंसः | दक्षनासपुटे |
| ॐ ऐं ह्रीं श्रीं ॠं कलायै | नमः हंसः | वामनासपुटे |
| ॐ ऐं ह्रीं श्रीं ऌं सप्तदश्यै | नमः हंसः | दक्षकपोले |
| ॐ ऐं ह्रीं श्रीं ॡं शुद्धायै | नमः हंसः | वामकपोले |
| ॐ ऐं ह्रीं श्रीं एं पूर्णचन्द्रनिभाननायै | नमः हंसः | ऊर्ध्वोष्ठे |
| ॐ ऐं ह्रीं श्रीं ऐं आत्मज्योत्यै | नमः हंसः | अधरोष्ठे |
| ॐ ऐं ह्रीं श्रीं ओं स्वयंज्योत्यै | नमः हंसः | ऊर्ध्वदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं औं अग्निज्योत्यै | नमः हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं अं अनाहतायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं अः प्राणशक्त्यै | नमः हंसः | कण्ठे |
| ॐ ऐं ह्रीं श्रीं कं क्रियाशक्त्यै | नमः हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्रीं श्रीं खं इच्छाशक्त्यै | नमः हंसः | दक्षकूर्परे |
| ॐ ऐं ह्रीं श्रीं गं सुखावहायै | नमः हंसः | दक्षमणिबन्धे |
| ॐ ऐं ह्रीं श्रीं घं ज्ञानशक्त्यै | नमः हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं ङ सुखानन्दायै | नमः हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं चं वेदिन्यै | नमः हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं छं महिमायै | नमः हंसः | वाम कूर्परे |
| ॐ ऐं ह्रीं श्रीं जं प्रभायै | नमः हंसः | वाममणिबन्धे |
| ॐ ऐं ह्रीं श्रीं झं ऋजुयज्ञायै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं ञं यज्ञसाम्न्यै | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं टं सामस्वरविनोदिन्यै | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं ठं गीतीयै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं डं सामध्वनयै | नमः हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं ढं स्त्रोतायै | नमः हंसः | दक्षपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं णं हुंकृत्यै | नमः हंसः | दक्षपाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं तं सामवेदिन्यै | नमः हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं थं अध्वरायै | नमः हंसः | वामजानुनि |

| | | |
|---|---|---|
| ॐ ऐं ह्रीं श्रीं दं गिरिजायै | नमः हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं धं क्षुद्रायै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं नं निग्रहानुग्रहात्मिकायै | नमः हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं पं पुराण्यै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं फं शिल्पजनन्यै | नमः हंसः | वामपार्श्वे |
| ॐ ऐं ह्रीं श्रीं बं इतिहासबोधिन्यै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं भं वेदिकायै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं मं यज्ञजनन्यै | नमः हंसः | जठरे |
| ॐ ऐं ह्रीं श्रीं यं महावेद्यै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं रं सदक्षिणायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं लं आन्वीक्षिकीयै | नमः हंसः | गल पृठे |
| ॐ ऐं ह्रीं श्रीं वं त्रयी | नमः हंसः | वामकक्षे |
| ॐ ऐं ह्रीं श्रीं शं वार्ता | नमः हंसः | हृदयादि दक्षकराङ्गुलयन्तम् |
| ॐ ऐं ह्रीं श्रीं षं गोरक्षायै | नमः हंसः | हृदयादि वामकराङ्गुलयन्तम् |
| ॐ ऐं ह्रीं श्रीं सं गदितायै | नमः हंसः | हृदयदि दक्षपादाङ्गुलयन्तम् |
| ॐ ऐं ह्रीं श्रीं हं कामतायै | नमः हंसः | हदयादि वामपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं ळं सर्वकामप्रदायिकायै | नमः हंसः | कट्यादि पादाङ्गुलयन्तम् |
| ॐ ऐं ह्रीं श्रीं क्षं अम्बिकायै | नमः हंसः | कट्यादि ब्रह्मरन्ध्रान्तम् |

## शिवदूती नित्यायजनविधिः

तत्र श्रीतन्त्रराजे—(१३प०)

**अथ षोडशनित्यासु या प्रोक्ता त्वष्टमी तदा । तद्विधानं शृणु प्राज्ञे समीहितफलप्रदम् ।।१।।**
**विद्योद्धारः कृतः पूर्वमथ न्यासक्रमं तथा । तथावरणशक्तीश्च तद्ध्यानं तत्प्रपूजनम् ।।२।।**

इति।तत्रैव—(३।४१)

**वज्रेश्वर्यन्त्यमाद्यं स्याद्वियदग्नियुतं ततः । अम्बु स्यान्मरुता युक्तं गोत्रा क्ष्मासंयुता ततः।।१।।**
**रयो व्याप्तेन शुचिना युतं स्यात्तदनन्तरम् । अन्त्यर्णै वह्निवासिन्या दूती नित्या समीरिता ।।२।।**
**महावज्रेश्वरीनित्या द्वादशार्णा समीरिता ।**

इति। "**ह्रीं शिवादूत्यै नमः**"।। त्रिपुरार्णवे— "**ऋषी रुद्रोऽथ गायत्री छन्दस्तद्देवता शिवाः।**" शिवादूती इति। "**आद्यन्ते बीजशक्ती च मध्यं कीलकमुच्यते**"।। इति। श्रीतन्त्रराजे—(१३।५)

**कृत्वा प्राग्वत् षडङ्गानि विद्याद्येनोक्तवर्त्मना। तेनैव पुटितैरर्णैर्न्यसेच्छ्रोत्रादिपञ्चसु ।।१।।**

**षष्ठं मनसि विन्यस्य व्यापकं विद्यया न्यसेत्। प्राग्वदर्घ्यं समुद्दिष्टं तच्छक्तीः शृणु पार्वति ।।२।।**

**विह्वलाकर्षिणी लोला नित्या च वन(मदन)मालिनी। विनोदा कौतुका पुण्या पुराणा चतुरस्रगाः ।।३।।**

**वागीशी वरदा विश्वा विनदा विघ्नकारिणी। वीरा विघ्नहरा विद्येत्युक्त्वा मन्त्राष्टशक्तयः ।।४।।**

**सुमुखी सुन्दरी सारा सुमना च सरस्वती । समया सर्वगा विद्येत्युक्तास्त्वष्टास्रशक्तयः ।।५।।**

**डाकिन्याद्याः षडस्रेषु सर्वास्त्यग्रात् प्रदक्षिणम्। मूलदेवीसमाकारवर्णाकार (युध) समन्विताः ।।६।।**

**शिवां वाणीं दूरसिद्धां त्यैविग्रहवतीमपि । नादां मनोन्मनीं षट्सु पत्रेषु परितोऽर्चयेत् ।।७।।**

**इच्छाज्ञानक्रियाशक्तीस्त्रिषु कोणेषु पूजयेत् । मध्ये देवीं हेतिवृतां पूजयेदष्टमीं शिवाम् ।।८।।**

**तस्या ध्यानं शृणु प्राज्ञे यन्मयं विश्वमीरितम्। तथापि भक्तसर्वाणहेतोः क्लृप्तां परां तनुम्।।९।।**

**निदाघकालमध्याह्नदिवाकरसमप्रभाम् । नवरत्नकिरीटां च त्रीक्षणामरुणाम्बराम् ।।१०।।**

**नानाभरणसम्भिन्नदेहकान्तिविराजिताम् । शुचिस्मितामष्टभुजां स्तूयमानां महर्षिभिः ।।११।।**

**पाशं खेटं गदा रत्नचषकं वामबाहुभिः। दक्षिणैरङ्कुशं खड्गं कुठारं कमलं तथा ।।१२।।**

**दधानां साधकाभीष्टदानोद्यमसमन्विताम्। ध्यात्वैवं पूजयेद् देवीं दूतीं दूतीं दुर्नीतिनाशिनीम् ।।१३।।**

**वृत्तद्वयं बहिस्त्र्यस्त्रं तद्द्वयं षड्दलाम्बुजम् । (तथा षडस्रमष्टास्रं तद्वष्टदलाम्बुजम्) ।।१४।।**

**भूपुरे वह्निवासिन्याः कृत्वा तन्मध्यगां शिवाम्। आवाह्याभ्यर्च्य तच्छक्तीः प्रागुक्तविधिना स्थिताः।।१५।।**

**जप्त्वा हुत्वा नमस्कृत्य स्वात्मन्युद्वासयेत् तथा।** इति।

अथ प्रयोगः तत्र प्राग्वदासनपूजादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा— शिरसिरुद्राय ऋषये नमः।

**मुखे गायत्रीच्छन्दसे नमः। हृदये श्रीशिवादूतीनित्यायै नमः। गुह्ये ह्रीं बीजाय नमः।**

**पादयोः नमःशक्तये नमः। नाभौ शिवादूत्यै कीलकाय नमः।**

इति विन्यस्य ममाभीष्टसिद्धये विनियोगः इति कृताञ्जलिरुक्त्वा ह्रांह्रीमित्यादिना करषडङ्गन्यासं विधाय,

श्रोत्रयोः **ॐ ह्रीं शिं ह्रीं नमः।** सर्वाङ्गे **ॐ ह्रीं वां ह्रीं नमः।** चक्षुषोः **ॐ ह्रीं दूं ह्रीं नमः।**

जिह्वायां **ॐ ह्रीं त्यैं ह्रीं नमः।** घ्राणयोः **ॐ ह्रीं नं ह्रीं नमः।** मनसि **ॐ ह्रीं मं ह्रीं नमः।**

इत्यादिसमस्तविद्यया व्यापकं विधाय "निदाघकाल" इत्यादि ध्यात्वा मानसपूजां विधाय, प्राग्वत् स्वर्णादिपट्टे कुङ्कुमादिना षडदलपद्मं विधाय तदन्तर्वृत्तं (वृत्तद्वयं) मध्ये स्वाभिमुखाग्रं त्रिकोणं, (तदन्तर्वृत्तद्वयं) पश्चाद्बहिः षट्कोणं, तद्बहिरष्टकोणं, तद्बहिरष्टदलपद्मं, तद्बहिः पूर्वपश्चिमयोर्द्वारयुतं चतुरस्रं कुर्यादिति पूजाचक्रं निर्माय, प्राग्वत् पुरतः संस्थाप्याभ्यर्च्यार्घ्यस्थापनाद्यात्म पूजान्ते मूलेन मूर्तिं परिकल्प्यावाहनादिपुष्पोपचारान्ते त्रिकोणे प्राग्वत्षडङ्गानि सम्पूज्य, त्रिकोणवृत्तयोरन्तराले प्राग्वद् गुरुपङ्क्तित्रयं सम्पूज्य, चतुरस्रे देव्यग्रद्वारस्य दक्षिणभागमारभ्य प्रादक्षिण्येन

ॐ ह्रीं विह्वला पादुकां पूजयामि नमः,
ॐ ह्रीं आकर्षिणी पादुकां पूजयामि नमः,
ॐ ह्रीं लोला पादुकां पूजयामि नमः,
ॐ ह्रीं नित्या पादुकां पूजयामि नमः,
ॐ ह्रीं मदना पादुकां पूजयामि नमः,
ॐ ह्रीं मालिनी पादुकां पूजयामि नमः,
ॐ ह्रीं विनोदा पादुकां पूजयामि नमः,
ॐ ह्रीं कौतुका पादुकां पूजयामि नमः,
ॐ ह्रीं पुण्या पादुकां पूजयामि नमः,
ॐ ह्रीं पुराणा पादुकां पूजयामि नमः,

इति सम्पूज्य, अष्टदलेषु प्राग्वत्

ॐ ह्रीं वागीशी पादुकां पूजयामि नमः,
ॐ ह्रीं वरदा पादुकां पूजयामि नमः,
ॐ ह्रीं विश्वा पादुकां पूजयामि नमः,
ॐ ह्रीं विनदा पादुकां पूजयामि नमः,
ॐ ह्रीं विघ्नकारिणी पादुकां पूजयामि नमः,
ॐ ह्रीं वीरा पादुकां पूजयामि नमः,
ॐ ह्रीं विघ्नहरा पादुकां पूजयामि नमः,
ॐ ह्रीं विद्या पादुकां पूजयामि नमः,

इति सम्पूज्याष्टकोणे प्राग्वत्

ॐ ह्रीं सुमुखी पादुकां पूजयामि नमः,
ॐ ह्रीं सुन्दरी पादुकां पूजयामि नमः,
ॐ ह्रीं सारा पादुकां पूजयामि नमः,
ॐ ह्रीं सुमना पादुकां पूजयामि नमः,
ॐ ह्रीं सरस्वती पादुकां पूजयामि नमः,
ॐ ह्रीं समया पादुकां पूजयामि नमः,
ॐ ह्रीं सर्वगा पादुकां पूजयामि नमः,
ॐ ह्रीं सिद्धा पादुकां पूजयामि नमः।

इति सम्पूज्य, षट्कोणेषु देव्यग्रकोणमारभ्य

ॐ ह्रीं हाकिनी पादुकां पूजयामि नमः,
ॐ ह्रीं शाकिनी पादुकां पूजयामि नमः,
ॐ ह्रीं काकिनी पादुकां पूजयामि नमः,
ॐ ह्रीं लाकिनी पादुकां पूजयामि नमः,
ॐ ह्रीं राकिणी पादुकां पूजयामि नमः,
ॐ ह्रीं डाकिनी पादुकां पूजयामि नमः।

इति सम्पूज्य, षट्पत्रेषु

**ॐ ह्रीं शिवा पादुकां पूजयामि नमः,** **ॐ ह्रीं वाणी पादुकां पूजयामि नमः,**
**ॐ ह्रीं दूरसिद्धा पादुकां पूजयामि नमः,** **ॐ ह्रीं त्वैविग्रहवती पादुकां पूजयामि नमः,**
**ॐ ह्रीं नादा पादुकां पूजयामि नमः,** **ॐ ह्रीं मनोन्मनी पादुकां पूजयामि नमः।**

इति सम्पूज्यान्तस्त्रिकोणेषु देव्यग्रादिप्रादक्षिण्येन

**ॐ ह्रीं इच्छाशक्ति पादुकां पूजयामि नमः,** **ॐ ह्रीं ज्ञानशक्ति पादुकां पूजयामि नमः,**

**ॐ ह्रीं क्रियाशक्ति पादुकां पूजयामि नमः।**

इति सम्पूज्य, त्रिकोणान्तर्वृत्तयोरन्तराले देव्या दक्षिणाधःकरादिवामाधःकरान्तान्यायुधस्थानानि परिकल्प्य,

**ॐ ह्रीं कमलाय नमः। ॐ ह्रीं कुठाराय नमः। ॐ ह्रीं खड्गाय नमः।**
**ॐ ह्रीं अङ्कुशाय नमः। ॐ ह्रीं रत्नचषकाय नमः। ॐ ह्रीं गदायै नमः।**
**ॐ ह्रीं खेटाय नमः। पाशाय नमः।**

इति सम्पूज्य पुनर्मध्ये देवीं सम्पूज्य धूपदीपादिकं सर्वं प्राग्वत् समापयेत्, —इति शिवादूतीनित्यायजनविधिः।।

## ८. श्री त्वरिता नित्या

ध्यानम्।

**श्यामवर्णो शुभाकारां नवयौवनशोभिनीम् । द्विद्विक्रमादष्टनागैः कल्पिताभरणोज्ज्वलाम् ।।१।।**
**ताटङ्कमङ्गदं तद्वद्रशनानूपुरान्वितैः । विप्रक्षत्रियविट्शूद्रजातिभिर्भीमविग्रहैः ।।२।।**
**पल्लवांशुकसंवीतां शिखिपुच्छकृतैः शुभैः । वलयैर्भूषितभुजां माणिक्यमुकुटोज्ज्वलाम् ।।३।।**
**बर्हिबर्हकृतापीडां तच्छत्रां तत्पताकिनीम् । गुञ्जागुणलसद्वक्षःकुचकुङ्कुममण्डनाम् ।।४।।**
**त्रिनेत्रां चारुवदनां मन्दस्मितमुखाम्बुजाम् । पाशाङ्कुशवराभीति लसद्भुजचतुष्टयाम् ।।५।।**

**1. Dhyana Sloka:—** "She is of auspicious form in the first flush of youth and dark of colour. She has three eyes and four hands and Her beautiful lotus like face smiles gently. She is clad in new leaves. She is adorned with eight fierce and great serpents of four kinds, and with waist chain and anklets. They are the four castes *Vipra*, *Kshatriya*, *Vit* (*Vaishya*) and *Shudra*. (The Manorama says that there are two of each castes and the ornaments should be understood as following the origination of each caste). On Her head is a crystal crown with a crest of peacock's feather. Her arms are adorned with bangles made of beautiful peacock's tail feathers. These are also made

up into an umbrella and banner. Strings of gunja berries are round on Her neck and breasts which are smeared with red (sandal). Smiling gently She holds in Her four hands noose and goad and makes the gesture (*Mudra*) of granting boon and dispelling fear."

**Efficacy :—** This Devi gives education, health, wealth, physical radicance and long life with her benign grace. She provides prosperous life and cures one from even poisonous attacks.

**तारः परावर्म खेचछेक्षः स्त्रीवामकर्णयुक् ।।२२।।**
**गगनं शशिसंयुक्तं मेरुर्भगयुतोद्रिजा ।**
**फडन्तो द्वादशार्णोयं त्वरिताया मनुर्मतः ।।२३।।**

**२. त्वरिता के मन्त्र का उद्धार**—तार (ॐ) परा (ह्रीं) वर्म (हं) फिर 'खेचछेक्षः स्त्रीं' वामकर्ण एवं शशि सहित गगन (हूँ) भगयुत मेरु (क्षे) अद्रिजा (ह्रीं) तथा अन्त में 'फट्' लगाने से त्वरिता का १२ अक्षर का मन्त्र बतलाया गया है।

३. त्वरिता का मन्त्र— **ॐ ह्रीं हुं खे च चे क्षः स्त्रीं हूं क्षे ह्रीं फट्।**

४. त्वरिता पूजन मन्त्र— **ऋं 'ॐह्रीं हुं......०' त्वरिता नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

५. व्यवरिता गायत्री मन्त्रः— **ॐ त्वरितायै विद्महे महानित्यायै धीमहि तन्नो नित्या प्रचोदयात्।**

## श्री त्वरिता नित्या मातृकान्यासः

अस्यश्री त्वरितानित्या महामन्त्रस्य। ईश्वरऋषिः। विराट छन्दः। श्री त्वरिता नित्या देवता। हुँ बीजम्

**ॐ स्त्रीं** शक्तिः। ह्रीं कीलकम् **ॐ ह्रां** हृदयाय **नमः**

**ॐ ह्रां** अंगुष्ठाभ्यां **नमः** **ॐ ह्रीं** शिरसे **स्वाहा**

**ॐ ह्रीं** तर्जनीभ्यां **नमः** **ॐ ह्रूँ** शिखायै **वषट्**

**ॐ ह्रूं** मध्यमाभ्यां **नमः** **ॐ ह्रै** कवचाय **हुम्**

**ॐ ह्रैं** अनामिकाभ्यां **नमः** **ॐ ह्रौं** नेत्रत्रयाय **वौषट्**

**ॐ ह्रौ** कनिष्ठिकाभ्यां **नमः** **ॐ ह्रः** अस्त्राय **फट्**

**ॐ ह्रः** करतलपृष्ठाभ्यां **नमः**

भूर्भुवस्वरोम् इति दिग्बन्धः

ध्यानम्

**रक्तारविन्दसङ्काशामुद्यत्सूर्यसमप्रभाम् । दधतीमङ्कुशं पाशं बाणान् चापं मनोहरम्।।**
**चतुर्भुजां महादेवीमप्सरोगणसंकुलाम् । नमामि त्वरितां नित्यां भक्तानामभयप्रदाम्।**

लमिति पञ्चपूजा

| | | |
|---|---|---|
| **ॐ ऐं ह्रीं श्रीं अं त्वरिता (त्वरितायै नमः)** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं आं तीतुला (तीतुलायै)** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं इं धात्री (धात्र्यै नमः)** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं ई किराती (किरात्यै नमः)** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं उं कृषिवाणिज्यै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं ऊं सर्वेश्वर्यै** | **नमः हंसः** | वामकर्णे |
| **ॐ ऐं ह्रीं श्रीं ऋं ध्रुवायै** | **नमः हंसः** | दक्षनासापुटे |
| **ॐ ऐं ह्रीं श्रीं ॠं सर्वायै** | **नमः हंसः** | वामनासापुटे |
| **ॐ ऐं ह्रीं श्रीं लृं सर्वज्ञानायै** | **नमः हंसः** | दक्षकपोले |
| **ॐ ऐं ह्रीं श्रीं लॄं सर्वज्ञान समृद्धायै** | **नमः हंसः** | वामकपोले |
| **ॐ ऐं ह्रीं श्रीं एं त्रिमात्रे** | **नमः हंसः** | ऊर्ध्वोष्ठे |
| **ॐ ऐं ह्रीं श्रीं ऐं त्रिपुरायै** | **नमः हंसः** | अधरोष्ठे |
| **ॐ ऐं ह्रीं श्रीं ओं सर्वाकारायै** | **नमः हंसः** | ऊर्ध्वदन्तपङ्क्तौ |
| **ॐ ऐं ह्रीं श्रीं औं मेयायै** | **नमः हंसः** | अधोदन्तपङ्क्तौ |
| **ॐ ऐं ह्रीं श्रीं अं परब्रह्माण्यै** | **नमः हंसः** | जिह्वाग्रे |
| **ॐ ऐं ह्रीं श्रीं अः शान्तिकरकायै** | **नमः हंसः** | कण्ठे |
| **ॐ ऐं ह्रीं श्रीं कं सम्प्रोक्तयै** | **नमः हंसः** | दक्षबाहुमूले |
| **ॐ ऐं ह्रीं श्रीं खं स्वरशक्त्यै** | **नमः हंसः** | दक्षकूर्परे |
| **ॐ ऐं ह्रीं श्रीं गं कौमार्यै** | **नमः हंसः** | दक्षमणिबन्धे |
| **ॐ ऐं ह्रीं श्रीं घं विश्वजनन्यै** | **नमः हंसः** | दक्षकराङ्गुलिमूले |
| **ॐ ऐं ह्रीं श्रीं ङ शूलहस्तायै** | **नमः हंसः** | दक्षकराङ्गुल्यग्रे |
| **ॐ ऐं ह्रीं श्रीं चं महेश्वर्यै** | **नमः हंसः** | वामबाहुमूले |
| **ॐ ऐं ह्रीं श्रीं छं किङ्कर्यै** | **नमः हंसः** | वामकूर्परे |
| **ॐ ऐं ह्रीं श्रीं जं शक्तिहस्तायै** | **नमः हंसः** | वाममणिबन्धे |
| **ॐ ऐं ह्रीं श्रीं झं दक्षयज्ञविनाशिन्यै** | **नमः हंसः** | वामकराङ्गुलिमूले |

ॐ ऐं ह्रीं श्रीं ञं वरायुधायै नमः हंसः वामकराङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं टं शङ्खरवायै नमः हंसः दक्षोरूमूले
ॐ ऐं ह्रीं श्रीं ठं वैष्णव्यै नमः हंसः दक्षजानुनि
ॐ ऐं ह्रीं श्रीं डं व्यक्तिरूपिण्यै नमः हंसः दक्षगुल्फे
ॐ ऐं ह्रीं श्रीं ढं वराहमूर्त्यै नमः हंसः दक्षपादाङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं णं वाराह्यै नमः हंसः दक्षपादाङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं तं नृसिंहायै नमः हंसः वामोरूमूले
ॐ ऐं ह्रीं श्रीं थं सिंहविक्रमायै नमः हंसः वामजानुनि
ॐ ऐं ह्रीं श्रीं दं सहस्राक्ष्यै नमः हंसः वामगुल्फे
ॐ ऐं ह्रीं श्रीं धं सुराढ्यायै नमः हंसः वामपादाङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं नं सर्वपापहायै नमः हंसः वामपादाङ्गुलयग्रे
ॐ ऐं ह्रीं श्रीं पं शिवायै नमः हंसः दक्षपार्श्वे
ॐ ऐं ह्रीं श्रीं फं शिवदूत्यै नमः हंसः वामपार्श्वे
ॐ ऐं ह्रीं श्रीं बं घोररवायै नमः हंसः पृठे
ॐ ऐं ह्रीं श्रीं भं क्षुरिपाशासिगारिणयै नमः हंसः नाभौ
ॐ ऐं ह्रीं श्रीं मं विकराल्यै नमः हंसः जठरे
ॐ ऐं ह्रीं श्रीं यं महाकाल्यै नमः हंसः हृदये
ॐ ऐं ह्रीं श्रीं रं कापाल्यै नमः हंसः दक्षकक्षे
ॐ ऐं ह्रीं श्रीं लं पापहारिण्यै नमः हंसः गल पृष्ठे
ॐ ऐं ह्रीं श्रीं वं महालक्ष्म्यै नमः हंसः वामकक्षे
ॐ ऐं ह्रीं श्रीं शं महाकुक्ष्यै नमः हंसः हृदयादि दक्षकराङ्गुलयन्तम्
ॐ ऐं ह्रीं श्रीं षं योगिन्यै नमः हंसः हृदयादि वामकराङ्गुलयन्तम्
ॐ ऐं ह्रीं श्रीं सं वृन्दवन्दिन्यै नमः हंसः हृदयदि दक्षपादाङ्गुलयनम्
ॐ ऐं ह्रीं श्रीं हं षटचक्रीयै नमः हंसः हदयादि वामपादाङ्गुल्यन्तम्
ॐ ऐं ह्रीं श्रीं ळं चक्रनिलयायै नमः हंसः कट्यादि पादाङ्गुलयन्तम्
ॐ ऐं ह्रीं श्रीं क्षं चक्रगायोनिरूपिणी गदितायै नमः हंसः कट्यादि ब्रह्मरन्ध्रान्तम्
शक्तयस्त्वेतायै नमः

## त्वरिता नित्यायजनविधिः

श्रीतन्त्रराजे—(१४५०)

अथ षोडशनित्यासु नवमी या समीरिता । प्रोक्तैव त्वरिता विद्या प्रागेव द्वादशाक्षरा ।।१।।
तद्विधानं शृणु प्राज्ञे होमयन्त्रादिभिः समम् । येन मन्त्री मन्मथाभो विक्षोभयति भूतलम् ।।२।।

इति। तत्रैव—(३।४७)

आद्यं तु वह्निवासिन्या दूत्यादिस्तदनन्तरम् । हंसो धरास्वसंयुक्तः तेजश्चरसमन्वितम् ।।१।।
वायुः प्रभाचरयुता ग्रासः शक्तिसमन्वितः । हृदा रयेण दाहेन वह्निः स्यादष्टमं प्रिये ।।२।।
हंसः क्ष्मास्वयुतो ग्रासश्चरयुक्तो द्वितीयकम् । द्युतिर्नादयुता नित्या त्वरिता द्वादशाक्षरी ।।३।।

इति। "ॐ ह्रीं हुं खे च छे क्षः स्त्री हूं क्षे ह्रीं फट्"।। तथा त्रिपुरार्णवे—

ऋषिः सौरि र्विराट् छन्दो देवतेयं च पार्वति। कवचं स्त्री शक्तिबीजे क्षेच कीलकमीरितम्।।१।।

इयं तु त्वरिता नित्या। तन्त्रराजे—(१४।३)

विद्याचतुर्थवर्णादिसप्तभिस्त्वक्षरैस्तथा । कुर्यादङ्गानि युग्मार्णैः षट् क्रमेण कराङ्गयोः।।१।।
शिरोललाटकण्ठेषु हृन्नाभ्याधारकेषु च । ऊरुयुग्मे तथा जानुयुग्मे जङ्घाद्वये तथा ।।२।।
पादयुग्मे तथा वर्णान्मन्त्रजान् दश विन्यसेत् । द्वितीयोपान्त्यमध्यस्थैर्मन्त्रार्णैरितरैरपि ।।३।।
ताराद्यैः शृणु तद्ध्यानं तच्छक्तीस्तत्प्रपूजनम् । श्यामवर्णा शुभाकारां नवयौवनशोभिनीम्।।४।।
द्विद्विक्रमादष्टनागैः कल्पिताभरणोज्ज्वलाम् । ताटङ्कमङ्गदं तद्वद्रशनानूपुरान्वितैः ।।५।।
विप्रक्षत्रियविट्शूद्रजातिभिर्भीमविग्रहैः । पल्लवांशुकसंवीतां शिखिपुच्छकृतैः शुभैः ।।६।।
वलयैर्भूषितभुजां माणिक्यमुकुटोज्ज्वलाम् । बर्हिबर्हकृतापीडां तच्छत्रां तत्पताकिनीम् ।।७।।
गुञ्जागुणलसद्वक्षःकुचकुङ्कुममण्डनाम् । त्रिनेत्रां चारुवदनां मन्दस्मितमुखाम्बुजाम् ।।८।।
पाशाङ्कुशावराभीतिलसद्भुजचतुष्टयाम् । ध्यात्वैवं तोतुलां देवीं पूजयेच्छक्तिभिर्वृताम् ।।९।।
तदग्रस्थां च फट्कारीं शरचापकरोज्ज्वलाम्। प्रसादे फलदाने च साधकानां त्वरान्विताम् ।।१०।।
यतः सा त्वरितेत्युक्ता मया शक्तिर्नवम्यासौ । कृष्णवर्णो गदापाणिर्वर्वरोर्ध्वशिरोरुहः ।।११।।
किङ्करस्त्वग्रतस्तस्याः पूज्यः सर्वार्थसिद्धये । तद्द्वारपार्श्वयोः पूज्ये जयाविजयसंज्ञिके ।।१२।।
शक्ती तत्सदृशौ स्वर्णवेत्रवेल्लत्कराम्बुजे । हुङ्कारी खेचरी चण्डा छेदिनी क्षेपिणी ततः ।।१३।।
स्त्रीहुङ्कार्यौ क्षेमकरी लोकपालसमा इमाः । पूज्याः पद्माष्टपत्रेषु स्थिता मन्त्रार्णशक्तयः।।१४।।
याभिर्नित्यार्चिताभिः स्यान्नरो नारीषु मन्मथः। शृणु पूजाविधिं तस्यास्त्वरिताया महेश्वरि ।।१५।।
प्राग्वदर्घ्यं विधायेशीमष्टासिंहांघ्रिके शुभे । आसने हेमरचिते विदध्याद् भूपुरद्वयम् ।।१६।।

**पश्चिमद्वारसंयुक्तं तदन्तर्वृत्तयुग्मकम् । तदन्तरष्टपत्राब्जं विधायात्र परां शिवाम् ।।१७।।**
**प्राग्वदावाह्य परितः शक्तिभिर्वेष्टितां तथा । मुद्रादर्शनपूर्वं तु पूजयेत्तां यथोदिताम् ।।१८।।**
**अग्रपत्राग्रके वृत्तमध्ये वाच्यौ पुरोदितौ । किङ्करस्य बलिं दद्याद् देव्यग्रे प्रागुदीरितैः ।।१९।।**
**स्वसमानगणाकीर्णमण्डलस्थस्य भक्तितः । एवं पूजां विधायाग्रे जपेद्विद्यां सहस्रकम् ।।२०।।**
**शतं वा कृतहोमस्तु पूजां प्राग्वत् समापयेत् ।** इति।

अथ प्रयोगः तत्र प्राग्वदासनादियोगपीठन्यासान्ते त्वरिताविद्यया प्राणायामत्रयं कृत्वा, शिरसि सौरये **ॐ ऋषये नमः।** मुखे **ॐ विराट्छन्दसे नमः।** हृदि **ॐ त्वरितानित्यादेवतायै नमः।** गुह्ये **ॐ बीजाय नमः।** पादयोः **ॐ हुं शक्त्यै नमः।** नाभौ **ॐ क्षे कीलकाय नमः,**

इति विन्यस्य, ममाभीष्टसिद्धये विनियोगः,इति कृताञ्जलिरुक्त्वा

**ॐ खेच** हृदयाय नमः। **ॐ ह्रीं चछे** शिरसे स्वाहा। **ॐ ह्रीं छेक्षः** शिखाये वषट्। **ॐ ह्रीं क्षःस्त्री** कवचाय हुम्। **ॐ ह्रीं स्त्रीहूं** नेत्रत्रयाय वौषट्। **ॐ ह्रीं हूंक्षे** अस्त्राय फट्,

इति करषडङ्गन्यासं कृत्वा,

शिरसि **ह्रीं ॐ ह्रीं नमः।** ललाटे **ॐ ह्रीं ह्रीं हुं ह्रीं नमः।** कण्ठे **ॐ ह्रीं ह्रीं खे ह्रीं नमः।** हृदि **ॐ ह्रीं ह्रीं च ह्रीं नमः।** नाभौ **ॐ ह्रीं छे ह्रीं नमः।** मूलाधारे **ॐ ह्रीं क्षः ह्रीं नमः।** ऊरुद्वये **ॐ ह्रीं स्त्रीं ह्रीं नमः।** जानुद्वये **ॐ ह्रीं हूं ह्रीं नमः।** जङ्घाद्वये **ॐ ह्रीं ह्रीं क्षे ह्रीं नमः।** पादद्वये **ॐ ह्रीं ह्रीं फट् ह्रीं नमः।**

इति मायापुटितवर्णान् विन्यस्य समस्तविद्यया व्यापकं विन्यस्य ध्यानादिमानसपूजान्ते स्वर्णादिपट्टे कुङ्कुमादिना पश्चिमादिद्वारयुतं चतुरस्रद्वयं विधाय, तदन्तर्वृत्तद्वयोपेतमष्टदलपद्ममिति पूजाचक्रं विधाय, प्राग्वत्पुरातः संस्थाप्याभ्यर्च्यर्घ्यादिस्थापनाद्यात्मपूजान्ते भुवनेशीपीठमभ्यर्च्य, तत्र मूलविद्यया मूर्ति कल्पयित्वावाहनादिपुष्पोपचारान्ते कर्णिकान्तः प्राग्वत् षडङ्गानि गुरुपङ्क्तित्रयं च सम्पूज्य, पश्चाद् बहिर्वृत्तत्रयान्तराल स्थवीथीद्वये देव्यग्रदलाग्रबाह्ये

**ॐ फट्कारी पादुकां पूजयामि नमः।** बाह्यवीथ्यां देव्यग्र द्वारपार्श्वयोः **ॐ जयापादुकां पूजयामि नमः।**
**ॐ किङ्कर पादुकां पूजयामि नमः।**
**ॐ विजया पादुकां पूजयामि नमः।** अष्टपत्रेषु **ॐ हुङ्कार पादुकां पूजयामि नमः।**
**ॐ खेचरी पादुकां पूजयामि नमः।**
**ॐ चण्डा पादुकां पूजयामि नमः।**
**ॐ छेदिनी पादुकां पूजयामि नमः।**
**ॐ क्षेदिनी पादुकां पूजयामि नमः।**

ॐ क्षेपिणी पादुकां पूजयामि नमः। ॐ स्त्रीकारी पादुकां पूजयामि नमः।
ॐ हूङ्कारी पादुकां पूजयामि नमः। ॐ क्षेमकरी पादुकां पूजयामि नमः।

इति सम्पूज्य प्राग्वल्लोकपालर्चादिसर्व समापयेदिति। अत्र कुरुकुल्लाबलिदानानन्तरं किङ्करस्यापि देव्यग्रेऽन्नादिभिर्बलि दद्यात्, इति त्वरितानित्यायजनविधिः।।

## ९. श्री कुलसुन्दरी नित्या

ध्यानम्।

लोहितां लोहिताकारशक्तिवृन्दनिषेविताम्। लोहितांशुकभूषास्त्रग्लेपनां षण्मुखाम्बुजाम् ।।१।।
प्रतिवक्त्रं त्रिनयनां तथा चारुस्मितान्विताम्। अनर्घ्यरत्नघटितमाणिक्यमुकुटोज्ज्वलाम् ।।२।।
ताटङ्कहारकेयूररशनानूपुरोज्ज्वलाम् । रक्तस्तबकसम्भिन्नं लसद्वक्षःस्थलां शुभाम्।।३।।
कारुण्यानन्दपरमामरुणाम्बुजविष्टराम् । भुजैर्द्वादशभिर्युक्तां सर्वेषां सर्ववाङ्मयीम्।।४।।
प्रवालाक्षस्त्रजं पद्मं कुण्डिकां रत्ननिर्मिताम्। वसुपूर्णं तच्चषकं लुङ्गीव्याख्यानमुद्रिकाम् ।।५।।
दधानां दक्षिणैर्वामैः पुस्तकं चारुणोत्पलम्। हैमीं च लेखनीं रत्नमालां कम्बुवरं भुजैः।।६।।
अभितः स्तूयमानां च देवगन्धर्वकिन्नरैः। यक्षराक्षसदैवर्षिसिद्धविद्याधरादिभिः ।।७।।
ध्यात्वैवमर्चयेन्नित्यं वाक्लक्ष्मीकान्तिसिद्धये। सितां केवलवाक्सिद्धौ लक्ष्म्यै हेमप्रभामपि।।८।।
धूम्राभां वैरिविद्विष्ट्यै मृत्यवे निग्रहाय च। नालां च मूकीकरणेतां स्मरेत्तदणेक्षया ।।९।।

**1. Dhyana Sloka:—** "She is propitious, supremely kind, and blissul with twelve arms and six lotus-like faces which smile sweetly and three eyes in each face. She is red, seated on a red lotus and is smeared with blood. Her raiment and ornaments are red and is surrounded by Shaktis who are also red. Her crown is bright with gems beyond all price and rubies, earrings, neck-chains, armlets, waist chains and anklets highten Her own brightness. On Her beautious breasts are clusters of red gems. In Her are all the words of the Vedas. In Her right hands She carries a rosary of coral beads, a lotus, a *Kanaka* (*Kamandalu*) made of gems a drinking cup (*Chashaka*) made of gems, full of wealth, a citron or lemon (*Matulungga*) and with one hand She makes the gesture of explanation (*Vyakhyanamudra*). In the left hands are a book, red lotus. a golden pen, a garland of gems, a conch shell. She makes the gesture of granting boons (*Varamudra*). She is surrounded by Devas, Gandharvas, Kinnaras who sing Her praises as also by Yakshas, Rakshasas and the like. So should she be meditated upon for the attainment of learning, wealth and beauty. When worshipped for the attainment of learning. She is thought of as white, and when wealth is sought of Her, She is meditated upon as being of a golden colour."

**Efficacy :—** Sri Kulasundari gives one self-protection and those who want to attain scholarship should worship her in white form for attainment of riches and wealth in golden lue, to winour and annihilate the enemies in the form of smoke or in dark blue colour

**दामोदरोबिन्दुयुतः कलौ शान्तीन्दुसंयुतौ ।**
**भृगुर्मनुविसर्गाद्यस्त्र्यक्षराकुलसुन्दरी ।।२४।।**

२. **श्रीकुलसुन्दरी के मन्त्र का उद्धार**—बिन्दुयुत दामोदर (ऐं) शान्ति एवं इन्दुसहित क, ल (क्लीं) मनु एवं विसर्ग सहित भृगु (सौः) यह ३ अक्षर का कुलसुन्दरी का मन्त्र है।

३. श्रीकुलसुन्दरी का मन्त्र—**ऐं क्लीं सौः।**

४. श्रीकुलसुन्दरी का पूजन मन्त्र—**लं ऐं क्लीं सौः कुलसुन्दरी नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

५. श्रीकुलसुन्दरी नित्या गायत्री:— **ॐ कुलसुन्दर्यै विद्महे कामेश्वर्यै धीमहि तन्नो नित्या प्रचोदयात्।**

## *श्रीकुलसुन्दरी नित्या मातृकान्यासः*

अस्यश्री कुलसुन्दरी नित्या महामन्त्रस्य। दक्षिणामूर्ति ऋषिः पङ्क्ति छन्दः। श्री कुलसुन्दरी देवता। ऐं बीजं सौः शक्तिः। क्लीं कीलकम्

| | |
|---|---|
| **ॐ ऐं** अङ्गुष्ठाभ्यां **नमः** | **ॐ ऐं** हृदयाय **नमः** |
| **ॐ क्लीं** तर्जनीभ्यां **नमः** | **ॐ क्लीं** शिरसे **स्वाहा** |
| **ॐ सौः** मध्यमाभ्यां **नमः** | **ॐ सौः** शिखायै **वषट्** |
| **ॐ ऐं** अनामिकाभ्यां **नमः** | **ॐ ऐं** कवचाय हुम् |
| **ॐ क्लीं** कनिष्ठिकाभ्यां **नमः** | **ॐ क्लीं** नेत्रत्रयाय **वौषट्** |
| **ॐ सौः** करतलपृष्ठाभ्याम् **नमः** | **ॐ सौः** अस्त्राय **पट्** |

**ॐ भूर्भुवस्वरोम्** इति दिग्बन्धः

ध्यानम्

**अरुणकिरणजालैरञ्जिताशावकशा विधृत जपवटीका पुस्तकाभीतिहस्ता।**
**इतरकरवराढ्या कुलकल्हारसंस्था निवसतु हृदिबाला नित्यकल्याणशीला।।**

पञ्चपूजा—

लमिति पञ्चपूजा

ॐ ऐं ह्रीं श्रीं अं बालोमायै नमः हंसः शिरसि
ॐ ऐं ह्रीं श्रीं आं भैरव्यै नमः हंसः मुखावृत्ते
ॐ ऐं ह्रीं श्रीं इं शान्तायै नमः हंसः दक्षनेत्रे
ॐ ऐं ह्रीं श्रीं ईं त्रिपुरायै नमः हंसः वामनेत्रे
ॐ ऐं ह्रीं श्रीं उं त्रिपुरेश्वर्यै नमः हंसः दक्षकर्णे
ॐ ऐं ह्रीं श्रीं ऊं अहिंसायै नमः हंसः वामकर्णे
ॐ ऐं ह्रीं श्रीं ऋं तिमिरघ्नीयै नमः हंसः दक्षनासापुटे
ॐ ऐं ह्रीं श्रीं ॠं भास्वरायै नमः हंसः वामनासापुटे
ॐ ऐं ह्रीं श्रीं लृं सूर्यमण्डलायै नमः हंसः दक्षकपोले
ॐ ऐं ह्रीं श्रीं लॄं वरायुधायै नमः हंसः वामकपोले
ॐ ऐं ह्रीं श्रीं एं वरारोहायै नमः हंसः ऊर्ध्वोष्ठे
ॐ ऐं ह्रीं श्रीं ऐं वरेण्यायै नमः हंसः अधरोष्ठे
ॐ ऐं ह्रीं श्रीं ओं विष्णुवल्लभायै नमः हंसः ऊर्ध्वदन्तपङ्क्तौ
ॐ ऐं ह्रीं श्रीं औं श्रुत्यै नमः हंसः अधोदन्तपङ्क्तौ
ॐ ऐं ह्रीं श्रीं अं निरन्तरायै नमः हंसः जिह्वाग्रे
ॐ ऐं ह्रीं श्रीं अः वेद्यायै नमः हंसः कण्ठे
ॐ ऐं ह्रीं श्रीं कं सिद्ध्यै नमः हंसः दक्षबाहुमूले
ॐ ऐं ह्रीं श्रीं खं सर्वार्थसाधिन्यै नमः हंसः दक्ष कूर्परे
ॐ ऐं ह्रीं श्रीं गं पञ्चपञ्चात्मिकायै नमः हंसः दक्षमणिबन्धे
ॐ ऐं ह्रीं श्रीं घं गुह्यायै नमः हंसः दक्षकराङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं ङ गोनिवासायै नमः हंसः दक्षकराङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं चं गोधनायै नमः हंसः वामबाहुमूले
ॐ ऐं ह्रीं श्रीं छं साध्यै नमः हंसः वामकूर्परे
ॐ ऐं ह्रीं श्रीं जं योगोद्भवायै नमः हंसः वाममणिबन्धे

| | | |
|---|---|---|
| ॐ ऐं ह्रीं श्रीं झं शक्त्यै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं ञं मात्रे | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं टं काष्ठायै | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं ठं कलात्मिकायै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं डं पीयूषायै | नमः हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं ढं वाजिजिह्वायै | नमः हंसः | दक्षपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं णं रसाधारायै | नमः हंसः | दक्षपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं तं इरम्मदायै | नमः हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं थं विद्युच्छतघ्नीयै | नमः हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं दं सिंहाक्ष्यै | नमः हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं धं एकपिङ्गाङ्कितायै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं नं सदायै | नमः हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं पं कपाल्यै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं बं वेद्यायै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं भं वेताल्यै | नमः हंसः | नाभौ |
| ॐ ऐं ह्रीं श्रीं मं भूतसंघनमस्कृतायै | नमः हंसः | जठरे |
| ॐ ऐं ह्रीं श्रीं यं स्पृष्टायै | नमः हंसः | हृदये |
| ॐ ऐं ह्रीं श्रीं रं स्पृष्टपदायै | नमः हंसः | दक्षकक्षे |
| ॐ ऐं ह्रीं श्रीं लं भवायै | नमः हंसः | गलपृष्ठे |
| ॐ ऐं ह्रीं श्रीं वं विभवायै | नमः हंसः | वामकक्षे |
| ॐ ऐं ह्रीं श्रीं शं देशभाषिण्यै | नमः हंसः | हृदयादि दशकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं षं सर्वारम्भायै | नमः हंसः | हृदयादि वामकराङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं सं निरारम्भायै | नमः हंसः | हृदयदि दक्षपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं हं आरम्भायै | नमः हंसः | हृदयादि वामपादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं ळं भाववाहिन्यै | नमः हंसः | कट्यादि पादाङ्गुल्यन्तम् |
| ॐ ऐं ह्रीं श्रीं क्षं भारतीभास्वरायै | नमः हंसः | कट्यादि ब्रह्मरन्ध्रान्म |

## कुलसुन्दरी पूजा विधि

तत्र श्रीतन्त्रराजे—(१५प०)

अथ षोडशनित्यासु दशमी या समीरिता। विद्योक्ता कुलसुन्दर्यास्तस्याः पूजाविधिं शृणु ।।१।।
तद्ध्यानमथ तन्न्यासं तच्छक्तीस्तत्समर्चनम्।

इति। तत्रैव—(३।५१)

शुचिः स्वेन युतस्त्वाद्यो रसावह्निसमन्वितः। प्राणो द्वितीयः स्वयुतो वनहृच्छक्तिभिः परः ।।१।।
इतीरिता त्र्यक्षरी स्यान्नित्या सा कुलसुन्दरी ।

इति। "ऐं क्लीं सौः" ।। त्रिपुरार्णवे—

ऋषिस्तु दक्षिणामूर्तिरहं शिरसि विन्यसेत् । छन्दः पङ्क्तिस्तु विज्ञेयं मुखे विन्यस्य देवताम् ।।१।।
हृदये परमेशानीं विन्यसेत् कुलसुन्दरीम् । वाग्भवं बीजमित्युक्तं शक्तिस्तार्तीयमीरितम् ।।२।।
कामबीजं कीलकं स्यात् पुरुषार्थे नियोजितम् ।

इति। तन्त्रराजे—(१५।१२)

त्रिभिस्तैरुदितैर्मूलवर्णैः कुर्यात् षडङ्गकम् । आद्यमध्यावसानेषु पूजाजपविधौ क्रमात् ।।१।।
प्रत्येकं तैस्त्रिभिर्बीजैर्दीर्घस्वरसमन्वितैः । कुर्यात् कराङ्गवक्त्राणां न्यासं प्रोक्तं यथाविधि ।।२।।
ऊर्ध्वप्राग्दक्षिणोदक्च पश्चिमापरनामभिः । शुचिनत्यन्तरस्थैस्तैस्तदात्मसु यथाक्रमम् ।।३।।
आधाररन्ध्रहृत्स्वेकं द्वितीयं लोचनत्रये । तृतीयं श्रोत्रचिबुके चतुर्थं घ्राणतालुषु ।।४।।
पञ्चमं (त्रा?चां) सनाभीषु तथोरुपाणिपद्द्वये। मूलमध्याग्रतो न्यस्येन्नवधा मूलवर्णकैः ।।५।।
लोहितां लोहिताकारशक्तिवृन्दनिषेविताम् । लोहितांशुकभूषास्त्रग्लेपनां षण्मुखाम्बुजाम् ।।६।।
प्रतिवक्त्रं त्रिनयनां तथा चारुस्मितान्विताम् । अनर्घ्यरत्नघटितमाणिक्यमुकुटोज्ज्वलाम् ।।७।।
ताटङ्कहारकेयूररशनानूपुरोज्ज्वलाम् । रत्नस्तबकसम्भिन्नलसद्वक्षःस्थलां शुभाम् ।।८।।
कारुण्यानन्दपरमामरुणाम्बुजविष्टराम् । भुजैर्द्वादशभिर्युक्तां सर्वेशीं सर्ववाङ्मयीम् ।।९।।
प्रवालाक्षस्रजं पद्मं कुण्डिकां रत्ननिर्मिताम् । रत्नपूर्णं तु चषकं लुङ्गीं व्याख्यानमुद्रिकाम् ।।१०।।
दधानां दक्षिणैर्वामैः पुस्तकं चारुणोत्पलम् । हैमीं च लेखनीं रत्नमालां कम्बु वरं भुजैः ।।११।।
अभितः स्तूयमानां च देवगन्धर्वकिन्नरैः । यक्षराक्षसदेवर्षिसिद्धविद्याधरादिभिः ।।१२।।
ध्यात्वैवमर्चयेन्नित्यं वाग्लक्ष्मीकान्तिसिद्धये । सितां केवलवाक्सिद्ध्यै लक्ष्म्यै हेमप्रभामपि।।१३।।
धूमाभां वैरिविद्विष्ट्यै मृतये निग्रहाय च । नीलां च मूकीकरणे स्मरेत्तत्तदपेक्षया ।।१४।।
भाषा सरस्वती वाणी संस्कृता प्राकृतापरा । बहुरूपा चित्ररूपा रम्याप्यानन्दकौतुके ।।१५।।

**एवमेकादश प्रोक्ता नवयोनिषु पूजयेत् । बहिरष्टच्छदाम्भोजे बाह्याद्यास्ताः समर्चयेत् ।।१६।।**
**चतुरस्रे लोकपालान् शक्तिरूपान् समर्चयेत्। इन्द्राग्नियमरक्षोभिर्वरुणानिलसोमकान् ।।१७।।**
**ईशानन्तविधीन् प्रागाद्यष्टदिक्ष्वधरोत्तरम्। शक्त्यान्तैर्नामभिः प्राग्वत् पूजयेत् सर्वसिद्धये ।।१८।।**
**चतुरस्रद्वयं कुर्यात् प्राक्प्रत्यग्द्वारसंयुतम् । तन्मध्ये वृत्तयुग्मस्थं कुर्यादष्टच्छदाम्बुजम् ।।१९।।**
**चतुस्त्रिपञ्चचत्वारिभागतो नवयोनिकम् । कृत्वात्र तां समावाह्य प्राग्वत् सम्यगथार्चयेत् ।।२०।।**
**एकादशस्वन्तशक्ती मध्ययोनेस्तु पार्श्वयोः । तथैव लोकपालान्तशक्ती द्वारद्वयेऽर्चयेत् ।।२१।।**
**विशेष एव?एष) सामान्यमन्यदर्चनमम्बिके। सप्ताक्षर्या बलिं दद्यात् पूजान्ते कुरुकुल्लया ।।२२।।**
**एवं नित्यार्चनं कुर्यान्नित्यहोमं घृतेन वै ।** इति।

अथ प्रयोगः : तत्र प्राग्वदासनादियोगपीठन्यासान्ते मूलेन प्राणायामत्रयं कृत्वा, शिरसि **ॐ दक्षिणामूर्तिऋषये नमः।**

मुखे **ॐ पङ्क्तिच्छन्दसे नमः।** हृदये **ॐ कुलसुन्दरीनित्यादेवतायै नमः।** गुह्ये **ॐ ऐं बीजाय नमः।** पादयोः **ॐ सौः शक्तये नमः।** नाभौ **ॐ क्लीं कीलकाय नमः।**

इति विन्यस्य मम पुरुषार्थचतुष्टयसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा पूजारम्भे जपारम्भे

**ॐ आं** हृदयाय **नमः।** **ॐ ईं** शिरसे **स्वाहा।** **ॐ ऊं** शिखायै **वषट्।**
**ॐ ऐं** कवचाय **हुं।** **ॐ औं** नेत्रत्रयाय **वौषट्।** **ॐ अः** अस्त्राय **फट्,**

इति कराङ्गयोर्विन्यस्य,

शिरसि **ॐ ऐं आं ऊर्ध्ववक्त्राय नमः।** मुखे **ॐ ऐं ईं पूर्ववक्त्राय नमः।**
दक्षकर्णे **ॐ ऐं ऊं दक्षिणवक्त्राय नमः।** वामकर्णे **ॐ ऐं ऐं उत्तरवक्त्राय नमः।**
चूडाधः **ॐ ऐं औं पश्चिमवक्त्राय नमः।** चिबुके **ॐ ऐं अः अपरवक्त्राय नमः।**

इति विन्यसेत्। पूजामध्ये त्वावरणपूजारम्भे विद्याया मध्यबीजं षड्दीर्घस्वरैर्भिन्नं कृत्वा क्लांक्लीमित्यादिना न्यसेत्। पृजान्तेऽपि विद्याया अन्त्यबीजं तथैव स्वभिन्नं कृत्वा सांसीमित्यादिना न्यसेत्। मध्ये जपान्ते च। जपमध्यमुद्दिष्टसंख्याया अर्धजपानन्तरमिति। अथ प्रकृते प्रथमकूटस्य वक्त्रन्यासानन्तरं

भूत्वा **(यः) ॐ आधारे ऐं। ब्रह्मरन्ध्रें ॐ क्लीं। हृदये सौः।** दक्षनेत्रे **ॐ ऐं।**
वामनेत्रे **ॐ क्लीं।** ललाटनेत्रे **ॐ सौः।** दक्षश्रोत्रे **ॐ ऐं।**
वामे **ॐ क्लीं।** चिबुके **ॐ सौः।** दक्षनसि **ॐ ऐं।**

| | | |
|---|---|---|
| वामे **ॐ क्लीं।** | तालुनि **ॐ सौः।** | दक्षांसे **ॐ ऐं।** |
| वामे **ॐ क्लीं।** | नाभौ **ॐ सौः।** | दक्षदोर्मूले **ॐ ऐं।** |
| मध्ये **ॐ क्लीं।** | अग्रे **ॐ सौः।** | वामदोर्मूले **ॐ ऐं।** |
| मध्ये **ॐ क्लीं।** | अग्रे **ॐ सौः।** | दक्षोरुमूले **ॐ ऐं।** |
| मध्ये **ॐ क्लीं।** | अग्रे **ॐ सौः**, एवं | पाणिपादद्वये |

इति विन्यस्य ततो मूलविद्यया व्यापकं कुर्यात्। पूजाजपमध्यान्तयोरपि मध्यबीजान्त्यबीजाभ्यां वक्त्रन्यासानन्तरं मूलबीजैर्नवविधन्यासं व्यापकस्य न्यासं च कुर्यादिति सम्प्रदायः। ततो ध्यानमानसपूजान्ते प्राग्वत्स्वर्णादिपट्टे कुङ्कुमादिनाष्टदलपद्मं कृत्वा तत्कर्णिकायां प्राग्वन्नवयोनिचक्रं विधाय, पद्माद्बहिर्वृत्तद्वयं तद्बहिः पूर्वपश्चिमद्वारद्वययुतं चतुरस्रद्वयं कुर्यादिति पूजाचक्रं निर्माय, प्राग्वत् पुरतः संस्थाप्याभ्यर्च्यार्घ्यादि-स्थापनाद्यात्मपूजान्ते मण्डूकादिज्ञानात्मान्ते प्राग्वत् पीठपूजान्तं कृत्वाष्टदलकेसरेषु

| | | |
|---|---|---|
| **ॐ ह्रीं वामायै नमः** | **ॐ ह्रीं ज्येष्ठायै नमः** | **ॐ ह्रीं रौद्र्यै नमः** |
| **ॐ ह्रीं अम्बिकायै नमः** | **ॐ ह्रीं इच्छायै नमः** | **ॐ ह्रीं ज्ञानायै नमः** |
| **ॐ ह्रीं क्रियायै नमः** | **ॐ ह्रीं कुलिकायै नमः** | **ॐ ह्रीं चित्रायै नमः** |
| **ॐ ह्रीं विषघ्न्यै नमः** | **ॐ ह्रीं दूतर्य्यै नमः** | **ॐ ह्रीं आनन्दायै नमः** |

इति द्वादशशक्तीः सम्पूज्य, **हसौं ॐ ह्रीं सदाशिवमहाप्रेतपद्मासनाय नमः**, इति समस्तं पीठं सम्पूज्य, तत्र कुलसुन्दरीविद्यया मूर्तिं परिकल्प्यावाहनादिप्राणप्रतिष्ठान्ते प्रागुक्तषड्वक्त्रन्यासमन्त्रैर्देव्या वक्त्रषट्कं सम्पूज्यासनादिपूजोपचारान्ते, ततस्त्रिकोणस्याग्रकोणे २ भाषापादुकां पूजयामि नमः, इति सम्पूज्याष्टयोनिषु देव्यग्रयोनिमारभ्य प्रादक्षिण्येन

| | |
|---|---|
| **ॐ ह्रीं सरस्वती पादुकां पूजयामि नमः** | **ॐ ह्रीं वाणी पादुकां पूजयामि नमः** |
| **ॐ ह्रीं संस्कृता पादुकां पूजयामि नमः** | **ॐ ह्रीं प्राकृता पादुकां पूजयामि नमः** |
| **ॐ ह्रीं परा पादुकां पूजयामि नमः** | **ॐ ह्रीं बहुरूपा पादुकां पूजयामि नमः** |
| **ॐ ह्रीं चित्ररूपा पादुकां पूजयामि नमः** | **ॐ ह्रीं रम्या पादुकां पूजयामि नमः** |

इत्यष्टौ शक्तीः सम्पूज्य, अन्तर्योन्यां देव्याः पृष्ठदक्षिणकोणे **आनन्दा पादुकां पूजयामि नमः, तद्वामे ॐ कौतुका पादुकां पूजयामि नमः,** इति सम्पूज्य अष्टदलेषु प्राग्वद्ब्राह्मयाद्याः सम्पूज्य, चतुरस्रे प्राग्वल्लोकपालान् **ॐ इन्द्रशक्ति पादुकां पूजयामि नमः,** इत्यादि शक्तिरूपान्सम्पूज्य, तदायुधान्यपि तथैव **शक्तिरूपाणि सम्पूज्य** धूपादिसर्वं कृत्वा प्राग्वत्समापयेत्, इति कुलसुन्दरीनित्यासपर्याविधिः।।

# १०. श्री नित्य नित्या

ध्यानम्।

**व्यापकं च समस्तेन विधाय विधिना युतम्। ध्यायेत् समस्त सम्पत्तिहेतोः सर्वात्मिकां शिवाम्।।१।।**

**उद्यद्भास्करबिम्बास्यां माणिक्यमकुटोज्ज्वलाम् । पद्मरागकृताकल्पामरुणांशुकधारिणीम्।।२।।**

**चारुस्मित लसद्वक्त्र षट्सरोजविराजिताम् । प्रतिवक्त्रं त्रिनयनां भुजैर्द्वादशभिर्युताम्।।३।।**

**पाशेक्षुगुणपुण्ड्रेक्षु चापखेट त्रिशूलकान् । वहन्तीं वरदां वामैरङ्कुशं पुस्तकं तथा।।४।।**

**पुष्पेषु मण्डलाग्रञ्च नृकपालाभये तथा । दधानां दक्षिणैर्हस्तैर्ध्यायेद्देवीमनन्यथा।।५।।**

**1. Dhyana Sloka:—** All moving bodies are controlled by Her and by Her all *jivas* dwell in their respective bodies. She is beneficient and pervades all beings (*Sarvatmika*) for She is the *chaitanya* in all. According to the Manorama, She is the presiding *Devata* over *Dakini* and others who are the Shaktis of the bodily Dhatus. Coloured like the rising sun She bears on Her head a luminous crown. Her face is lit by a soft smile. She is dressed in red raiment and adorned with rubies. She has three eyes and twelve hands. With Her right hands, She carries the noose, the white lotus, sugarcane bow, shield and trident and makes the gesture of granting favours (*Varamudra*); and in the left hands She carries the goad, book, flowery arrows, sword, skull and makes the gesture of dispelling fear (*Abhaya mudra*) her Shaktis are countless and form a complete circle."

**Efficacy:—** This Devi besides giving worshipper the physical strength also augments his spiritual powers and bestows the eight great attainments (*siddhis*) also to those who persevere to very end!

**भैरवीबालयायुक्ताप्राक्पश्चाच्चक्रमोत्क्रमात् ।**
**तदन्ते पञ्चबाणाः स्युर्नित्यामन्वक्षरेरिता ।।२५।।**

**२. श्रीनित्य नित्या के मन्त्र का उद्धार—** आगे एवं पीछे क्रम एवं उत्क्रम से बालामन्त्र (**ऐं क्लीं सौः**) से संपुटित त्रिपुरभैरवी (**हस्त्रौ हस्क्ल्री हस्त्रौः**) और इसके बाद पंचबाण बीज (**द्रां द्रीं क्लीं ब्लूं सः**) लगाने से नित्या का १४ अक्षर का मन्त्र बनता है।

३. अनित्य नित्या का मन्त्र— **ऐं क्लीं सौः ह्स्त्रौः ह्स्क्ल्रीं हस्त्रौः सौः क्लीं ऐं द्रां द्रीं क्लीं ब्लूं सः।**

४. श्रीनित्य नित्या पूजन मन्त्र— **लृं 'ऐं क्लीं सौः........' नित्या श्रीपादुकां पूजयामि नमः।**

५. श्रीनित्य नित्या गायत्री— **ॐ नित्यभैरव्यै विद्महे नित्या नित्यायै धीमहि तन्नो नित्या प्रचोदयात्।**

## श्री नित्य नित्या मातृकान्यास:

अस्य श्री नित्या नित्या महामन्त्रस्य। जमदग्निरामऋषि: पक्ति:छन्द: श्रीनित्यनित्या देवता। ऐं बीजं सौ: शक्ति: क्लीं कीलकम्।

| | | | | | |
|---|---|---|---|---|---|
| ॐ **ऐं** | अंगुष्ठाभ्यां | नम: | ॐ **ऐं** | हृदयाय **नमः** | |
| ॐ **क्लीं** | तर्जनीभ्यां | नम: | ॐ **क्लीं** | शिरसे **स्वाहा** | |
| ॐ **सौः** | मध्यमाभ्यां | नम: | ॐ **सौः** | शिखायै **वषट्** | |
| ॐ **सौः** | अनाभिकाभ्यां | नम: | ॐ **सौः** | कवचाय **हुम्** | |
| ॐ **क्लीं** | कनिष्ठिकाभ्यां | नम: | ॐ **क्लीं** | नेत्रत्रयाय **वौषट्** | |
| ॐ **ऐं** | करतलपृष्ठाभ्यां | नम: | ॐ **ऐं** | अस्त्राय **फट्।** | |

ॐ **भू** **भुवरस्वरोम्** इतिदिग बन्ध:

ध्यानं :—

**उद्यत्प्रद्योतननिभां जपाकुसुमसन्निभां। हरिचन्दनलिप्ताङ्गी रक्तमाल्यविभूषिताम्।।**
**रत्नाभरणभूषाङ्गीं रक्तवस्त्रसुशोभितां। जगदम्बां नमस्यामि नित्यां श्रीपरमेश्वरीम्।।**

लमिति पंचपूजा

| | | | |
|---|---|---|---|
| **ॐ ऐं ह्रीं श्रीं** | **अं नित्यायै** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं** | **आं भैरव्यै** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं** | **इं सूक्ष्मायै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **ईं प्रचण्डायै** | **नमः हंसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं** | **उं सद्गतिप्रदायै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं** | **ऊं प्रियायै** | **नमः हंसः** | वामकर्णे |
| **ॐ ऐं ह्रीं श्रीं** | **ऋं शुद्धायै** | **नमः हंसः** | दक्षनासपुटे |
| **ॐ ऐं ह्रीं श्रीं** | **ॠं शुष्कायै** | **नमः हंसः** | वामनासपुटे |
| **ॐ ऐं ह्रीं श्रीं** | **लृं रक्ताङ्ग्यै** | **नमः हंसः** | दक्षकपोले |
| **ॐ ऐं ह्रीं श्रीं** | **लॄं रक्तलोचनायै** | **नमः हंसः** | वामकपोले |
| **ॐ ऐं ह्रीं श्रीं** | **एं खट्वाङ्गधारिण्यै** | **नमः हंसः** | ऊर्ध्वेष्ठे |
| **ॐ ऐं ह्रीं श्रीं** | **ऐं शङ्खायै** | **नमः हंसः** | अधरोष्ठे |
| **ॐ ऐं ह्रीं श्रीं** | **ओं कङ्कालायै** | **नमः हंसः** | ऊर्ध्वदन्तपङ्क्तौ |

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | औं कालवर्हिण्यै | नमः हंसः | अधोदन्तपङ्क्तौ |
| ॐ ऐं ह्रीं श्रीं | अं हिमघ्नयनायै | नमः हंसः | जिह्वाग्रे |
| ॐ ऐं ह्रीं श्रीं | अः वृत्तायै | नमः हंसः | कण्ठे |
| ॐ ऐं ह्रीं श्रीं | कं सम्प्रोक्तायै | नमः हंसः | दक्षबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | खं स्वरशक्त्यै | नमः हंसः | दक्ष कूर्परे |
| ॐ ऐं ह्रीं श्रीं | गं भूतनाथायै | नमः हंसः | दक्षमणिबन्धे |
| ॐ ऐं ह्रीं श्रीं | घं भूतभाव्यायै | नमः हंसः | दक्षकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ङं दुर्वृत्तजनसम्पदायै | नमः हंसः | दक्षकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | चं पुण्योत्सवायै | नमः हंसः | वामबाहुमूले |
| ॐ ऐं ह्रीं श्रीं | छं पुण्यगन्धायै | नमः हंसः | वाम कूर्परे |
| ॐ ऐं ह्रीं श्रीं | जं पुण्यपापविवेकिन्यै | नमः हंसः | वाममणिबन्धे |
| ॐ ऐं ह्रीं श्रीं | झं दिग्वासायै | नमः हंसः | वामकराङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | ञं क्षौमवसनायै | नमः हंसः | वामकराङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | टं एकवस्त्रायै | नमः हंसः | दक्षोरूमूले |
| ॐ ऐं ह्रीं श्रीं | ठं जटाधरायै | नमः हंसः | दक्षजानुनि |
| ॐ ऐं ह्रीं श्रीं | डं कपालमालिन्यै | नमः हंसः | दक्षगुल्फे |
| ॐ ऐं ह्रीं श्रीं | ढं घण्टाधरायै | नमः हंसः | दक्षपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | णं धनुर्धरायै | नमः हंसः | दक्षपाङ्गुलल्य |
| ॐ ऐं ह्रीं श्रीं | तं टङ्कहस्तायै | नमः हंसः | वामोरूमूले |
| ॐ ऐं ह्रीं श्रीं | थं चलायै | नमः हंसः | वामजानुनि |
| ॐ ऐं ह्रीं श्रीं | दं ब्राह्म्यै | नमः हंसः | वामगुल्फे |
| ॐ ऐं ह्रीं श्रीं | धं हाकिन्यै | नमः हंसः | वामपादाङ्गुलिमूले |
| ॐ ऐं ह्रीं श्रीं | नं शाकिन्यै | नमः हंसः | वामपादाङ्गुल्यग्रे |
| ॐ ऐं ह्रीं श्रीं | पं रमायै | नमः हंसः | दक्षपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | फं ब्रह्माण्डपालितमुखायै | नमः हंसः | वामपार्श्वे |
| ॐ ऐं ह्रीं श्रीं | बं विष्णुमायायै | नमः हंसः | पृष्ठे |
| ॐ ऐं ह्रीं श्रीं | भं चतुर्भुजायै | नमः हंसः | नाभौ |

ॐ ऐं ह्रीं श्रीं मं अष्टादशभुजायै नमः हंसः जठरे

ॐ ऐं ह्रीं श्रीं यं भीमायै नमः हंसः हृदये

ॐ ऐं ह्रीं श्रीं रं विचित्रायै नमः हंसः दक्षकक्षे

ॐ ऐं ह्रीं श्रीं लं चित्ररूपिण्यै नमः हंसः गलपृष्ठे

ॐ ऐं ह्रीं श्रीं वं पद्मासनायै नमः हंसः वामकक्षे

ॐ ऐं ह्रीं श्रीं शं पद्मवहायै नमः हंसः हृदयादि दक्षकराङ्गुल्यन्तम्

ॐ ऐं ह्रीं श्रीं षं स्फुरत्कान्त्यै नमः हंसः हृदयादि वामकरांगुल्यन्तम्

ॐ ऐं ह्रीं श्रीं सं शुभावहायै नमः हंसः हृदयादि दक्षपादाङ्गुल्यन्तम्

ॐ ऐं ह्रीं श्रीं हं मौनिनी मौलिन्यै नमः हंसः हृदयादि वामपादाङ्गुल्यन्तम्

ॐ ऐं ह्रीं श्रीं ळं मान्या मानदा मानवर्द्धिन्यै नमः हंसः कट्यादि पादांगुल्यन्तं

ॐ ऐं ह्रीं श्रीं क्षं जगत्प्रिया विष्णुगर्भायै नमः हंसः कट्यादि ब्रह्मन्ध्रान्म्
ब्रह्मरन्ध्रान्तम्

ॐ मङ्गला मङ्गलप्रियायै नमः।। ॐ भूतिर्भूतिकरी भाग्यायै नमः।।

ॐ भोगीन्द्रशयना मितायै नमः।। ॐ तमवामीकरी कृत्यायै नमः।।

ॐ आर्या वंशविवर्द्धिन्यै नमः।। ॐ अघौघशोषणी श्राव्यै नमः।।

कृतान्ताशक्तस्त्विमायै नमः।।

## *नित्यनित्यायजनविधिः*

श्रीतन्त्रराजे—(१६ प०)

**अथ षोडशनित्यासु या प्रोक्तैकादशी तु ताम्। नित्यानित्यां शृणु प्राज्ञे तदायत्तमिदं जगत्।।१।।**
**विद्योद्धारः कृतः पूर्वं तद्विधानमिहोच्यते। यासौ समस्तभूतानां देहस्थितिविधायिनी।।२।।**
**न्यासध्यानं ततः शक्तीस्ताभिः पूजां च साधनम्।**

इति। तत्रैव—(३।५३)

**हंसश्च हृत्प्राणरसादाहकुर्भिः समन्वितः। विद्यया कुलसुन्दर्या योजितः सम्प्रदायतः।।१।।**

इति। "**हसकलरडैं हसकलरडीं हसकलरडीः**"।। इति त्रिपुरार्णवे— "नित्यानित्या तु बाला चे" ति अत्र बालानित्यानित्ययोरभेदात् करषडङ्गार्घ्यादिकं बालाया इव ज्ञेयम्। तन्त्रराजे—(१६।४)

**दीर्घस्वरसमेताभ्यां हंसहृद्भ्यां षडङ्गकम्। भ्रूमध्ये कण्ठहृन्नाभिगुह्याधारेषु च क्रमात्।।१।।**
**विद्याक्षराणि क्रमशो न्यसेद्बिन्दुयुतानि च। व्यापकं तु समस्तेन विधाय विधिना युतम्।।२।।**
**ध्यायेत्तां सर्वसम्पत्तिहेतोः सर्वात्मिकां शुभाम्। उद्यद्भास्करबिम्बाभां माणिक्यमुकुटोज्ज्वलाम्।।३।।**
**पद्मरागकृताकल्पामरुणांशुकधारिणीम्। चारुस्मितलसद्वक्त्रषट्सरोजविराजिताम्।।४।।**
**प्रतिवक्त्रं त्रिनयनां भुजैर्द्वादशभिर्युताम्। पाशाक्षगुणपुण्ड्रेक्षुचापखेटत्रिशूलकान्।।५।।**
**वरं वामैर्दधानां चाप्यंकुशं पुस्तकं तथा। पुष्पेषु मण्डलाग्रं च कपालमभयं तथा।।६।।**
**दधानां दक्षिणैर्हस्तैर्ध्यायेद् देवीमनन्यधीः। अनन्ताः शक्तयो देव्यास्त्वाकर्णय वदामि ते।।७।।**
**ललिताशक्तिवृन्दाश्च बीजद्वयमथो क्रमात्। पूर्णमण्डलवर्णाः स्युरन्ते शक्तीतिसंयुताः।।८।।**
**सप्ताक्षर्या युता संज्ञा विद्याः स्यायुर्द्वादशाक्षराः। षट्सप्तत्या पञ्चशतं यजेत्ताभिर्वृतां शिवाम्।।९।।**
**षट्कोणकोणेष्वासीना डाकिन्याद्यास्तथार्चयेत्। रक्षोनिलेन्द्रवह्नीशवरुणेषु क्रमाच्च ताः।।१०।।**
**डाकिनी राकिणी पश्चाल्लाकिनी काकिनी तथा। शाकिनी हाकिनी मूलदेवीसदृशविग्रहाः।।११।।**
**हेतोस्तामभितः शक्तिरूपास्तन्मुकुटानताः। कृतन्यासार्धसंकल्पः पूजयेदीरितक्रमात्।।१२।।**
**सतिलद्वयहोमं तु जपेद्विद्यां यथोदिताम्। षट्कोणाद्बहिरब्जं तु शतार्धैकदलान्वितम्।।१३।।**
**कृत्वा तेष्वपि ताभिस्तु वृता पूज्या तु मध्यतः। द्विचतुष्षड्दलशतैर्द्वादशाष्टदलच्छदैः।।१४।।**
**पद्मैरावृतषट्कोणे यजेल्लघ्वीरितार्चना। चतुरस्रद्वयं बाह्ये चतुर्द्वारसमन्वितम्।।१५।।**
**विधाय तेषु शाखाश्च शक्तीनां विंशतिं यजेत्। ब्राह्म्यादिलोकपालाख्याः षोडशद्वारसंस्थिताः।।१६।।**
**अनन्तब्रह्मनियतिकालरूपा विदिग्गताः** ।।इति।।

अथ प्रयोगः— तत्र प्राग्वदासनयोगपीठन्यासान्ते नित्यानित्याविचया प्राणायामत्रयं कृत्वा, शिरसि **ॐ ह्री दक्षिणामूर्तिर्ऋषये नमः।** मुखे **ॐ पङ्क्तिच्छन्दसे नमः।** हृदि **ॐ न्त्यानित्यादेवतायै नमः।** गुह्ये **ॐ ह्रीं ऐं बीजाय नमः।** पादयोः **ॐ शक्तये नमः।** नाभौ **ॐ ईंकोलकाय नमः**

इति विन्यस्य मम सर्वाभीष्टसिद्धये विनियोगः इति कृताञ्जलिरुक्त्वा,

**ॐ ह्रीं हसां** हृदयाय **नमः।** **ॐ ह्रीं हसीं** शिरसे **स्वाहा।** **ॐ ह्रीं हसूं** शिखायै **वषट्।**
**ॐ ह्रीं हसैं** कवचाय **हुं।** **ॐ ह्रीं हसौं** नेत्रत्रयाय **वौषट्।** **ॐ ह्रीं हसः** अस्त्राय **फट्।**

इति करषडङ्गन्यासं विधाय,

**ॐ ह्रीं** भ्रूमध्ये **हं नमः।** **ॐ ह्रीं** कण्ठे **सं नमः।** **ॐ ह्रीं** हृदि **कं नमः।**
**ॐ ह्रीं** नाभौ **लं नमः।** **ॐ ह्रीं** गुह्ये **रं नमः।** **ॐ ह्रीं** मूलाधारे **डं नमः।**

समस्तविद्यया व्यापकं विधाय "उद्यद्भास्करबिम्बाभा"मित्यादि ध्यात्वा मानसपूजान्ते स्वर्णादिपट्टे कुंकुमादिना षट्कोणं विधाय, तन्मध्ये वृत्तं कृत्वा षट्कोणाद्बहिः षोडशदलयुतानि षट्त्रिंशत्पद्मानि, द्वात्रिंशद्द्वात्रिंशद्दलयुतानि अष्टादशपद्मानि वा तद्बहिर्विभागेन कृत्वा तद्बहिश्चतुरस्रद्वयं चतुर्द्वारोपेतं कुर्यादिति पूजामण्डलं निर्माय, प्राग्वत् पुरतः संस्थाप्याभ्यर्च्यार्घ्यादिस्थापनाद्यात्मपूजान्ते कुसुन्दरीपीठमभ्यर्च्य मूलेन मूर्तिं परिकल्प्यावाह्यासनादि। पपुष्पोपचारान्ते पीठमध्ये देवीपरितः प्राग्वत् षडङ्गानि सम्पूज्य, देव्याः पृष्ठभागे षट्कोणवृत्तयोरन्तराले प्राग्वदगुरुपंक्तित्रयमभ्यर्च्य,

निर्ऋतिकोणे **ॐ ह्रीं डाकिनी पादुकां पूजयामि नमः।** वायव्ये **ॐ ह्रीं राकिणी पादुकां पूजयामि नमः।** पूर्वकोणे **ॐ ह्रीं लाकिनी पादुकां पूजयामि नमः।** आग्नेये **ॐ ह्रीं काकिनी पादुकां पूजयामि नमः।** ईशाने **ॐ ह्रीं शाकिनी पादुकां पूजयामि नमः।** पश्चिमकोणे **ॐ ह्रीं हाकिनी पादुकां पूजयामि नमः।**

इति सम्पूज्य, बहिःषोडशदले देव्यग्रदलमारभ्य प्रादक्षिण्येन ॐ ह्रीं अशक्ति पादुकां पूजयामि नमः इत्यादि षोडशशक्तीः पूजयेत्। एवमन्येष्वपि पञ्च (षट्) त्रिंशद्वर्णशक्तीः प्रतिपद्मं षोडशशक्तीरिति प्रागुक्तपूर्णमण्डलवर्णशक्तीः पूजयेत्। अष्टादशपद्मपक्षे तु प्रतिपद्मं द्वात्रिंशत्संख्याकाः प्रोक्तशक्तयः पूज्याः। अथ षट्कोणाद्बहिरेकपञ्चाशद्दलमितं पद्मं विरच्य, तद्दलेषु देव्यग्रादिप्रादक्षिण्येनैकपञ्चाशद्वर्णशक्तीः पूजयेत्। यथा— षट्कोणाद्बहिः षोडशदलपद्मं तद्बहिर्द्वादशदलं तद्बहिर्दशदलं तद्बहिःषड्दलं तद्बहिश्चतुर्दलं तद्बहिर्द्विदलमिति पद्मषट्कं निर्माय, तेषु षोडशदलेषु स्वरशक्तीर्द्वादशदलेषु कादिठान्तवर्णशक्तीर्दशदलेषु डादिफान्तवर्णशक्तीः, षड्दलेषु वादिलान्तवर्णशक्तीः चतुर्दलेषु वादिसान्तवर्णशक्तीर्द्विदलयोर्हक्षवर्णशक्ती इति पञ्चाशच्छक्तीः पूजयेत्। एवमुत्तममध्यमकनिष्ठ-पक्षेष्वेकपक्षानुसारेण वर्णशक्तीः सम्पूज्य, पूर्वद्वारमारभ्य प्रतिद्वारं द्विद्विक्रमेण इन्द्रादीशानान्त-लोकपालशक्त्यष्टकं प्राग्वत् सम्पूज्य वायव्यादिनिर्ऋत्यन्तं कोणचतुष्टये

**ॐ ह्रीं अनन्तशक्ति पादुकां पूजयामि नमः। ॐ ह्रीं ब्रह्मशक्ति पादुकां पूजयामि नमः।**
**ॐ ह्रीं नियतिशक्ति पादुकां पूजयामि नमः। ॐ ह्रीं कालशक्ति पादुकां पूजयामि नमः।**

इति सम्पूज्य, षट्कोणान्तवृत्तयोरन्तराले द्वादश स्थानानि परिकल्प्य

**ॐ ह्रीं अभयशक्ति पादुकां पूजयामि नमः ॐ ह्रीं कपालशक्ति पादुकां पूजयामि नमः**
**ॐ ह्रीं खड्गशक्ति पादुकां पूजयामि नमः ॐ ह्रीं इषुशक्ति पादुकां पूजयामि नमः**
**ॐ ह्रीं पुस्तकशक्ति पादुकां पूजयामि नमः ॐ ह्रीं अंकुशशक्ति पादुकां पूजयामि नमः**
**ॐ ह्रीं पाशशक्ति पादुकां पूजयामि नमः ॐ ह्रीं अक्षगुणशक्ति पादुकां पूजयामि नमः**
**ॐ ह्रीं इक्षुचापशक्ति पादुकां पूजयामि नमः ॐ ह्रीं खेटकशक्ति पादुकां पूजयामि नमः**
**ॐ ह्रीं त्रिशूलशक्ति पादुकां पूजयामि नमः ॐ ह्रीं वरशक्ति पादुकां पूजयामि नमः**

इति सम्पूज्य, पुनर्मध्ये देवीं तद्विद्ययाभ्यर्च्य धूपादि सर्वं कृत्वा समापयेत्, इति नित्यानित्यायजनविधिः।।

## ३. मध्य त्रिकोणस्य उत्तर रेखायांईशानादि वारुण्यन्तं प्रतिष्टित तिथिनित्या खण्डः

## ११. श्री नीलपताका नित्या

ध्यानम्।

**इन्द्रनीलनिभां भास्वन्मणिमौलिविराजिताम्। पञ्चवक्त्रां त्रिनयनामरुणांशुकधारिणीम् ।।१।।**

**दशहस्तां लसन्मुक्ताप्रायाभरणमण्डिताम्। रत्नस्तबकसम्भिन्नदेहां चारुस्मिताननाम्।।२।।**

**पाशं पताकां चर्माणि शार्ङ्गचापं वरं करैः। दधानां वामपार्श्वस्थैः सर्वाभरणभूषितैः।।३।।**

**अङ्कुशं च ततः शक्तिं खड्गं वाणं तथाभयम्। दधानां दक्षिणैर्हस्तैरासीनां पद्मविष्टरे ।।४।।**

**स्वाकारवर्णवेषास्यपाण्यायुधबिभूषणैः । शक्तिवृन्दैर्वृतां ध्यायेद्देवीं नित्यार्चनक्रमे ।।५।।**

**1. Dhyana Sloka—** "She is sapphire-blue in colour with five faces and three eyes in each, and ten hands. Her face is sweet and smiling. She is clad in red raiment and Her hand is adorned with lustrous gems. She is decked mostly with pearls. Clusters of gems are on various parts of Her body. In her left hands She carries a noose, banner, shield, a bow made of horn and makes the gesture of granting gifts. In Her right hands She carries the goad, the Shakti weapon, sword, arrows, and makes the gesture of dispelling fear. She is seated on a lotus and surrounded by a number of Shaktis resembling Herself."

**Efficacy:—** To get sucess in examination interviews and also in court cases

**तारोमायाफान्तरेफौ झिण्टीशशशिसंयुतौ। हंसोग्न्यर्घीश बिन्दवाढ्योहल्लेखाङ्कुशनित्यम् ।।२६।।**

**दद्रवेवर्म सृण्यन्ता प्रोक्ता नीलपताकिनी। चतुर्दशाक्षरा सर्वत्रैलोक्याकर्षणक्षमा ।।२७।।**

**२. नीलपताकिनी के मन्त्र का उद्धार—** तार (ॐ) माया (ह्रीं) झिंटीश एवं शशि सहित फ एवं रेफ (फ्रें), अग्नि, अर्धीश एवं बिन्दु सहित हंस (स्त्रं) फिर हल्लेखा (ह्रीं) अंकुश (क्रों) तथा 'नित्यमदद्रवे' फिर वर्म (हुं) तथा अन्त में असृणि (क्रों) लगाने से समस्त त्रिलोकी को आकर्षित करने योग्य नीलपताकिनी का १४ अक्षर का मन्त्र कहा गया है।

३. नीलपताकिनी का मन्त्र— **ॐ ह्रीं फ्रें स्त्रं ह्रीं क्रों नित्यमदद्रवे हुं क्रों। (मंत्र भेदा)**

४. पूजन मन्त्र— **ऐं 'ॐ ह्रीं फ्रें...०' नीलपताकिनी नित्या श्रीपादुकां पूजयामि तर्पयामि नमः।**

५. नीलपताका का गायत्री:— **नीलपताकायै विद्महे महानित्यायै धीमहि तन्नो नित्या प्रचोदयात्।**

## श्रीनीलपताका नित्या मातृकान्यासः

अस्य श्री नीलपताका नित्या महामन्त्रस्य। परमशिवऋषिः जगती छन्दः। श्रीनीलपताका नित्या देवता।

ह्रीं बीजं। फ्रें शक्तिः। स्त्रूं कीलकम्।

**ॐ ॐ ह्रीं** अङ्गुष्ठाभ्यां नमः
**ॐ फ्रें स्त्रूं** तर्जनीभ्यां नमः
**ॐ आं ह्रीं क्रों** मध्यमाभ्यां नमः
**ॐ नित्यमदद्रवे** अनामिकाभ्यां नमः
**ॐ हुं** कनिष्ठिकाभ्यां नमः
**ॐ क्रों** करतलपृष्ठाभ्यां नमः
**ॐ** ह्रीं हृदयाय नमः
**ॐ फ्रें** सूं शिरसे **स्वाहा**
**ॐ आं ह्रीं क्रों** शिखायै **वषट्**
**ॐ नित्यमदद्रवे** कवचाय **हुम्**
**ॐ हुं** नेत्रत्रयाय **वौषट्**
**ॐ क्रों** अस्त्राय **फट्**
**ॐ भूर्भुवस्वरोमिति** दिग्बन्धः

ध्यानम् :—

**पञ्चवक्त्राम् त्रिनयनामरुणांशुकधारिणीं । दशहस्तां लसन्मुक्ता प्रायाभरणमण्डिताम् ।।**
**नीलमेघसमप्रख्यां धूम्रार्चिसदृशप्रभां । नीलपुष्पस्त्रजोपेतां ध्यायेद्नीलपताकिनीम् ।।**

पञ्चपूजा—

लमिति पंचपूजा

| | | |
|---|---|---|
| **ॐ ऐं ह्रीं श्रीं अं नीलपताकायै** | **नमः हंसः** | शिरसि |
| **ॐ ऐं ह्रीं श्रीं आं नीलायै** | **नमः हंसः** | मुखावृत्ते |
| **ॐ ऐं ह्रीं श्रीं इं मायायै** | **नमः हंसः** | दक्षनेत्रे |
| **ॐ ऐं ह्रीं श्रीं ईं जगत्प्रियायै** | **नमः हसः** | वामनेत्रे |
| **ॐ ऐं ह्रीं श्रीं उँ सहस्त्रवज्रायै** | **नमः हंसः** | दक्षकर्णे |
| **ॐ ऐं ह्रीं श्रीं ऊं पद्माक्ष्यै** | **नमः हंसः** | वामकर्णे |
| **ॐ ऐं ह्रीं श्रीं ऋं पद्मिन्यै** | **नमः हंसः** | दक्षनासापुटे |
| **ॐ ऐं ह्रीं श्रीं ॠं श्रीरनुत्तमायै** | **नमः हंसः** | वामनासापुटे |
| **ॐ ऐं ह्रीं श्रीं लृं दिव्यक्रमायै** | **नमः हंसः** | दक्षकपोले |
| **ॐ ऐं ह्रीं श्रीं लॄं दिव्यभोगायै** | **नमः हंसः** | वामकपोले |
| **ॐ ऐं ह्रीं श्रीं एं दिव्यमाल्यानुलेपिन्यै** | **नमः हंसः** | ऊर्ध्वोष्ठे |

ॐ ऐं ह्रीं श्रीं ऐं शुक्लाच्छवसनायै नमः हंसः अधरोष्ठे
ॐ ऐं ह्रीं श्रीं ओं सौम्यायै नमः हंसः ऊर्ध्वदन्तपङ्क्तौ
ॐ ऐं ह्रीं श्रीं औं सर्वर्तुकुसुमोचितायै नमः हंसः अधोदन्तपङ्क्तौ
ओं ऐं ह्रीं श्रीं अं स्वराणां शक्रयस्त्वेतायै नमः हंसः जिह्वाग्रे
ॐ ऐं ह्रीं श्रीं अः साधकाभीष्टदायिकायै नमः हंसः कण्ठे
ॐ ऐं ह्रीं श्रीं कं सर्वैश्वर्यगुणोपेतायै नमः हंसः दक्षबाहुमूले
ॐ ऐं ह्रीं श्रीं खं प्रणवाग्रायै नमः हंसः दक्षकूर्परे
ॐ ऐं ह्रीं श्रीं गं सम्भवायै नमः हंसः दक्षमणिबन्धे
ॐ ऐं ह्रीं श्रीं घं व्यञ्जनायै नमः हंसः दक्षकराङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं ङ व्यञ्जकायै नमः हंसः दक्षकराङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं चं व्यक्तायै नमः हंसः वामबाहुमूले
ॐ ऐं ह्रीं श्रीं छं सर्वावर्णानुवर्तिन्यै नमः हंसः वामकूर्परे
ॐ ऐं ह्रीं श्रीं जं जगन्मात्रे नमः हंसः वाममणिबन्धे
ॐ ऐं ह्रीं श्रीं झं भयङ्कर्यै नमः हंसः वामकराङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं ञं भूतधात्र्यै नमः हंसः वामकराङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं टं सुदुर्लभायै नमः हंसः दक्षोरूमूले
ॐ ऐं ह्रीं श्रीं ठं कामिन्यै नमः हंसः दक्षजानुनि
ॐ ऐं ह्रीं श्रीं डं दण्डिन्यै नमः हंसः दक्षगुल्फे
ॐ ऐं ह्रीं श्रीं ढं दण्डधायै नमः हंसः दक्षपादाङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं णं खड्गमुद्गरपाण्यै नमः हंसः दक्षपादाङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं तं शस्त्रास्त्रदर्शिण्यै नमः हंसः वामोरूमूले
ॐ ऐं ह्रीं श्रीं थं बीजायै नमः हंसः वामजानुनि
ॐ ऐं ह्रीं श्रीं दं विबीजायै नमः हंसः वामगुल्फे
ॐ ऐं ह्रीं श्रीं धं बिजिनी परायै नमः हंसः वामपादाङ्गुलिमूले
ॐ ऐं ह्रीं श्रीं नं वाचस्पतिप्रियायै नमः हंसः वामपादाङ्गुल्यग्रे
ॐ ऐं ह्रीं श्रीं पं दीक्षायै नमः हंसः दक्षपार्श्वे
ॐ ऐं ह्रीं श्रीं फं परीक्षायै नमः हंसः वामपार्श्वे
ॐ ऐं ह्रीं श्रीं बं विश्वसम्भवायै नमः हंसः पृष्ठे
ॐ ऐं ह्रीं श्रीं भं राजस्यै नमः हंसः नाभौ

| | | |
|---|---|---|
| **ॐ ऐं ह्लीं श्रीं मं तामस्यै** | **नमः हंसः** | जठरे |
| **ॐ ऐं ह्लीं श्रीं यं सत्वायै** | **नमः हंसः** | हृदये |
| **ॐ ऐं ह्लीं श्रीं रं सत्वोद्रिक्तायै** | **नमः हंसः** | दक्षकक्षे |
| **ॐ ऐं ह्लीं श्रीं लं विमोहिन्यै** | **नमः हंसः** | गलपृष्ठे |
| **ॐ ऐं ह्लीं श्रीं वं अतीतायै** | **नमः हंसः** | वामकक्षे |
| **ॐ ऐं ह्लीं श्रीं शं नागतज्ञानायै** | **नमः हंसः** | हृदयादि दक्षकराङ्गुल्यन्तम् |
| **ॐ ऐं ह्लीं श्रीं षं वर्तमानोपदेशिन्यै** | **नमः हंसः** | हृदयादि वामकराङ्गुल्यन्तम् |
| **ॐ ऐं ह्लीं श्रीं सं आप्तोपदेशिन्यै** | **नमः हंसः** | हृदयादि दक्षपादाङ्गुल्यन्तम् |
| **ॐ ऐं ह्लीं श्रीं हं संवित्सत्वबोधायै** | **नमः हंसः** | हृदयादि वामपादाङ्गुल्यन्तम् |
| **ॐ ऐं ह्लीं श्रीं ळं धराधरायै** | **नमः हंसः** | कट्यादि पादाङ्गुल्यन्तं |
| **ॐ ऐं ह्लीं श्रीं क्षं प्रकृतिविकृत्यै** | **नमः हंसः** | कट्यादि ब्रह्मरन्ध्रान्तम् |

मूर्ध्नि—

**ॐ गङ्गायै नमः।** **ॐ धूर्जट्यै नमः।।**
**ॐ विकृताननायै नमः।** **ॐ योगप्रियायै नमः।।**
**ॐ योगगम्यायै नमः।** **ॐ योगिध्येयायै नमः।।**
**ॐ परापरायै नमः।** **ॐ वैष्णव्यै नमः।।**
**ॐ त्रिपदीयै नमः।** **ॐ इष्टरक्षायै नमः।।**
**ॐ कादिशक्त्यै नमः।।**

## *नीलपताकार्चाविधिः*

श्रीतन्त्रराजे—(१७प०)

**अथ षोडशनित्यासु द्वादशी या समीरिता। तस्या नीलपताकाया विधानं सर्वसिद्धिदम् ।।१।।**

न्यासक्रमविधानं च ध्यानं शक्तीः प्रपूजनम् ।

इति। तत्रैव— (३/५६)

**त्वरितोपान्त्यमाद्यं स्याद् द्युतिर्दाहचरस्वयुक् । हृच्च दाहक्ष्मास्वयुतं (वज्रेशीपञ्चमं ततः ।।१।।**
**मरुत् स्वयुक्तो मध्याद्ये दशम्याः क्रमशः स्मृते। भूमी रसाक्ष्मास्वयुता) वज्रेशी षष्ठतः क्रमात्।।२।।**
**षडक्षराणि त्वरितातृतीयं तदनन्तरम् । द्युतिर्दाहचरस्वेन अस्या आद्यमनन्तरम् ।।३।।**
**उक्ता नीलपताकाख्या नित्या सप्तदशाक्षरी ।**

**''ह्लीं फ्रें स्रूं ओं आं क्लीं ऐं ब्लूं नित्यमदद्रवेहुं फ्रें ह्लीं''** इति। त्रिपुरार्णवे—

**''ऋषिः सम्मोहनश्छन्दो गायत्रं देवता मनोः ।**
**नित्या नीलपताकाख्या ह्रीं बीजं ह्रीं च शक्तिकम् ।।१।।**
**कामबीजं कीलकं स्या''दिति।।** श्रीतन्त्रराजे—(१७।५)

**मूलविद्याक्षरैरङ्गान्याचरेत् षडिति क्रमात् । द्विचतुष्टयषट्त्र्यर्णैः क्रमेण षडितीरितैः ।।१।।**
**श्री त्राक्षिनासायुगले वाचि कण्ठे हृदि क्रमात् । नाभावाधारके पादसन्धिषु त्रिषु च क्रमात् ।।२।।**
**मन्त्राक्षराणि क्रमशो न्यसेत् सप्तदशापि च । व्यापकं समस्तेन विदध्याच्च यथाविधि ।।३।।**
**इन्द्रनीलनिभां भास्वन्मणिमौलिविराजिताम् । पञ्चवक्त्रां त्रिनयनामरुणांशुकधारिणीम् ।।४।।**
**दशहस्तां लसन्मुक्ताप्रायाभरणभूषिताम्। रत्नस्तवकसम्भिन्नदेहां चारुस्मिताननाम् ।।५।।**
**पाशं पताकां चर्मापि शार्ङ्गचापं वरं करैः। दधानां वामपार्श्वस्थैः सर्वाभरणभूषितैः ।।६।।**
**अङ्कुशं च ततः शक्तिं खड्गं बाणं तथाभयम् । दधानां दक्षिणैर्हस्तैरासीनां पद्मविष्टरे ।।७।।**
**स्वाकारवर्णवेषास्यपाण्यायुधविभूषणैः । शक्तिवृन्दैर्वृतां ध्यायेद्देवीं नित्यार्चनक्रमे ।।८।।**
**त्रिषट्कोणयुतं पद्ममष्टपत्रं ततो बहिः । द्व्य(अ)ष्टारं भूपुरद्वन्द्वाद् वृत्ते तत्पुरयुग्मकम् ।।९।।**
**चतुर्द्वारयुतं दिक्षु शाखाभिश्च समन्वितम्। कृत्वा तामावृतां शक्तिगणैस्तत्रार्चयेच्छिवाम् ।।१०।।**
**(इच्छाज्ञानक्रियाशक्तीस्त्रिषु कोणेषु पूजयेत् । अग्रात् प्रदक्षिणेनैव यजेदावृत्तिपञ्चकम्) ।।११।।**
**डाकिन्याद्या यजेत् षट्सु कोणेषु परितः क्रमात्। ब्राह्म्यादीरष्टपत्रेषु तत्कोणेषु बहिस्तथा ।।१२।।**
**प्रागुक्तास्ता यजेच्छक्तीर्नित्यानित्यादिषूदिताः । बलिद्वयं च कुर्वीत पूजां प्राग्वत् समापयेत्।।१३।।**
**सर्वत्र नित्यहोमं तु कुर्यादन्नाज्यतोऽपि वा। तिलतण्डुलकैर्वापि प्रोक्तं द्रव्यानुदीरिते ।।१४।।**

इति ।। अथ प्रयोगः— तत्र प्राग्वद्योगपीठन्यासान्ते नीलपताकाविध्यया प्राणायामत्रयं कृत्वा,

शिरसि **ॐ सम्मोहनाय ऋषये नमः।** मुखे **ॐ गायत्रीच्छन्दसे नमः।** हृदये **ॐ नीलपताकानित्यादेवतायै नमः।**
गुह्ये **ॐ ह्रीं बीजाय नमः।** पादयोः **ॐ ह्रीं शक्तये नमः।** नाभौ **ॐ क्लीं कीलकाय नमः।**

इति विन्यस्य ममाभीष्टसिद्धये विनियोगः, इति कृताञ्जलिरुक्त्वा

**ॐ ह्रीं फ्रें** हृदयाय **नमः।** **ॐ स्रूं ॐआं क्लीं** शिरसे **स्वाहा।** **ऐं ब्लूं नित्यमद** शिखायै **वषट्।**
**ॐ द्र** कवचाय **हुम्।** **ॐ वे** नेत्रत्रयाय **वौषट्।** **हुं** अस्त्राय फट्,

इति करषडङ्गन्यासं विधाय,

| | | |
|---|---|---|
| दक्षकर्णे **ॐ ह्रीं नमः।** | वामे **ॐ फ्रें नमः।** | दक्षनेत्रे **ॐ स्रूं नमः।** |
| वामे **ॐ नमः।** | दक्षनसि **ॐ आं नमः।** | वामे **ॐ क्लीं नमः।** |
| मुखे **ॐ ऐं नमः।** | कण्ठे **ॐ ब्लूं नमः।** | हृदि **ॐ निं नमः।** |

नाभौ **ॐ त्यं नमः।** मूलाधारे **ॐ मं नमः।** दक्षोरुमूले **ॐ दं नमः।**
जानुनि **ॐ द्रं नमः।** गुल्फसन्धौ **ॐ वें नमः।** वामोरुमूले **ॐ हुं नमः।**
जानुनि **ॐ फ्रें नमः।** गुल्फसन्धौ **ॐ ह्रीं नमः,**

इति विन्यस्य मूलेन व्यापकं कृत्वा ध्यानादिमानसपूजान्ते प्राग्वत् स्वर्णादिपट्टे कुङ्कुमादिना चतुर्द्वारोपेतं चतुरस्रद्वयं कृत्वा तदन्तर्वृत्तद्वयं तदन्तरष्टदलकमलं तदन्तः षट्कोणे तदन्तस्त्रिकोणमिति पूजाचक्रं निर्माय, पुरतः संस्थाप्याभ्यर्च्यार्घ्यादिस्थापनाद्यात्मपूजान्ते भुवनेश्वरीपीठमभ्यर्च्य, तत्र नीलपताकाविद्यया मूर्तिं परिकल्प्यावाहनादिपुष्पोपचारान्ते त्रिकोणाभ्यन्तरे प्राग्वत्षडङ्गानि सम्पूज्य, त्रिकोणषट्कोणयोरन्तराले प्राग्वद्गुरुपङ्क्तित्रयमभ्यर्च्य, त्रिकोणषट्कोणयोरन्तराले

**ॐ ह्रीं अभयाय नमः।** **ॐ ह्रीं बाणाय नमः।** **ॐ ह्रीं खड्गाय नमः।**
**ॐ ह्रीं शक्तये नमः।** **ॐ ह्रीं अङ्कुशाय नमः।** **ॐ ह्रीं पाशाय नमः।**
**ॐ ह्रीं पताकायै नमः।** **ॐ ह्रीं चर्मणे नमः।** **ॐ ह्रीं शार्ङ्गचापाय नमः।**
**ॐ ह्रीं वराय नमः,**

इति सम्पूज्य, त्रिकोणस्याग्रकोणादिप्रादक्षिण्येन

**ॐ ह्रीं इच्छाशक्ति पादुकां पूजयामि नमः।** **ॐ ह्रीं ज्ञानशक्ति पादुकां पूजयामि नमः।**
**ॐ ह्रीं क्रियाशक्ति पादुकां पूजयामि नमः।**

इति सम्पूज्य षट्कोणेषु देव्यग्रादिप्रादक्षिण्येन

**ॐ ह्रीं हाकिनी पादुकां पूजयामि नमः, एवं** **ॐ ह्रीं शाकिनी पादुकां पूजयामि नमः**
**ॐ ह्रीं काकिनी पादुकां पूजयामि नमः** **ॐ ह्रीं लाकिनी पादुकां पूजयामि नमः**
**ॐ ह्रीं राकिणी पादुकां पूजयामि नमः** **ॐ ह्रीं डाकिनी पादुकां पूजयामि नमः**

इत्यादि सम्पूज्याष्टदलेषु देव्यग्रादिप्रादक्षिण्येन ब्राह्मीपादुकां पूजयामि नमः, एवमष्टमातृकाः सम्पूज्याष्टकोणेषु देव्यग्रमारभ्य प्रादक्षिण्येन

**ॐ ह्रीं सुमुखी पादुकां पूजयामि नमः** **ॐ ह्रीं सुन्दरी पादुकां पूजयामि नमः,**
**ॐ ह्रीं सारा पादुकां पूजयामि नमः,** **ॐ ह्रीं सुमना पादुकां पूजयामि नमः,**
**ॐ ह्रीं सरस्वती पादुकां पूजयामि नमः,** **ॐ ह्रीं समया पादुकां पूजयामि नमः,**
**ॐ ह्रीं सर्वगा पादुकां पूजयामि नमः,** **ॐ ह्रीं सिद्धा पादुकां पूजयामि नमः।**

इति सम्पूज्य, बहिश्चतुरस्रे देव्यग्रद्वारस्य दक्षिणभागमारभ्य प्रादक्षिण्येन

ॐ ह्रीं विह्वला पादुकां पूजयामि नमः, ॐ ह्रीं आकर्षिणी पादुकां पूजयामि नमः।
ॐ ह्रीं लोला पादुकां पूजयामि नमः। ॐ ह्रीं नित्या पादुकां पूजयामि नमः।
ॐ ह्रीं मदना पादुकां पूजयामि नमः। ॐ ह्रीं मालिनी पादुकां पूजयामि नमः।
ॐ ह्रीं विनोदा पादुकां पूजयामि नमः। ॐ ह्रीं कौतुका पादुकां पूजयामि नमः।
ॐ ह्रीं पुण्या पादुकां पूजयामि नमः। ॐ ह्रीं पुराणा पादुकां पूजयामि नमः।

इति सम्पूज्य, वह्निश्चतुरस्रस्य चतुर्द्वारपार्श्वेषु देव्यग्रद्वारस्य दक्षिणपार्श्वमारभ्य प्रतिद्वारं द्विद्विक्रमेणेन्द्रादीशानपर्यन्तं लोकपालशक्त्यष्टकं प्राग्वत् सम्पूज्याग्नेयादिकोणचतुष्टये अनन्तब्रह्मनियतिकालशक्ती: सम्पूज्य, वज्रादीन्यायुधानि प्राग्वच्छक्तिरूपाणि सम्पूज्य पुनर्मध्ये नीलपताकानित्यां तद्विद्ययाभ्यर्च्य धूपादि सर्वं प्राग्वत् कल्पयेत्, इति नीलपाताकानित्यापूजाविधि:।।

## १२. श्री विजया नित्या

ध्यानम्।

पञ्चवक्त्रां दशभुजां प्रतिवक्त्रं त्रिलोचनाम् । भास्वन्मुकुटविन्यस्त चन्द्ररेखाविराजिताम् ।।१।।
सर्वाभरणासंयुक्तां पीताम्बर समुज्ज्वलाम् । उद्यद्भास्वद्बिम्ब तुल्यदेहकान्तिं शुचिस्मिताम् ।।२।।
शङ्खं पाशं खेटचापौ कल्हारं वामबाहुभिः । चक्रं तथाङ्कुशं खड्गं सायकं मातुलङ्गकम् ।।३।।
दधानां दक्षिणैर्हस्तैः प्रयोगे भीमदर्शनाम् । उपासनेऽतिसौम्यां च सिंहोपरि कृतासनाम् ।।४।।
व्याघ्रारूढाभिरभितः शक्तिभिः परिवारिताम् । समरे पूजनेऽन्येषु प्रयोगेषु सुखासनाम् ।।५।।
शक्तयश्चापि पूजायां सुखासनसमन्विताः । सर्वा देव्या समाकार मुखपाण्यायुधान्य (अ?) पि।।६।।

**1. Dhyana Sloka:—** "He body is lustrous red like the rising sun. She has five smiling faces in each of which are three eyes and she has ten hands. Her raiment is yellow. She bears a brilliant crown and on Her forehead a crescent moon. She is decked with all kinds of ornaments. In Her left hands She carries conch, noose, shield. bow, and white lily (*Kahlara*) and in Her right hands discus (*Chakra*), goad (*Anghusha*), arrows (*Sayaka*), and a citron (*Matulunga*) fruit. According to the *prayoga* when She is invoked for the purpose of victory in war and the like she is of terrific aspect but in daily worship Her aspect is benignant In Samaraprayoga She is meditated upon as seated on a lion and surrounded by Shaktis who are mounted on Tigers. In other kinds of *prayoga* She is to be meditated upon as seated at Her ease (*Sukhasana*) surrounded by Shaktis similarly seated. Her Shaktis all resemble this Nitya and carry the same weapons."

**Efficacy:—** This Nitya Devi gives the worshipper success in all endeavours whether it is in war or in a debate or in a court case. The devotee is advised to perform pooja in the Soumya for ordinary worship, for the specific purpose *Fal pooja* in *Rudra Roops* She should worshipped seated on the lion and her lieutenants seated on tiger to attain the desired results.

**वराहहंसचण्डीशजनार्दनकृशानवः ।**
**पद्मनाभेन्दुसंयुक्ताविजयायै नमोन्तिकः ।।२८।।**
**विजयायामनुः प्रोक्तः सप्तवर्णोखिलार्थदः।**

**२. विजया के मन्त्र का उद्धार**—पद्मनाभ एवं इन्दु सहित वराह, हंस, चण्डीश, जनार्दन एवं कृशानु (हस्ख्फ्रें) और फिर 'विजयायै नमः' लगाने से सर्वार्थदायक विजया का ७ अक्षर वाला मन्त्र है।

३. विजया का मन्त्र—**हस्ख्फ्रें विजयायै नमः।**

४. विजया पूजन मन्त्र— **ऐं 'हस्ख्फ्रें विजयायै नमः' विजयानित्या श्रीपादुकां पूजयामि तर्पयामि नमः।।**

५. विजयानित्या गायत्रीमन्त्र— **ॐ विजया देव्यै विद्महे महानित्यायै धीमहि तन्नो नित्या प्रयोदयात्।**

## *श्रीविजयानित्या मातृकान्यासः*

अस्य श्री विजया नित्या महामन्त्रस्य। दक्षिणामूर्ति ऋषिः। पंक्तिः छन्दः। श्री विजया नित्या देवता। ह्रां बीजं। ह्रीं शक्तिः। ह्रूँ कीलकम्

**ॐ ह्रां** अंगुष्ठाभ्यां **नमः** **ॐ ह्रां** हृदयाय **नमः**
**ॐ ह्रीं** तर्जनीभ्यां **नमः** **ॐ ह्रीं** शिरसे **स्वाहा**
**ॐ ह्रूँ** मध्यमाभ्यां **नमः** **ॐ ह्रूँ** शिखायै **वषट्**
**ॐ ह्रैं** अनाभिकाभ्यां **नमः** **ॐ है** कवचाय **हुँ**
**ह्रौं** कनिष्ठिकाभ्यां **नमः** **ॐ ह्रौं** नेत्रत्रयाय **वौषट्**
**ॐ ह्रः** करतलपृष्ठाभ्यां **नमः** **ॐ ह्रः** अस्त्राय **फट्**

**ॐ भूर्भुवस्वरोमिति** इति दिग्बन्धः

ध्यानम् :—

**उद्यदर्कसमप्राभां दाडिमीपुष्पसन्निभाम्। रक्तकङ्कणकेयूरकिरीटाङ्गदसंयुताम् ।।**
**देवगन्धर्वयोगीशमुनिसिद्धनिषेविताम् । नमामि विजयां नित्यां सिंहोपरि कृतासनाम् ।।**

हृल्लेखया स्थापनादीनुपचारान् समाचरेत्। ततस्तदाज्ञयारोहेद् भ्रामिणीं द्राविणीं यजेत्।।९।।
पश्चिमद्वारमारभ्य दक्षशाकादि पूजयेत्। सूर्यं सोमं तिथिं वारं योगर्क्षकरणान्यपि।।१०।।
(य?प) क्षिणाश्च तथा (तारां?मासं) पूर्वद्वारस्य शाखयोः। व्योमवायव्यम्नितोयक्ष्मारूपिणीशक्तिसंयुतम्
शब्दं स्पर्शं च रूपं च रसं गन्धं च पूर्ववत्। प्राणं बुद्धिं तथा शक्तिमष्टपत्रेषु पूजयेत्।।१२।।
बाह्यान्तरस्थकोणेषु वाग्देव्यष्टकमर्चयेत्। ततो बाणान् धनुः पाशमंकुशं चाभितो यजेत्।।१३।।
मध्ये त्रिकोणकोणषु सेच्छाज्ञानक्रियात्मिकाः। शक्तीर्यष्ट्वाथ तन्मध्ये संविदासनमर्चयेत्।।१४।।
ततस्तां पञ्चविंशार्णमूलमन्त्रैण पूजयेत्। ततस्तदाज्ञया पोतपरीतं द्वीपमागतः।।१५।।
पश्चिमं पुष्परागं च सम्प्राप्यावतरेत् क्रमात्। परीयमाणे दिक्ष्वेतानर्चयेत् तत्र तत्र वै।।१६।।
इक्ष्विराघृतदुग्धाब्धीन् पश्चिमादिविलोमतः। नमोन्तैर्नामभिः पूर्वमर्चयेद्गन्धपुष्पकैः।।१७।।
नवरत्नमयं द्वीपमित्यादि प्रागुदीरितम्। एवं समर्चितं देव्या ललितायाः पियङ्करम्।।१८।।
एवं देवी पूजयितुः शीघ्रं बहु मनीषितम्। प्रसीदति यतस्तस्मात् पूजयेदेवमीश्वरि।।१९।।
देवीनां कुरुकुल्लां तु पोतादुपरि पूजयेत्। पञ्चविंशार्णमूलेन पूजान्ते परमेश्वरि।।२०।।
देव्या बलिः समाख्यातस्ताराशक्तेस्तु विद्यया। तां शृणु त्वं प्रिये! वच्मि ताराविद्यां दशाक्षरीम्।।२१।।
भूःस्वेन मरुता युक्तो रयो दाहश्चरान्वितः। रयो धरान्वितः पश्चाद्रययुग्मं मरुद्युतम्।।२२।।
एतत् तृतीयं षष्ठं स्याच्चतुर्थं सप्तमं प्रिये। षष्ठं तदष्टमं विद्याद् हृदम्बुमरुदन्वितम्।।२३।।
हंसश्च मरुता युक्तः प्रोक्ता विद्या दशाक्षरी।
''ॐतारेतुतारेतुरे स्वाहा''। इति।
अनयास्या बलिं दद्याद् विद्यया परमेश्वरि। ध्यानं देव्याः शृणु प्राज्ञे समस्तापत्रिकृन्तनम्।।१।।
अस्यास्तोयेषु सर्वत्र वाधो न भवति स्मृतेः। श्यामवर्णां त्रिनयनां द्विभुजां वपङ्कजे।।२।।
दधानां बहुवर्णाभिर्बहुरूपाभिरावताम्। शक्तिभिः स्मेरवदनां रक्तमौक्तिकभूषणाम्।।३।।
रत्नपादुकयान्यस्तपादाम्बुजयुगां स्मरेत्।

इति।। अथ प्रयोगः : तत्र वेदिकोपरि भूमौ चन्दनादि सिन्दूरेण रा सनवयोनिकर्णिकमष्टदलकमलं कृत्वा तद्बहिः प्राक्पश्चिमद्वारद्वययुक्तं चतुरस्त्रद्वयमिति पूजाचक्रं निर्माय कुरुकुल्लाविद्यया प्राणायामत्रयं कृत्वा, **शिरसि दक्षिणामूर्तिऋषये नमः। मुखे पंक्तिच्छन्दसे नमः। हृदये श्रीकुरुकुल्लादेवतायै नमः,** इति विन्यस्य करिष्यमाणबलिदाने विनियोगः। इति कृताञ्जलिरुक्त्वा बालाबीजत्रयेण मूलविद्यावत् करषडङ्गन्यासं कृत्वा कुरुकुल्लाविद्यया व्यापकं विन्यस्य ''विकीर्णकुन्तला'' मिति ध्यात्वा, मानसपूजान्ते प्रोक्षणीपात्रस्तापनाद्यात्मपूजान्ते मण्डूकादिपृथिव्यन्तं श्रीचक्रपूजावदभ्यर्च्य, तथैर पश्चिमादिविलोमेनेक्षु— इराघृतदुग्धान् सम्पूज्य इक्षुसागरतीरे द्वीपस्य नैर्ऋतकोणे

**ॐ ऐं वाराहीविद्यामुच्चार्य वाराहीदेवी पादुकां पूजयामि नमः** इति मूलदेव्यभिमुखोपविष्टां वाराहीं सम्पूज्य, **तदनुज्ञया ॐ ऐं ह्रींरत्नपोताय नमः**, इति रत्नपीतं सम्पूज्य, तदुपरि रत्नसिंहासनादिमनोन्मनीशक्त्यन्तं श्रीचक्रपूजाक्रमेण सम्पूज्य, ततस्तन्मध्यै **संविदासनाय नमः, इति देव्या भर्तृभूतं पूरुषं सम्पूज्य, तत्र पञ्चविंशाक्षर्या कुरुकुल्लाविद्यता त्रिखण्डामुद्रया च तां समावाह्य, ह्रीः** इति स्थापनादिपरमीकरणान्तमुद्राः प्रदर्श्य तस्याः प्राणप्रतिष्ठां विधाय, **पाशादिचतुर्मुद्राः प्रदर्श्यासनादिपुष्पोपचारान्ते "श्रीकुरुकुल्ले परिवारपूजार्थमनुज्ञां देहि"** इति प्रार्थ्य, तदनुज्ञया साधकः स्वयं रत्नपोतमारुह्य रत्नपोतस्य पूर्वपश्चिमकोट्योः **ह्रींभ्रामिईश्री पादुकां पूजयामि नमः, ह्रींद्राविणी पादुकां पूजयामि नमः**, इति सम्पूज्य पश्चिमद्वारस्य दक्षिणसाखामारभ्य नवशक्तीः प्रादक्षिण्येन पूजयेत्।

**तद्यथा—पश्चिमद्वारदकषिणशाखायां ॐ ऐं ह्रीं: सूर्यरूपिणीशक्तिपादुकां पूजयामि नमः। वायव्यकोणे ॐ ऐं ह्रीं: सोमरूपिणी पादुकां पूजयामि नमः। उत्तरे ॐ ऐं ह्रीं: तिथिरूपिणी पादुकां पूजयामि नमः। ईशाने ॐ ऐं ह्रीः वाररूपिणी पादुकां पूजयामि नमः। पूर्वद्वारस्योत्तरतः शाखायां ॐ ऐं ह्रीः योगरूपिणी पादुकां पूजयामि नमः।** दक्षशाखायां **ॐ ऐं ह्रीं: ऋक्षरूपिणी पादुकां पूजयामि नमः। आग्नेये ॐ ऐं ह्रीं: करणरूपिणी पादुकां पूजयामि नमः। दक्षिणे ॐ ऐं ह्रीः पक्षरूपिणी पादुकां पूजयामि नमः।** नैर्ऋते **ॐ ऐं ह्रीः मासरूपिणी पादुकां पूजयामि नमः**, इति सम्पूज्य, ततोऽष्टदलेषु देव्यग्रादि प्रादक्षिण्येन व्योमरूपिणी पादुकां पूजयामि नमः। शब्दरूपिणी पादुकां **पूजयामि नमः। वायुरूपिणी पादुकां पूजयामि नमः। स्पर्शरूपिणी पादुकां पूजयामि नमः। अग्निरूपिणी पादुकां पूजयामि नमः। रूपिणीपरूपिणी पादुकां पूजयामि नमः।** तोयरूपिणी **पादुकां पूजयामि नमः। रसरूपिणी पादुकां पूजयामि नमः। क्ष्मारूपिणी पादुकां पूजयामि नमः। गन्धरूपिणी पादुकां पूजयामि नमः। प्राणरूपिणी पादुकां पूजयामि नमः। बुद्धिरूपिणी पादुकां पूजयामि नमः। शक्तिरूपिणी पादुकां पूजयामि नमः।**

इति सम्पूज्य, अन्तरष्टयोनिषु देव्यग्रादिप्रादक्षिण्येन वशिन्यादिवाग्देवताष्टकं सम्पूज्य, तदन्तर्योनेर्बहिः बाणरूपिणी **पादुकां पूजयामि नमः, चापरूपिणी पादुकां पूजयामि नमः, पाशरूपिणी पादुकां पूजयामि नमः, अंकुशारूपिणी पादुकां पूजयामि नमः**, इति सम्पूज्य, तलो मध्ययोन्यां देव्यग्रादिप्रादक्षिण्येन **इच्छारूपिणी पादुकां पूजयामि नमः, ज्ञानरूपिणी पादुकां पूजयामि नमः, क्रियारूपिणी पादुकां पूजयामि नमः**, इति सम्पूज्य, ततो मध्ये प्राग्वत् संविदासनमभ्यर्च्य तस्मिन् पञ्चविंशाक्षर्या कुरुकुल्लां गन्धादिभिः सम्पूज्य धूपदीपा दत्त्वाऽन्यत्सर्वं समाप्य **"ॐ तारेतुतारेतुरेस्वाहा"** इति मन्त्रेण कुरुकुल्लापूजाङ्गत्वेन बलिं दत्त्वा समापयेत्, इति कुरुकुल्लापूजाविधिः।।

इति श्रीकाञ्ची उपनिषद् ब्रह्मेन्द्र मठाधीश श्री इष्टसिद्धेन्द्र सरस्वती यति शिष्य
श्री कृष्णानन्देन्द्र सरस्वती यति शिष्य श्री पूर्णानन्देन्द्र सरस्वती
यति शिष्य श्री ज्ञानानन्दन्द्र सरस्वती यति विरचिते
श्री विधामहार्णने तिथि नित्या
प्रकरणम् समाप्तम्

।।श्रीगुरुभ्यो नमः।।

"परिरक्षणीय परिवेदक परमार्थरत्न"

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्री विशालाक्षियम्बा
श्री चितानन्दनाथ लहरी-कामधेनुः

श्रीज्ञानशक्तिः

## द्वितीयो भागः

## ६. न्यास-प्रकरणम्

१. श्री बाला एवं पञ्चदश्युपासकानां विशैषन्यासखण्डः
२. श्री षोडश्युपासकानां विशेषन्यासखण्डः
३. श्री षोडश्युपासकानां अधिविशेषतरन्यासखण्डः
४. श्री षोडश्युसाकानां अधि विशेषतम न्यासखण्डः

दाक्षिणात्य
परमहंस-परिव्राजक
श्रीं श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# ६. षष्ठः मुद्राकल्प तरङ्गः

## ( प्रायः प्रायोग में आनेवाले न्यास एवं दशमुद्राएँ )



**६१. सर्वसंक्षोभिणी—** उत्तानयोः करतलयोः प्रसारित तर्जनीकं संहत कनिष्ठानामा-मध्यमाग्राणि अन्योन्य अभिमुख्येन संयोज्य स्वस्वकनिष्ठोपरि अंगुष्ठाग्र संबन्धे सर्वसंक्षोभिणी।



**६२. सर्वविद्राविणी—** सर्वविद्राविणी सैव प्रसारित मध्यमा अपि सर्वविद्राविणी।



**६३. सर्वाकर्षिणी—** इयमेव मध्यमा तर्जन्योः आकुंचने सर्वाकर्षिणी।



**६४. सर्ववशंकरी—** परस्पर-ग्रथित अंगुलिस्पृष्ट नखा-ग्रांगुष्ठयोः योगे सर्ववशंकरी।



**६५. सर्वोन्मादिनी—** अधरोत्तरं तिर्यक् प्रसारिते वाम-दक्षिणकनिष्ठे माध्यमाभ्यां धृत्वा तयोरग्रे अंगुष्ठाभ्यां निपीड्य अनामातर्जन्य-ग्राणां पार्श्वतो मिथः संस्पर्शे सर्वोन्मादिनी।



**६६. सर्वमहांकुशा—** एषैव अनामयोराकुंचने तर्जन्योः किंचिदभुग्नत्वे च सर्वमहांकुशा।



**६७. सर्वखेचरी—** दक्षभुज-मध्यसन्ध-स्थापित-वामकूर्परं आमणिबन्धं पाणी परि वर्त्य स्वाभिमुखमन्योन्य-स्पृष्टाग्रयोः मध्यमयोः पृष्टतोऽधरोत्तरं तिरःप्रसारितानि दक्षवामानाकनिष्ठा-ग्राणि तर्जनीभ्यां धृत्वा पुरोऽ-ङगुष्ठयोः अन्योन्यसंबन्धे सर्वखेचरी।



**६८. सर्वबीजम्—** ऊर्ध्वाधस्तिरः प्रसृते वामदक्षकनिष्ठाग्रे अनामाभ्यां धृत्वा अर्धचन्द्राकृतियोजितेषु तर्जन्यंगुष्ठेषु मिथः श्लिष्टाभ्यां ऋजुभ्यां मध्यमाभ्यां तर्जन्योः संबन्धे सर्वबीजम्।



**६९. सर्वयोनिः—** तिर्यङ् मिलिताग्रयोः मध्य मयो पश्चात् ऊर्ध्वायः स्थिते वाम दक्षानामिके तिरः प्रसारिते तर्जनीभ्यां निपीड्य वामं कनिष्ठां दक्षिणया धृत्वा अंगुष्ठाग्रयोः मध्यमा पुरो मध्यपर्वद्वय संबन्धे सर्वयोनिः।



**७०. सर्वत्रिखण्डा—** सर्व-योन्यामेव ऋजूकृतयोः कनिष्ठयोः मध्यमयोः अंगुष्ठयोश्च पृथङ्मिथः संस्पर्शे सर्वत्रिखण्डा।।



**७१. सौभाग्यदण्डिनी—** वामहस्तमुष्टिं वध्वा सरलया तर्जन्या अंसकर्णमभिते भ्रामणे सौभाग्यदण्डिनी।



**७२. रिपुजिह्वाग्रहा—** सैव गर्भितांगुष्ठ-वाम पादतलं न्यस्ता रिपुजिह्वाग्रहा।।

# श्रीविद्यामहार्णवः

## श्रीविशालाक्षियम्बा श्रीचितानन्दनाथ लहरी

## कामधेनुः
## द्वितीयो भागः

## न्यास-प्रकरणम्

### १. श्रीबाला एवं पञ्चदश्युपसकानां विशेषन्यास खण्डः

#### मातृकान्यासः

अस्य श्रीमातृकासरस्वतीन्यासमहामन्त्रस्य ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमातृकासरस्वती देवता। हल्भ्यो बीजेभ्यो नमः, स्वरेभ्यः शक्तिभ्यो नमः, बिन्दुभ्यः कीलकेभ्यो नमः, मम श्रीविद्याङ्गत्वेन न्यासे विनियोगः।

सर्वमातृकया सर्वाङ्गे अञ्जलिना त्रिर्व्यापकं कुर्यात्।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः

एवं हृदयादिन्यासः। भूर्भुवस्वरोम् इति दिग्बन्धः।

## ध्यानम्

**पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-**
**देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम्।**
**अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्था-**
**मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि।।**

लमित्यादि पञ्चपूजां कृत्वा।

## बहिर्मातृका

मातृकाः त्रितारीबालापूर्विकाः 'नमः हंसः' इत्यन्ताः स्वाङ्गेषु न्यसेत्।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः हंसः** (शिरसि)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः आं नमः हंसः** (मुखवृत्ते)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः इं नमः हंसः** (दक्षनेत्रे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ईं नमः हंसः** (वामनेत्रे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं नमः हंसः** (दक्षकर्णे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऊं नमः हंसः** (वामकर्णे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऋं नमः हंसः** (दक्षनासापुटे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॠं नमः हंसः** (वामनासापुटे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऌं नमः हंसः** (दक्षकपोले)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॡं नमः हंसः** (वामकपोले)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः एं नमः हंसः** (ऊर्ध्वोष्ठे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं नमः हंसः** (अधरोष्ठे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमः हंसः** (ऊर्ध्वदन्तपंक्तौ)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः औं नमः हंसः** (अधोदन्तपंक्तौ)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः हंसः** (जिह्वाग्रे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अः नमः हंसः** (कण्ठे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कं नमः हंसः** (दक्षबाहुमूले)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः खं नमः हंसः** (दक्षकूर्परे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः गं नमः हंसः** (दक्षमणिबन्धे)
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः घं नमः हंसः** (दक्षकराङ्गुलिमूले)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ङं नमः हंसः (दक्षकराङ्गुल्यग्रे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः चं नमः हंसः (वामबाहुमूले)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः छं नमः हंसः (वामकूर्परे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः जं नमः हंसः (वाममणिबन्धे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः झं नमः हंसः (वामकराङ्गुलिमूले)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ञं नमः हंसः (वामकराङ्गुल्यग्रे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः टं नमः हंसः (दक्षोरुमूले)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ठं नमः हंसः (दक्षजानुनि)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः डं नमः हंसः (दक्षगुल्फे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ढं नमः हंसः (दक्षपादाङ्गुलिमूले)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः णं नमः हंसः (दक्षपादाङ्गुल्यग्रे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः थं नमः हंसः (वामजानुनि)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तं नमः हंसः (वामोरुमूले)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः दं नमः हंसः (वामगुल्फे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धं नमः हंसः (वामपादाङ्गुलिमूले)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नं नमः हंसः (वामपादाङ्गुल्यग्रे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पं नमः हंसः (दक्षपार्श्वे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः फं नमः हंसः (वामपार्श्वे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः बं नमः हंसः (पृष्ठे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भं नमः हंसः (नाभौ)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मं नमः हंसः (जठरे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः यं नमः हंसः (हृदये)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रं नमः हंसः (दक्षकक्षे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः लं नमः हंसः (गलपृष्ठे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वं नमः हंसः (वामकक्षे)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः शं नमः हंसः (हृदयादिदक्षकराङ्गुल्यन्तं)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः षं नमः हंसः (हृदयादिवामकराङ्गुल्यन्तं)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सं नमः हंसः (हृदयादिदक्षपादाङ्गुल्यन्तं)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हं नमः हंसः (हृदयादिवामपादाङ्गुल्यन्तं)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ळं नमः हंसः (कट्यादिपादाङ्गुल्यन्तं)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः क्षं नमः हंसः (कट्यादिब्रह्मरन्ध्रान्तं)

## अन्तर्मातृका

अस्य श्री अन्तर्मातृकासरस्वतीन्यासमहामन्त्रस्य **ब्रह्मणे ऋषये नमः** (शिरसि) **गायत्र्यै छन्दसे नमः** (मुखे) **अन्तर्मातृकासरस्वत्यै देवतायै नमः** (हृदये) **हल्भ्यो बीजेभ्यो नमः** (गुह्ये) **स्वरेभ्यश्शक्तिभ्यो नमः** (पादयोः) **बिन्दुभ्यः कीलकेभ्यो नमः** (नाभौ) **अन्तर्मातृकासरस्वतीप्रसादसिध्यर्थे न्यासे विनियोगाय नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः हृदयाय नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः शिरसे स्वाहा**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः शिखायै वषट्**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः कवचाय हुं**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः नेत्रत्रयाय वौषट्**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं यं रं लं वं शं षं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः अस्त्रायफट्**

ब्रह्मरन्ध्रे। बिन्दु-अष्टदल वृत्त चतुरश्रंविलिख्य । बिन्दौ ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसः नमः।

अन्तः अष्टदलेषु द्वे द्वे अक्षराणि सबिन्दु अकारादि स्वरवर्णान् विलिख्य।

बहिः अष्टदलेषु अष्टवर्गं विलिख्य। **अं नमः हंसः आं नमः हंसः इ ईं अः हंसः** (इत्थं स्वर वर्णैः पूरणीयम्)

**१ कं नमः हंसः ख नमः हंसः गं नमः हंसः घं नमः हंसः ङं नमः हंसः ।।**

**२ चं नमः हंसः छ नमः हंसः ज नमः हंसः झ नमः हंसः ञं नमः हंसः ।।**

**३ टं नमः हंसः ठ नमः हंसः ड नमः हंसः ढ नमः हंसः णं नमः हंसः ।।**

**४ तं नमः हंस थं नमः हंसः दं नमः हंसः धं नमः हंसः नं नमः हंसः ।।**

**५ पं नमः हंस फं नमः हंसः बं नमः हंसः भ नमः हंसः मं नमः हंसः ।।**

**६ यं नमः हंस रं नमः हंसः लं नमः हंसः वं नमः हंसः ।।**

**७ शं नमः हंस षं नमः हंसः सं नमः हंसः।।**

**८ हं नमः हंस ळं नमः हंसः क्षं नमः हंसः।।** इति अष्टवर्ग

बहिः वृत्ते पूर्वादि प्रादक्षिण्येन **अं नमः हंस + क्षं नमः हंसः** इति विलिख्य।

**चतुरश्रे चतुर्विदिक्षुषु (ॐ ऐं ह्रीं श्रीं कोणो में) ठं नमः हंसः।**

**चतुद्वरिषु वं नमः हंसः । इति ब्रह्मरन्ध्रे विभाव्य**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः हंसः, आं नमः हंसः खं गं घं ङं चं छं जं झं ञं टं ठं अः नमः हंसः।**

कण्ठे विशुद्धिचक्रे षोडशदलकमले।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कं नमः हंसः, खं गं घं ङ चं छं जं झं ञं टं ठं नमः हंसः।** हृदये अनाहते द्वादशदलकमले।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः डं नमः हंसः ढं नमः हंस खं गं घं ङ चं छं जं झं ञं टं ठं फं नमः हंसः।।** नाभौ मणिपूरे दशदलकमले।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः बं नमः हंसः, भं नमः हंसः खं गं घं ङ चं छं जं झं ञं टं ठं लं नमः हंसः।।** लिङ्गमूले स्वाधिष्ठाने षड्दलकमले ।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वं नमः हंसः, शं नमः हंसः खं गं घं ङ चं छं जं झं ञं टं ठं सं नमः हंसः।।** गुदोपरि मूलाधारे चतुर्दलकमले।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हं नमः हंसः, क्षं नमः ।** भ्रुवोर्मध्ये आज्ञाचक्रे द्विदले।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः हंसः, आं नमः हंसः खं गं घं ङं चं छं जं झं ञं टं ठं क्षं नमः हंसः।** (५० वर्णाः) मूर्ध्नि सहस्रारे । सव्यं

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः क्षं नमः हंसः । अं नमः हंसः, आं नमः।** अपसव्यं

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः हंसः खं गं घं ङं चं छं जं झं ञं टं ठं क्षं नमः हंसः ।** सव्यं

## *करशुद्धिन्यासः*

**ॐ ऐं ह्रीं श्रीं अं नमः** (दक्षकरतले) **ॐ ऐं ह्रीं श्रीं अं नमः (मध्यमयोः)** (हृदयाय)
**ॐ ऐं ह्रीं श्रीं आं नमः** (तत्पृष्ठे) **ॐ ऐं ह्रीं श्रीं आं नमः (अनामिकयोः)** (शिरसे)
**ॐ ऐं ह्रीं श्रीं सौः नमः** (तत्पार्श्वयोः) **ॐ ऐं ह्रीं श्रीं सौः नमः (कनिष्ठिकयोः)** (शिखायै)
**ॐ ऐं ह्रीं श्रीं अं नमः** (वामकरतले) **ॐ ऐं ह्रीं श्रीं अं नमः (अङ्गुष्ठयोः)** (कवचाय)
**ॐ ऐं ह्रीं श्रीं आं नमः** (तत्पृष्ठे) **ॐ ऐं ह्रीं श्रीं आं नमः (तर्जन्योः)** (नेत्रत्रयाय)
**ॐ ऐं ह्रीं श्रीं सौः नमः** (तत्पार्श्वयोः) **ॐ ऐं ह्रीं श्रीं सौः नमः (करतलकरपृष्ठयोः)** अस्त्राय

## *आत्मरक्षान्यासः*

**ॐ ऐं ह्रीं श्रीं** मूलं **श्रीललितामहात्रिपुरसुन्दर्यै नमः आत्मानं रक्ष रक्ष** इतित्रिः। अञ्जलि हृदये न्यसेत्।

## *चतुरासनन्यासः*

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सौः देव्यात्मासनाय नमः** (पादयोः)
**ॐ ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः श्रीचक्रासनाय नमः** (जान्वोः)
**ॐ ऐं ह्रीं श्रीं हसैं ह्स्क्ली ह्स्सौः सर्वमन्त्रासनाय नमः** (ऊरुमूले)

ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः (मूलाधारे)
ॐ ऐं ह्रीं श्रीं ऐं श्रीललितामहात्रिपुरसुन्दर्यै नमः (पृष्टे)
ॐ ऐं ह्रीं श्रीं क्लीं द्वि श्रीललितामहात्रिपुरसुन्दर्यै नमः (हृदये)
ॐ ऐं ह्रीं श्रीं सौः त्रि श्रीललितामहात्रिपुरसुन्दर्यै (भ्रुवोर्मध्ये)
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मू श्रीललितामहात्रिपुरसुन्दर्यै (मूर्ध्नी)

## *तत्वन्यासः*

ॐ ऐं ह्रीं श्रीं ऐं प्र आत्मतत्वाय नमः दक्षपादे
ॐ ऐं ह्रीं श्रीं क्रियाशक्तये नमः वामपादे
ॐ ऐं ह्रीं श्रीं क्लीं द्वि विद्यातत्वाय नमः दक्षपार्श्वे
ॐ ऐं ह्रीं श्रीं ज्ञानशक्त्यै नमः वामपार्श्वे
ॐ ऐं ह्रीं श्रीं सौः त्रि शिवतत्वाय नमः दक्षकपोले
ॐ ऐं ह्रीं श्रीं इच्छाशक्त्यै नमः वामकपोले
ॐ ऐं ह्रीं श्रीं मूलं सर्वतत्वाय नमः शिरसि
ॐ ऐं ह्रीं श्रीं तुरीयशक्त्यै नमः मूर्ध्नि

## *पीठन्यासः*

ॐ ऐं ह्रीं श्रीं ऐं प्र कामगिरिपीठाय नमः मूलाधारे
ॐ ऐं ह्रीं श्रीं क्लीं द्वि जालन्धरपीठाय नमः हृदये
ॐ ऐं ह्रीं श्रीं सौः त्रि ओढयाणपीठाय नमः शिरसिः

## *बालाषडङ्गन्यासः*

ॐ ऐं ह्रीं श्रीं ऐं हृदयाय नमः
ॐ ऐं ह्रीं श्रीं क्लीं शिरसे स्वाहा
ॐ ऐं ह्रीं श्रीं सौः शिखायै वषट्
ॐ ऐं ह्रीं श्रीं ऐं कवचाय हुं
ॐ ऐं ह्रीं श्रीं क्लीं नेत्रत्रयाय वौषट्
ॐ ऐं ह्रीं श्रीं सौः अस्त्राय फट्

## *वशिन्यादिवाग्देवतान्यासः*

ॐ ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं लं लृं एं ऐं ओं औं अं अः ब्लूं वशिनीवाग्देवतायै नमः (शिरसि)
ॐ ऐं ह्रीं श्रीं कं खं गं घं ङं क्ल्हीं कामेश्वरीवाग्देवतायै नमः (ललाटे)

ॐ ऐं ह्रीं श्रीं चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै नमः (भ्रूमध्ये)

ॐ ऐं ह्रीं श्रीं टं ठं डं ढं णं य्लूं विमलावाग्देवतायै नमः (कण्ठे)

ॐ ऐं ह्रीं श्रीं तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः (हृदये)

ॐ ऐं ह्रीं श्रीं पं फं ब भं मं हस्ल्व्यूं जयिनीवाग्देवतायै नमः (नाभौ)

ॐ ऐं ह्रीं श्रीं यं रं लं वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः (गुह्ये)

ॐ ऐं ह्रीं श्रीं शं षं सं हं ळं क्ष्म्रीं कौळिनीवाग्देवतायै नमः (मूलाधारे)

## *बहिश्चक्रन्यासः*

ॐ ऐं ह्रीं श्रीं अं आं सौः चतुरश्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशति-शक्तिसहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः (पादयोः)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशांपरिपूरकचक्राधिष्ठात्र्यैकामाकर्षिण्या-दिषोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः (जान्वोः)

ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सौः अष्टदळपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्टशक्ति-सहितगुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरीदेव्यै नमः (ऊरुमूलयोः)

ॐ ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण-यादिचतुर्दशशक्तिसहितसप्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः (नाभौ)

ॐ ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादिदश-शक्तिसहितकुळोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः (हृदये)

ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्तिसहितनिगर्भ-योगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः (कण्ठेः)

ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्ति-सहितरहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः (मुखे)

ॐ ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिप्रदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रि-शक्तिसहितातिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः (नेत्रयोः)

ॐ ऐं ह्रीं श्रीं पञ्चदशी बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहितपरापराति-रहस्ययोगिनीरूपायै महात्रिपुरसुन्दरीदेव्यै नमः (मूर्ध्नि)

## अन्तश्चक्रन्यासः

**ॐ ऐं ह्रीं श्रीं अं आं सौः चतुरश्रत्रयात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यै अणिमाद्यष्टाविंशतिशक्ति-सहितप्रकटयोगिनीरूपायै त्रिपुरादेव्यै नमः** (अधःसहस्रारे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः षोडशदळपद्मात्मकसर्वाशापरिपूरकचक्राधिष्ठात्र्यै कामाकर्षण्यादि-षोडशशक्तिसहितगुप्तयोगिनीरूपायै त्रिपुरेश्वरीदेव्यै नमः** (अधःसहस्रारस्योपरि विषुसंज्ञे षड्दले)

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सं सौः अष्टदलपद्मात्मकसर्वसंक्षोभणचक्राधिष्ठात्र्यै अनङ्गकुसुमाद्यष्ट-शक्तिसहितगुप्ततरयोगिनीरूपायै त्रिपुरसुन्दरीदेव्यै नमः** (मूलाधारे)

**ॐ ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः चतुर्दशारात्मकसर्वसौभाग्यदायकचक्राधिष्ठात्र्यै सर्वसंक्षोभिण्यादिचतुर्दशशक्तिसहितसंप्रदाययोगिनीरूपायै त्रिपुरवासिनीदेव्यै नमः** (स्वाधिष्ठाने)

**ॐ ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः बहिर्दशारात्मकसर्वार्थसाधकचक्राधिष्ठात्र्यै सर्वसिद्धिप्रदादि-दशशक्तिसहितकुळोत्तीर्णयोगिनीरूपायै त्रिपुराश्रीदेव्यै नमः** (मणिपूरे)

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं अन्तर्दशारात्मकसर्वरक्षाकरचक्राधिष्ठात्र्यै सर्वज्ञादिदशशक्ति-सहितनिगर्भयोगिनीरूपायै त्रिपुरमालिनीदेव्यै नमः** (अनाहते)

**ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः अष्टारात्मकसर्वरोगहरचक्राधिष्ठात्र्यै वशिन्याद्यष्टशक्ति-सहितरहस्ययोगिनीरूपायै त्रिपुरासिद्धादेव्यै नमः** (विशुद्धौ)

**ॐ ऐं ह्रीं श्रीं ह्सैं ह्स्क्लरीं ह्स्रौः त्रिकोणात्मकसर्वसिद्धिपदचक्राधिष्ठात्र्यै कामेश्वर्यादित्रि-शक्तिसहिताअतिरहस्ययोगिनीरूपायै त्रिपुराम्बादेव्यै नमः** (लम्बिकाग्रे)

**ॐ ऐं ह्रीं श्रीं** पञ्चदशी **बिन्द्वात्मकसर्वानन्दमयचक्राधिष्ठात्र्यै षडङ्गायुधदशशक्तिसहित-परापरातिरहस्ययोगिनी-रूपायै महात्रिपुरासुन्दरीदेव्यै नमः** (आज्ञायां)

## कामेश्वर्यादिन्यासः

**ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं आग्निचक्रे कामगिरिपीठे मित्रेशनाथ-नवयोनिचक्रात्मक आत्मतत्व-सृष्टिकृत्य-जाग्रदशाधिष्ठायकेच्छाशक्तिवाग्भवात्मक-वागीश्वरीस्वरूप-महाकामेश्वरी *ब्रह्मात्मशक्ति-श्रीपादुकां पूजयामि नमः।** (मूलाधारे)

**ॐ ऐं ह्रीं श्रीं क्लीं हसकहलह्रीं सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथ-दशारद्वयचतुर्दशार-चक्रात्मक-विद्यातत्व-स्थितिकृत्य-स्वप्नदशाधिष्ठायक-ज्ञानशक्ति-कामराजात्मक-कामकलास्वरूप-महावज्रेश्वरी-विष्ण्वात्मशक्तिश्रीपादुकां पूजयामि नमः।** (अनाहते)

---

* रुद्रात्म

**ॐ ऐं ह्रीं श्रीं सौः सकलह्रीं सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथ-अष्टदळषोडशदळ-चतुरश्रचक्रात्मक-शिवतत्व-संहारकृत्य-सुषुप्तिदशाधिष्ठायक-क्रियाशक्तिस्वरूप-महाभगमालिनी **रुद्रात्मशक्ति श्रीपादुकां पूजयामि नमः।** (आज्ञायां)

**ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं क्लीं हसकहलह्रीं सौः सकलह्रीं परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ-समस्तचक्रात्मक-सपरिवारपरमतत्व-सृष्टिस्थितिसंहारकृत्य-तुरीयदशाधिष्ठा-यकेच्छाज्ञाज्ञान-क्रियाशान्ताशक्ति-वाग्भवकामराजशक्तिबीजात्मकपरमशक्तिस्वरूप-श्रीमहात्रिपुर-सुन्दरी-परब्रह्मात्मशक्तिश्रीपादुकां पूजयामि नमः।** (ब्रह्मरन्ध्रे)

पुनः आज्ञाचक्रस्य एकैकाङ्गुलोपरि देशे

**अं आं सौः नमः** (बिन्दौ)
**ऐ क्लीं सौः नमः** (अर्धचन्द्रे)
**ह्रीं क्लींसौः नमः** (रोधिन्यां)
**हैं ह्क्लीं ह्सौः नमः** (नादे)
**ह्सैं ह्स्कलीं ह्स्सौ नमः** (नादान्दे)
**ह्रीं क्लीं ब्लें नमः** (शक्तौ)
**ह्रीं श्रीं सौः नमः** (व्यापिकायां)
**ह्सैं ह्स्क्ल्रीं ह्स्रौः नमः** (समनायां)
(पञ्चदशी) **नमः** (उन्मनायां)
(षोडशी) **नमः** (ब्रह्मरन्ध्रे महाबिन्दौ)।

## *मूलविद्यान्यासः*

**ॐ ऐं ह्रीं श्रीं कं नमः** (शिरसि)
**ॐ ऐं ह्रीं श्रीं एं नमः** (मूलाधारे)
**ॐ ऐं ह्रीं श्रीं ईं नमः** (हृदि)
**ॐ ऐं ह्रीं श्रीं लं नमः** (दक्षनेत्रे)
**ॐ ऐं ह्रीं श्रीं ह्रीं नमः** (वामनेत्रे)
**ॐ ऐं ह्रीं श्रीं हं नमः** (भ्रूमध्ये)
**ॐ ऐं ह्रीं श्रीं सं नमः** (दक्षश्रोत्रे)
**ॐ ऐं ह्रीं श्रीं कं नमः** (वामश्रोत्रे)
**ॐ ऐं ह्रीं श्रीं हं नमः** (मुखे)
**ॐ ऐं ह्रीं श्रीं लं नमः** (दक्षभुजे)
**ॐ ऐं ह्रीं श्रीं ह्रीं नमः** (वामभुजे)
**ॐ ऐं ह्रीं श्रीं सं नमः** (पृष्ठे)
**ॐ ऐं ह्रीं श्रीं कं नमः** (दक्षजानुनि)
**ॐ ऐं ह्रीं श्रीं लं नमः** (वामजानुनि)
**ॐ ऐं ह्रीं श्रीं ह्रीं नमः** (नाभौ)

अथ ऋष्यादिषडङ्गन्यासं यथोपदेशं कुर्यात्।

---

** ब्रह्मात्म

## २. श्री षोडश्युपासकानां विशेषन्यासखण्डः

### *श्रीषोडशाक्षरीन्यासः*

**ॐ ऐं ह्रीं श्रीं** मूलं **नमः**। दक्षमध्यानामिकाभ्यां शिरसि न्यसेत्। तत्र तां दीपाभां स्रवत्सुधारसां महासौभाग्यदां ध्यात्वा—

**ॐ ऐं ह्रीं श्रीं** मूलं **नमः महासौभाग्यं मे देहि परसौभाग्यं दण्डयामि।** सौभाग्यदण्डिन्या मुद्रया वामकर्णसंवेष्टनपूर्वकं आमस्तकचरणं वामाङ्गे न्यसेत्।

**ॐ ऐं ह्रीं श्रीं** मूलं **नमः मम शत्रून्निगृहणामि।** रिपुजिह्वाग्रया मुद्रया वामपादाधो न्यसेत्।

**ॐ ऐं ह्रीं श्रीं** मूलं **नमः त्रैलोक्यस्याहं कर्ता।** त्रिखण्डया मुद्रया फाले न्यसेत्।

**ॐ ऐं ह्रीं श्रीं** मूलं **नमः**। त्रिखण्डया मुद्रया मुखवेष्टनत्वेन न्यसेत्।

**ॐ ऐं ह्रीं श्रीं** मूलं नमः । त्रिखण्डया मुद्रया दक्षकर्णादिवामकर्णान्तं मुखवेष्टनत्वेन न्यसेत्।

**ॐ ऐं ह्रीं श्रीं ओं** मूलं नमः। त्रिखण्डया गळोर्ध्वमामस्तकं न्यसेत्।

**ॐ ऐं ह्रीं श्रीं ओं** मूलं ओं नमः। त्रिखण्डया मुद्रया मस्तकात् पादपर्यन्तं पादादामस्तकं च न्यसेत्।

**ॐ ऐं ह्रीं श्रीं** मूलं नमः। योनिमुद्रया मुखे न्यसेत्।

**ॐ ऐं ह्रीं श्रीं** मूलं नमः। योनिमुद्रया ललाटे न्यसेत्।

### *संमोहनन्यासः*

**ॐ ऐं ह्रीं श्रीं मूलं**। मूलविद्यां स्मृत्वा तत्प्रभया जगदरुणं विभावयन् अनामिकां मूर्ध्नि त्रिः परिभ्राम्य—

**ॐ ऐं ह्रीं श्रीं मूलं**। ब्रह्मरन्ध्रे अङ्गुष्ठानामिके न्यसेत्।

**ॐ ऐं ह्रीं श्रीं मूलं**। मणिबन्धद्वये अङ्गुष्ठानामिके न्यसेत्।

**ॐ ऐं ह्रीं श्रीं मूलं**। फाले अङ्गुष्ठानामिके न्यसेत्।

**ॐ ऐं ह्रीं श्रीं मूलं**। शाक्ततिलकं धारयेत्।

| | | **संहारन्यासः** | **सृष्टिन्यासः** | **स्थितिन्यासः** |
|---|---|---|---|---|
| **ॐ ऐं ह्रीं श्रीं श्रीं** | **नमः** | पादयोः | ब्रह्मरन्ध्रे | अङ्गुष्ठयोः |
| **ॐ ऐं ह्रीं श्रीं ह्रीं** | **नमः** | जङ्घयोः | फाले | तर्जन्योः |
| **ॐ ऐं ह्रीं श्रीं क्लीं** | **नमः** | जान्वोः | नेत्रयोः | मध्यमयोः |

| | | संहारन्यासः | सृष्टिन्यासः | स्थितिन्यासः |
|---|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं ऐं | नमः | कटिभागद्वये | कर्णयोः | अनामिकयोः |
| ॐ ऐं ह्रीं श्रीं सौः | नमः | पृष्ठे | नासापुढयोः | कनिष्ठिकयोः |
| ॐ ऐं ह्रीं श्रीं ओं | नमः | लिङ्गे | गण्डयोः | मूर्ध्नि |
| ॐ ऐं ह्रीं श्रीं ह्रीं | नमः | नाभौ | दन्तपङ्क्तौ | मुखे |
| ॐ ऐं ह्रीं श्रीं श्रीं | नमः | पार्श्वयोः | ओष्ठयोः | हृदि |
| ॐ ऐं ह्रीं श्रींक-५ | नमः | स्तनयोः | जिह्वायां | नाभेःआपादद्वयं |
| ॐ ऐं ह्रीं श्रींह-६ | नमः | अंसयोः | कण्ठे | कण्ठादिनाभ्यन्तं |
| ॐ ऐं ह्रीं श्रींस-४ | नमः | कर्णयोः | पृष्ठे | मूर्धादिकण्ठान्तं |
| ॐ ऐं ह्रीं श्रीं सौः | नमः | मूर्ध्नि | सर्वाङ्गे | पादाङ्गुष्ठयोः |
| ॐ ऐं ह्रीं श्रीं ऐं | नमः | मुखे | हृदि | पादतर्जन्योः |
| ॐ ऐं ह्रीं श्रींक्लीं | नमः | नेत्रयोः | स्तनयोः | पादमध्यमयोः |
| ॐ ऐं ह्रीं श्रीं ह्रीं | नमः | कर्णयुगसन्निधौ | उदरे | पादानामिकयोः |
| ॐ ऐं ह्रीं श्रीं श्रीं | नमः | कर्णवेष्टनयोः | लिङ्गे | पादकनिष्ठिकयोः |

न्यस्य मूलेन देहे व्यापकं कुर्यात्।

दीपानि प्रज्वाल्य यथाशक्ति मूलं जपेत्।

## *लघुषोढान्यासः*

**अस्य श्रीलघुषोढान्यासस्य दक्षिणामूर्तये ऋषये नमः**—शिरसि। **गायत्र्यै छन्दसे नमः**—मुखे। **गणेशग्रहनक्षत्रयोगिनीराशिपीठरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः**—इति हृदि। **श्रीविद्याऽङ्गत्वेन न्यासे विनियोगाय नमः**—इति करसम्पुटे।।

**ॐ ऐं ह्रीं श्री अं कं खं गं घं ङं आं ऐं अङ्गुष्ठाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं इं चं छं जं झं ञं ईं क्लीं तर्जनीभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं उं टं ठं डं ढं णं ऊं सौः मध्यमाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं एं तं थं दं धं नं ऐं ऐं अनामिकाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं ओं पं फं बं भं मं औं क्लीं कनिष्ठिकाभ्यां नमः।**

**ॐ ऐं ह्रीं श्रीं अं यं रं लं वं शं षं सं हं ळं क्षं अः सौः करतलकरपृष्ठाभ्यां नमः।**

एवं हृदयादिन्यासः। **ध्यानम्—**

**उद्यत्सूर्यसहस्राभां पीनोन्नतपयोधराम्।**
**रक्तमाल्याम्बरालेपां रक्तभूषणभूषिताम्।।**
**पाशाङ्कुशधनुर्बाणभास्वत्पाणिचतुष्टयाम्।**
**लसन्नेत्रत्रयां स्वर्णमुकुटोद्भासिमस्तकाम्।।**
**गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्।**
**देवीं पीठमयीं ध्यायेन्मातृकां सुन्दरीं पराम्।।**

आयुधक्रमस्तु सपर्याप्रकरण एवोक्त इहानुसन्धेयः। इति श्रीदेवीं समष्टिरूपेण ध्यात्व। गणेशादिव्यष्टिरूपेण च ध्यायेत्।

## *गणेशन्यासः*

**तरुणादित्यसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।**
**पाशाङ्कुशवराभीतिकरान् शक्तिसमन्वितान् ।।**
**ते तु सिन्दूरवर्णाभाः सर्वालङ्कारभूषिताः ।**
**एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः ।।**

वामोर्ध्वकरमारभ्य वामाधः करपर्यन्तं गणेशानां पाशादिध्यानम्। शक्तीनां तु वामकरे कमलं दक्षिणे च प्रियाश्लेष इति ध्यात्वा, मातृकास्थानेषु त्रितारीमातृकापूर्वकं गणेशान् न्यसेत्। यथा—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं श्रीयुक्ताय विघ्नेशाय नमः।** शिरसि ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः आं ह्रीयुक्ताय विघ्नराजाय नमः।** मुखवृत्ते ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः इं तुष्टियुक्ताय विनायकाय नमः।** दक्षनेत्रे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ईं शान्तियुक्ताय शिवोत्तमाय नमः।** वामनेत्रे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं पुष्टियुक्ताय विघ्नहृते नमः।** वामकर्णे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऊं सरस्वतीयुक्ताय विघ्नकर्त्रे नमः।** वामकर्णे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऋं रतियुक्ताय विघ्नराजे नमः।** दक्षनासापुटे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॠं मेधायुक्ताय गणनायकाय नमः।** वामनासापुटे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऌं कान्तियुक्ताय एकदन्ताय नमः।** दक्षगण्डे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॡं कामिनीयुक्ताय द्विदन्ताय नमः।** वामगण्डे ।।
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः एं मोहिनीयुक्ताय गजवक्त्राय नमः।** ऊर्ध्वोष्ठे ।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं जटायुक्ताय निरञ्जनाय नमः। अधरोष्ठे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं तीव्रायुक्ताय कपर्दभृते नमः। ऊर्ध्वदन्तपङ्क्तौ ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः औं ज्वालिनीयुक्ताय दीर्घमुखाय नमः। अधोदन्तपङ्क्तौ ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नन्दायुक्ताय शङ्कुकर्णाय नमः। जिह्वाऽग्रे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अः सुरसायुक्ताय वृषध्वजाय नमः। कण्ठे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कं कामरूपिणीयुक्ताय गणनाथायनमः। दक्षबाहुमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः खं सुभ्रूयुक्ताय गजेन्द्राय नमः। दक्षकूर्परे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः गंजयिनीयुक्ताय शूर्पकर्णाय नमः। दक्षमणिबन्धे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः घं सत्यायुक्ताय त्रिलोचनाय नमः। दक्षकराङ्गुलिमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ङं विघ्नेशीयुक्ताय लम्बोदराय नमः। दक्षकराङ्गुल्यग्रे।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः चं सुरूपायुक्ताय महानादाय नमः। वामबाहुमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः छं कामदायुक्ता चतुर्मूर्त्तये नमः। वामकूर्परे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः जं मदविह्वलायुक्ताय सदाशिवाय नमः। वाममणिबन्धे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः झं विकटायुक्ताय आमोदाय नमः। वामकराङ्गुलिमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ञं पूर्णायुक्ताय दुर्मुखाय नमः। वामकराङ्गुल्यग्रे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः टं भूदितायुक्ताय सुमुखाय नमः। दक्षोरुमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ठं भूमियुक्ताय प्रमोदाय नमः। दक्षजानुनि ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः डं शक्तियुक्ताय एकपादाय नमः। दक्षगुल्फे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ढं रमायुक्ताय द्विजिह्वाय नमः। दक्षपादाङ्गुलिमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः णं मानुषीयुक्ताय शूराय नमः। दक्षपादाङ्गुल्यग्रे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तं मकरध्वजायुक्ताय वीराय नमः। वामोरुमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः थं वीरिणीयुक्ताय षण्मुखाय नमः। वामजानुनि ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः दं भ्रूकुटीयुक्ताय वरदाय नमः। वामगुल्फे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धं लज्जायुक्ताय वामदेवाय नमः। वामपादाङ्गुलिमूले ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नं दीर्घघोणायुक्ताय वक्रतुण्डाय नमः। वामपादाङ्गुल्यग्रे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पं धनुर्धरायुक्ताय द्विरण्डकाय नमः। (नित्याषोडशिकार्णवे —द्वितुण्डकाय नमः।) दक्षपार्श्वे।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः फं यामिनीयुक्ताय सेनान्ये नमः। वामपार्श्वे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः बं रात्रियुक्ताय ग्रामण्ये नमः। पृष्ठे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भं चन्द्रिकायुक्ताय मत्ताय नमः। नाभौ ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मं शशिप्रभायुक्ताय विमत्ताय नमः। जठरे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः यं लोलायुक्ताय मत्तवाहनाय नमः। हृदये ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रं चपलायुक्ताय जटिने नमः। दक्षकक्षे ।। दक्षस्कन्धे।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः लं ऋद्धियुक्ताय मुण्डिने नमः। गलपृष्ठे—ककुदि।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वं दुर्भगायुक्ताय खड्गिने नमः। वामकक्षे।। वामस्कन्धे।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः शं सुभगायुक्ताय वरेण्याय नमः। हृदयादिदक्षकराङ्गुल्यन्तम्।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः षं शिवायुक्ताय वृषकेतनाय नमः। हृदयादिवामकराङ्गुल्यन्तम्।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सं दुर्गायुक्ताय भक्ष्यप्रियाय नमः। हृदयादिदक्षपादाङ्गुल्यन्तम्।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ळं कालकुब्जिकायुक्ताय मेघनादाय नमः। हृदयादिगुह्यान्तम्।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः क्षं विघ्नहारिणीयुक्ताय गणेश्वराय नमः। हृदयादिमूर्धान्तम्।।

## *ग्रहन्यासः*

ध्यानम्—

रक्तं श्वेतं तथा रक्तं श्यामं पीतं च पाण्डुरम्।
कृष्णं धूम्रं धूम्रधूम्रं भावयेद्रविपूर्वकान् ।।
कामरूपधरान् देवान् दिव्याभरणभूषितान्।
वामोरुन्यस्तहस्तांश्च दक्षहस्तवरप्रदान् ।।
शक्तयोऽपि तथा ध्येयाः वराभयकराम्बुजाः।
स्वस्वप्रियाङ्कनिलयाः सर्वाभरणभूषिताः ।।

इति ध्यात्वा—

ओं ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः
रेणुकायुक्ताय सूर्याय नमः। हृदयाधः हृज्जठरसन्धौ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः यं रं लं वं अमृतयुक्ताय चन्द्राय नमः। भ्रूमध्ये ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कं खं गं घं ङं धर्मायुक्ताय भौमाय नमः। नेत्रयोः ।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः चं छं जं झं ञं यशस्विनीयुक्ताय बुधाय नमः। श्रोत्रयोः ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः टं ठं डं ढं णं शाङ्करीयुक्ताय बृहस्पतये नमः। कण्ठे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तं थं दं धं नं ज्ञानरूपायुक्ताय शुक्राय नमः। हृदि ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पं फं बं भं मं शक्तियुक्ताय शनैश्चराय नमः। नाभौ ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः शं षं सं हं कृष्णायुक्ताय राहवे नमः। मुखे ।।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ळं क्षं धूम्रायुक्ताय केतवे नमः। गुदे ।।

## नक्षत्रन्यासः

ध्यानम्—

ज्वलत्कालानलप्रख्या वरदाभयपाणयः ।
नतिपाण्योऽश्विनीपूर्वाः सर्वाभरणभूषिताः ।।

इति ध्यात्वा—

ॐ ऐं ह्रीं श्रीं अं आं अश्विन्यै नमः। ललाटे ।।
ॐ ऐं ह्रीं श्रीं इं भरण्यै नमः। दक्षनेत्रे ।।
ॐ ऐं ह्रीं श्रीं ईं उं ऊं कृत्तिकायै नमः। वामनेत्रे ।।
ॐ ऐं ह्रीं श्रीं ऋं ॠं लृं ॡं रोहिण्यै नमः। दक्षकर्णे ।।
ॐ ऐं ह्रीं श्रीं एं मृगशिरसे नमः। वामकर्णे ।।
ॐ ऐं ह्रीं श्रीं ऐं आर्द्रायै नमः। दक्षनासापुटे ।।
ॐ ऐं ह्रीं श्रीं ओं औं पुनर्वसवे नमः। वामनासापुटे ।।
ॐ ऐं ह्रीं श्रीं कं पुष्याय नमः। कण्ठे ।।
ॐ ऐं ह्रीं श्रीं खं गं आश्लेषायै नमः। दक्षस्कन्धे ।।
ॐ ऐं ह्रीं श्रीं घं ङं मघायै नमः। वामस्कन्धे ।।
ॐ ऐं ह्रीं श्रीं चं पूर्वफल्गुन्यै नमः। पृष्ठे ।।
ॐ ऐं ह्रीं श्रीं छं जं उत्तरफल्गुन्यै नमः। दक्षकूर्परे ।।
ॐ ऐं ह्रीं श्रीं झं ञं हस्ताय नमः। वामकूर्परे ।।
ॐ ऐं ह्रीं श्रीं टं ठं चित्रायै नमः। दक्षमणिबन्धे ।।
ॐ ऐं ह्रीं श्रीं डं स्वात्यै नमः। वाममणिबन्धे ।।
ॐ ऐं ह्रीं श्रीं ढं णं विशाखायै नमः। दक्षहस्ते ।।

ॐ ऐं ह्रीं श्रीं तं थं दं अनुराधायै नम। वामहस्ते ।।
ॐ ऐं ह्रीं श्रीं धं ज्येष्ठायै नमः। नाभौ ।।
ॐ ऐं ह्रीं श्रीं नं पं फं मूलाय नमः। कटिबन्धे ।।
ॐ ऐं ह्रीं श्रीं बं पूर्वाषाढायै नमः। दक्षोरौ ।।
ॐ ऐं ह्रीं श्रीं भं उत्तराषाढायै नमः। वामोरौ ।।
ॐ ऐं ह्रीं श्रीं मं श्रवणाय नमः। दक्षजानुनि ।।
ॐ ऐं ह्रीं श्रीं यं रं धनिष्ठायै नमः। वामजानुनि ।।
ॐ ऐं ह्रीं श्रीं लं शततारकायै नमः। दक्षजङ्घायाम् ।।
ॐ ऐं ह्रीं श्रीं वं शं पूर्वभाद्रपदायै नमः। वामजङ्घायम् ।।
ॐ ऐं ह्रीं श्रीं षं सं हं उत्तरभाद्रपदायै नमः। दक्षपादे ।।
ॐ ऐं ह्रीं श्रीं ळं क्षं अं अः रेवत्यै नमः। वामपादे ।।

## योगिनीन्यासः

"क्षितौ षट्पञ्चाशव्वि समधिक पञ्चाशदुदके हुताशे द्वाषष्टिः चतुराधिक पञ्चाशदनिले।
दिविद्विष्षटत्रिंशत् मनसि च चतुः षष्टिरितिये मयूखाः तेषामंत्युपरि तव पादम्बुजयुगम्"

सोन्दर्यलहरी

## *विशुद्धिचक्रम्। कण्ठे।*

### *आकशतत्वम्। ७ २ मयूखाः।*

दिवि द्विःषटत्रिंशत मयूखाः

### *व्योमेश्वरी युक्त व्योमेश्वराख्या।*

### *अर्धनारीश्वरः। ध्यानम्।*

१ कण्ठस्थाने विशुद्धौ नृपदलकमले श्वेतवर्णां त्रिनेत्रां
हस्तैः खट्वाङ्गखड्गौ त्रिशिखमपि महाचर्म सन्धारयन्तीम्।
वक्स्त्रेणैकेन युक्तां पशुजनभयदा पायसान्नैकसक्तां
त्वक्स्थां वन्देऽमृताद्यैः परिवृतवपुषं डाकिनीं वीरवन्द्याम्।।




२ विशुद्धौ ते शुद्धस्फटिक विशँद व्योमजनकं
शिवं सेवेदेवीमपि शिवसमानव्यवसितां।
ययोः कांत्या भांत्याः शशिकिरणसारूप्यसरणैः
विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती।।

३ मूर्त्तिं चाङ्गनिविष्टमङ्गरहितं शान्तं त्रिधामास्पदम्
व्याप्ताशेष चराचरं गुणगणं भावैकसच्चिन्मयम्।
मूर्त्ता मूर्त्तार्धमूर्त्तिममलं ज्योतिप्रदीपोज्वलम्
साक्षात्षोडशवर्णपत्रकमले जीवं चिरं चिंतयेत्।।

४ विशुद्धचक्रनिलयाऽरक्तवर्णा त्रिलोचना।
खड्वाङ्गादिप्रहरणा वदनैक समन्विता।।

५ पायसान्नप्रिया त्वक्स्था पशुलोक भयङ्करी।
अमृतादि महाशक्तिः संवृता डाकिनीश्वरी।।

४ डां सोहं हंसश्शिवः विशुद्धि अधिष्ठान देवतायै
डाकिनी सहित जीवेश्वर स्वरूपिण्यै नमः।
जोवेश्वरस्वरूपिण्यम्बा श्री पादुकां पूजयामि नमः
डां डीं डमलवरयूं डाकिन्यै नमः।।

अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः मां रक्ष रक्ष त्वगात्मने नमः। इतिमन्त्रेण
कण्ठस्थ षोडशदल विशुद्धिकमल कर्णिकायां
डाकिनीं न्यस्य।। तद्दलेषु पुरोभागादि

प्रादक्षिण्येन तदावरणसहितः न्यसेत्।।

ॐ ऐं ह्रीं श्रीं अं अमृतायै नमः।
ॐ ऐं ह्रीं श्रीं आं आकर्षिण्यै नमः।
ॐ ऐं ह्रीं श्रीं इं इन्द्राण्यै नमः।
ॐ ऐं ह्रीं श्रीं ईं ईशिन्यै नमः।
ॐ ऐं ह्रीं श्रीं उं उमायै नमः।
ॐ ऐं ह्रीं श्रीं लृं लृकारायै नमः
ॐ ऐं ह्रीं श्रीं लॄं लॄकारायै नमः।
ॐ ऐं ह्रीं श्रीं एं एकपादायै नमः।
ॐ ऐं ह्रीं श्रीं ऐं ऐश्वर्यात्मिकायै नमः।
ॐ ऐं ह्रीं श्रीं ओं ओङ्कारायै नमः।

ॐ ऐं ह्रीं श्रीं ऊं ऊर्ध्वकेश्यै नमः। ॐ ऐं ह्रीं श्रीं औं औषध्यै नमः।
ॐ ऐं ह्रीं श्रीं ऋं ऋद्धिदायै नमः। ॐ ऐं ह्रीं श्रीं अं अम्बिकायै नमः।
ॐ ऐं ह्रीं श्रीं ॠं ॠकारायै नमः। ॐ ऐं ह्रीं श्रीं अः अक्षरायै नमः।

## *अनाहतचक्रम्। हृत्पद्मे।*

### *वायुस्तत्वम् ५४ मयूखाः*

अनिले चतुरधिक पंचाशत् मयूखाः

### *हंसेश्वरीसमेतहंसेश्वरः*

ध्यानम्



१ हृत्पद्मेभानुपत्रेद्विवदनलसितां दांष्ट्रिणीं श्यामवर्णां
अक्षं शूलं कपालं डमरूमपिभुजैर्धारयन्तीं त्रिनेत्रां।
रक्तस्थां कालरात्रि प्रभृतिपरिवृतां स्निग्धभक्तैकसक्तां
श्रीमद्वीरेन्द्रवन्द्यां अभिमतफलदां राकिणीं भावयामः।।

२ समुन्मीलत्संवित्कमलमकरन्दैक रसिकम्
भजेहंसद्वन्द्वं किमपि महतां मानसचरम्।
यदालापादष्टादशगुणितविद्यापरिणतिः
यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव।।

३ कादिः ठान्तगतैः प्रकल्पितदलेपङ्केरुहे पार्वती
कान्तिः कान्त शशाङ्केभाल सदृशं त्र्यक्षं कपर्दोज्वलम्।
शान्तं टङ्कमृगाङ्गधूव्रिवलयैर्भूतं करेकङ्कणं
ग्रैवेयाङ्गदहार नूपुरधरं चमम्बरं चिन्तयेत्।।

ॐ ऐं ह्रीं श्रीं अनाहताब्जनिलया श्यामावदनद्वया।
दंष्ट्रे ज्वलाक्षमाला दीधरारुधिरसंस्थिता।।

५ कालरात्र्यादिशत्त्यौघवृतास्निग्धौदनप्रिया
महावीरेन्द्र वरदाराकिण्यंवास्वरूपिणी।।

ॐ ऐं ह्रीं श्रीं रां हंसश्शिवस्सोहं अनाहधाधिष्ठानदेवतायै राकिणीसहित रुद्ररूपिण्यै नमः।

रुद्ररूपिण्यम्बा श्री पादुकां पूजयामि नमः।। ॐ ऐं ह्रीं श्रीं रां रीं रमलवरयूं राकिण्यै नमः।। ॐ ऐं ह्रीं श्रीं कं खं गं घं ङ चं छं जं झं ञं टं ठं मां रक्ष रक्ष असृगात्मने नमः।। इतिमन्त्रेण हृदय स्थित द्वादशदलानाहत नलिनकर्णिकायां राकिणीं न्यस्य। तद्दलेषु, प्राग्वत् तदावरणशक्तिर्न्यसेत्।

## *शक्तिर्न्यसेत्*

ॐ ऐं ह्रीं श्रीं कं कालरात्र्यै नमः।
ॐ ऐं ह्रीं श्रीं खं खण्डितायै नमः।
ॐ ऐं ह्रीं श्रीं गं गायत्र्यै नमः।
ॐ ऐं ह्रीं श्रीं घं घण्टाकर्षिण्यै नमः।
ॐ ऐं ह्रीं श्रीं ङं ङार्णायै नमः।
ॐ ऐं ह्रीं श्रीं चं चण्डायै नमः।
ॐ ऐं ह्रीं श्रीं छं छायायै नमः।
ॐ ऐं ह्रीं श्रीं जं जयायै नमः।
ॐ ऐं ह्रीं श्रीं झं झङ्कारिण्यै नमः।
ॐ ऐं ह्रीं श्रीं ञं ञानरूपायै नमः।
ॐ ऐं ह्रीं श्रीं टं टङ्कहस्तायै नमः।
ॐ ऐं ह्रीं श्रीं ठं ठंङ्कारिण्यै नमः।

## *मणिपूरकचक्रम्। नाभौ।*

## *जलतत्वं। ५२ मयूखाः*

"उदके द्विसमधिकपंचाशत मयूखाः"

## *सौदामिन्यम्बा सहित मेघेश्वरः*

### ध्यानम्

१ दिक्पत्रे नाभिपद्मे त्रिवदनलसितां दंष्ट्रिणीं रक्तवर्णाम्
शत्तिर्दंभोलिदण्डावभयमपि भुजैर्धारयन्तीं महोग्राम्।
डामर्याद्यैः परीतां पशुजनभयदां मासधात्वेकनिष्ठाम
गौडान्नासक्तचितां सकलसुखकरीं लाकिनीं भावयामः।।

२ तटित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणच्चेन्द्रधनुषम्।
तव श्यामं मेवं कमपि मणिपूरकैशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम्।।




३ डाद्यैः फान्तर्गतैः प्रकल्पितदलपद्मेनिविष्ठं हरिं
मातडदभुतिमादिपूरूषमजं नारायणं चिन्मयम्।
आर्ताभोजगदारिशङ्खममलं पीताम्बरं कौस्तुभम्
श्रीवत्साङ्कितइन्द्रनीलसदृशं ध्यायेज्जगन्मोहनम्।।

४ मणिपूराब्जनिलयावदनत्रयसंभूता ।
वज्रादिकायुधोपेताडामर्यादिभिरावृता ।।

५ रक्तवर्णामांसनिष्ठागुडान्नप्रीतमानसा
समस्तभवसुखदा लाकिण्यंबा स्वरूपिणी।

ॐ ऐं ह्रीं श्रीं लां हंसस्सोहं मणिपुरकाधिष्ठानदेवतायै लाकिनीसहितवैष्णवस्वरूपिण्यै नमः।।

वैष्णवस्वरूपिण्यम्बा श्री पादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं लां लीं लमलकरयूं लाकिन्यै नमः।।

ॐ ऐं ह्रीं श्रीं डं ढं णं तं थं दं धं नं पं फं मां रक्ष रक्ष मांसात्मानं नमः। इतिनाभिगत दसदलमणिपूरक सरोजकणिका। यां लाकिनीं न्यसेत्।।

तद्दलेषु पूर्ववत् तत्तत्परिवारशक्तिः न्यसेत्।

ॐ ऐं ह्रीं श्रीं डं डामर्यै नमः।
ॐ ऐं ह्रीं श्रीं ढं ढङ्कारिण्यै नमः।
ॐ ऐं ह्रीं श्रीं णं णार्णायै नमः।
ॐ ऐं ह्रीं श्रीं तं तमस्यै नमः।
ॐ ऐं ह्रीं श्रीं थं स्थाण्व्यै नमः
ॐ ऐं ह्रीं श्रीं दं दाक्षायण्यै नमः।
ॐ ऐं ह्रीं श्रीं धं धात्र्यै नमः।
ॐ ऐं ह्रीं श्रीं नं नार्यै नमः।
ॐ ऐं ह्रीं श्रीं पं पार्वत्यै नमः।
ॐ ऐं ह्रीं श्रीं फं फद्कारिण्यै नमः।

## *स्वाधिष्टानचक्रं लिङ्गमूले*

## *''हुताशे द्वाषष्टिः मयूखाः''*

## *अग्नितत्वं। ६२ मयूखाः*

## *समयाम्बासमेत संवर्तेश्वरः*

**ध्यानम्**

१ स्वाधिष्ठानाख्यपद्मे रसदललसिते वेदवक्त्रां त्रिनेत्रां
हस्ताब्जैर्धारयन्तीं त्रिशिखगुणकपालाङ्कुशानात्तगर्वाम्।

मेदोधातुप्रतिष्ठामलिमदमुदितां बन्धिनीमुख्ययुक्तां
पीतां दध्योदनेष्टामभिमतफलदां काकिनीं
भावयामः।।




२ तव स्वाधिष्ठाने हुतवहमदिष्ठाय निरतं
तमीडे संवर्तं जननि महतीनां च समयाम्।
यदालोके लोकान्दहति महति क्रोधकलिते
दयार्द्रा या दृष्टिः शिशिरमुपचारं रचयति।।

३ बभमयरलसद्यैरक्षरैः क्लृप्तरुचिः
करमुपरिनिविष्टं पङ्कजे पद्मयोनिं।
अभयवरदहस्तं कुण्डिकामक्षमालाम्
दधतमनलवर्णां चिन्तयेत्विश्वयोनिम्।।

ॐ ऐं ह्रीं श्रीं स्वाधिष्ठानावुजगता
चतुर्वक्त्रमनोहरा
शूलाद्यायुतसम्पन्नापीतवर्णातिगर्विता।
मेदोनिष्ठामधुप्रीता बिन्दिन्यादिसमन्विता
दद्यन्नासक्तहृदयाकाकिनीरूपधारिणी।।
ॐ ऐं ह्रीं श्रीं कां सोहं स्वाधिष्ठानदेवतायै
काकिनीसहितब्रह्मस्वरूपिण्यै नमः।
ब्रह्मस्वरूपिण्यम्बा श्री पादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं कां कीं कमलवरयूं काकिन्यै नमः।

ॐ ऐं ह्रीं श्रीं बं भं मं यं रं लं मां रक्ष रक्ष मेदात्मने नमः।

इति गुह्यस्थानगत षड्दलस्काधिष्ठानसरसि।
कर्णिकायां काकिनी न्यस्य।
तद्दलेषुतदावरणशक्तिः प्रागवन्यसेत्।।

ॐ ऐं ह्रीं श्रीं बं बन्धिन्यै नमः। ॐ ऐं ह्रीं श्रीं यं यशस्विन्यै नमः।
ॐ ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः। ॐ ऐं ह्रीं श्रीं रं रक्तायै नमः।
ॐ ऐं ह्रीं श्रीं मं महामायायै नमः। ॐ ऐं ह्रीं श्रीं लं लंबोष्ठ्यै नमः।

## मूलाधारचक्रं। गुदोपरि।

"क्षितौ षट्पंचाशत् मयूखाः"

### पृथिवीतत्त्वं ५६ मयूखाः

### आनन्दभैरवींसमेत आनन्दभैरवः

ध्यानम्

१ मूलाधारस्थपद्मे श्रुतिदललसिते पञ्चवक्त्रां त्रिनेत्रां
धूम्राभामस्थिसंस्थां सृणिमपि कमलं पुस्तकं ज्ञानमुद्राम् ।
बिभ्रणां बाहुदण्डैः सुललितवरदापूर्वशक्त्यावृतां तां
मुद्रात्रासक्तचित्तां मधुमदमुदितां साकिनीं भावयामः ।।

२ तवाधारे मूले सह समयया लास्यपरया
नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ।।

३ वशषसदलयुक्तैसंयुगाधारपद्मे
नलिनमरुणगात्रं वारणास्यं त्रिनेत्र
अभयवरदहस्तंच चारुपाशाङ्कुशाच
करकमलसमेतं चिन्तयेतिवघ्नराजम् ।।




### कुण्डलिनी ध्यानम्

ध्यायेत्कुण्डलिनीं सूक्ष्ममूलाधारवासिनीं
प्रसुप्तभुजगाकार विद्युत्पटलसन्निभां ।
तामिष्टदेवतारूपां सार्द्धत्रिवलान्वितां
कोटिसौदामिनींभासां स्वयंभूलिङ्गवेष्टिनीम्।।

५ मूलाधारांबुजारूढापञ्चवक्त्रास्तिसंस्थिता ।
अंकुशादिप्रहरणावरदादि निषेविता ।।

ॐ ऐं ह्रीं श्रीं मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी।
ॐ ऐं ह्रीं श्रीं सां हंसः मूलाधिष्ठानदेवता । सहितगणनाथस्वरूपिण्यै नमः ।।
ॐ ऐं ह्रीं श्रीं श्रीगणनाथस्वरूपिण्यम्बा श्री पादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं सां सीं समलरयूं साकिन्यै नमः ।
ॐ ऐं ह्रीं श्रीं वं शं षं सं मां रक्ष रक्ष अस्थ्यात्मने नमः

इतिपायूपस्थमध्यगतचतुर्दलमूलाधर कमलकर्णिकयां साकिनीं न्यस्य तद्दलेषु पूर्ववदावरणशक्तिं न्यसेत्।।

ॐ ऐं ह्रीं श्रीं वं नारदायै नमः। ॐ ऐं ह्रीं श्रीं षं षण्डायै नमः।
ॐ ऐं ह्रीं श्रीं शं श्रियै नमः। ॐ ऐं ह्रीं श्रीं सं सरस्वत्यै नमः।

## *आज्ञाचक्रम्। भ्रुवोर्मध्ये*

## *मनस्तत्व ६४ मयूखाः*

''मनसि च चतुःषटिः मयूखाः''

## *चित्परांबाय विनाभूतशम्भुनाथः*

### ध्यानम्

१ भ्रूमध्ये बिन्दुपद्मे दलयुगकलिते शुक्लवर्णां कराब्जैः
बिभ्राणां ज्ञानमुद्रां डमरुकममलामक्षमालां कपालाम् ।।
षड्वक्त्रां मज्जसंस्थां त्रिनयनलसितां हंसवत्यादियुक्तां
हारिद्रान्नैकसक्तां सकलसुखकरीं हाकिनीं भावयामः ।।



२ तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता।
यमाराध्यन् भक्त्या रविशशिशुचीनामविषये निरालोकेऽलोके निवसति हि भालोकभुवने।।
३ मनस्त्वं व्योमत्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम्।
त्वमेव स्वात्मानं परिणमितं विश्वचवपुषा चिदानन्दाकारं शिवयुवति भावेन बिभृषे।।
४ हक्षाभ्यां परिक्लृप्तपत्रकमले दिव्ये जगत्कारणे स्वच्छात्मानमनेकदेहनिलयं स्वछन्दतरसर्वदा।
तत्तत्योगतयाश्वदेशिकतयाभावैकसचिन्मयं प्रत्यक्षाक्षरविग्रहं परमसुपदं वन्दे गुरुंशाश्वतम्।।
५ आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना।
मज्ञासंस्थाहंसवती मुख्यशक्तिसमन्विता।।
६ हरिद्रान्नैकरसिका हाकिनीरूपधारिणीं
हां हंसश्शिवस्सोहं सोहं हंसश्शिस्स्वयम्
आज्ञाधिष्ठानदेवतायै हाकिनीसहितः
परमात्मस्वरूपिण्यै नमः।
परमात्मस्वरूपिण्यम्बा श्रीपादुकां
पूजयामि नमः।।
ॐ ऐं ह्रीं श्रीं हां हीं हमलवरयूं
हाकिन्यै नमः।
ॐ ऐं ह्रीं श्रीं हं क्षं मां रक्ष रक्ष
मज्जात्मने नमः।
इतिभ्रूमध्यगतद्विदलाज्ञाकमलकर्णिकायां
हाकिनीन्यस्य।। तद्दक्षवामदलयोः क्रमेण
ॐ ऐं ह्रीं श्रीं हं हंसवत्यै नमः।
ॐ ऐं ह्रीं श्रीं क्षं क्षमावत्यै नमः।



## सहस्त्रारचक्रम्

### श्रीराजराजेश्वर्यै नमः

ध्यानम्

१ मुण्डव्योमस्थपद्मे दशशतदलके कर्णिकाचन्द्रसंस्थां
रेतोनिष्ठां समस्तायुधकलितकरां सर्वतोवक्त्रपद्माम् ।

आदिक्षान्तार्णशक्तिप्रकटपरिवृतां सर्ववर्णां भवानीं

सर्वान्नासक्तचित्तां परशिवरसिकां याकिनीं भावयामः ।।

२ सहस्त्रदलपङ्कजे सकलशीतरशीमप्रभं वराभयकराम्बुजं विमलचित्तपुष्पाम्बरम् ।

प्रसन्नवदनेक्षणंसकल देवतारूपिणं स्मरेच्छिरसिंहसगं तदभिधानपूर्वंगुरुम्।।

३ कुङ्कुमपङ्कसमाभांपङ्कजेक्षुचापकुसुमशरां

पङ्कजमध्यनिषण्णां पङ्केरुहलोचनां परामहं वन्दे।

सूर्येन्दुवह्निमयभास्वरपीटगेहा स्वेच्छाग्रहीतसृणिपाशशरेक्षुचापम्।

बालेन्दुमौलिमरूणाभरणांत्रिनेत्रांम् नित्यं नमामि महतीमहनीयमूर्तिं ।।

सहस्त्रदलपद्मस्थासर्ववर्णोभशोभिता ।

सर्वायुधधराशुक्लसंस्था सर्वतोमुखी।।

सर्वोदनप्रीतचित्तायाकिन्यंबास्वरूपिणी।

ॐ ऐं ह्रीं श्रीं यां यीं यमल वरयूं याकिन्यै नमः

ॐ ऐं ह्रीं श्रीं अं आं + क्षं मां रक्ष रक्ष शुक्रात्मने नमः।।




| | |
|---|---|
| १. चतुर्दलपद्म | १. मूलाधार चक्र |
| २. षड्दलपद्म | २. स्वाधिष्टन चक्र |
| ३. दशदलपद्म | ३. मणिपूरक चक्र |
| ४. द्वाशदल पद्म | ४. अनाहत चक्र |
| ५. षोडशदलपद्म | ५. विशुद्धि चक्र |
| ६. द्विदलपद्म | ६. आज्ञा चक्र |
| ७. सहस्त्रदल पद्म | ७. शून्य चक्र |

इतिब्रहरन्ध्रगत सहस्रदलसरसिज
कार्णिकायां याकिनीन्यस्य तद्दळेषु प्रतिविशतिदलम् ।।
तदावरणशक्तिः। अमृताद्याः क्षमावन्त्यन्ताः पूर्वोक्ताः।
प्राग्वत् न्यसेत्। प्रतिनाम विंशतिवारं पठेत्।

**काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगंगा**
**भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।**
**विश्वेशोऽयं तुरीयः सकलजनमनः साक्षिभूतोऽन्तरात्मा**
**देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमस्ति ।।**

## *राशिन्यासः*

**रक्तश्वेतहरित्पाण्डुचित्रकृष्णपिशङ्गकान् ।**
**कपिशबभ्रुकिर्म्मीरकृष्णधूम्रान् क्रमात् स्मरेत् ।।**

राशीनिति शेषः इति ध्यात्वा—

**ॐ ऐं ह्रीं श्रीं अं आं इं ईं मेषाय नमः।** दक्षपादे।।
**ॐ ऐं ह्रीं श्रीं उं ऊं वृषभाय नमः।** लिङ्गदक्षभागे।।
**ॐ ऐं ह्रीं श्रीं ऋं ॠं लृं लॄं मिथुनाय नमः।** दक्षकुक्षौ।।
**ॐ ऐं ह्रीं श्रीं एं ऐं कर्काय नमः।** हृदयदक्षभागे।।
**ॐ ऐं ह्रीं श्रीं ओं औं सिंहाय नमः।** दक्षबाहुमूले।।
**ॐ ऐं ह्रीं श्रीं अं अः शं षं सं हं ळं कन्यायै नमः।** दक्षशिरोभागे।।
**ॐ ऐं ह्रीं श्रीं कं खं गं घं ङं तुलायै नमः।** वामशिरोभागे।।
**ॐ ऐं ह्रीं श्रीं चं छं जं झं ञं वृश्चिकाय नमः।** वामबाहुमूले।।
**ॐ ऐं ह्रीं श्रीं टं ठं डं ढं णं धनुषे नमः।** हृदयवामभागे।।
**ॐ ऐं ह्रीं श्रीं तं थं दं धं नं मकराय नमः।** वामकुक्षौ।
**ॐ ऐं ह्रीं श्रीं पं फं बं भं मं कुम्भाय नमः।** लिङ्गवामभागे।।
**ॐ ऐं ह्रीं श्रीं यं रं लं वं लं मीनाय नमः।** वामपादे।।

## पीठन्यासः

**सितासितारुणश्यामहरित्पीतान्यनुक्रमात्।**
**पुनः क्रमेण देवेशि पञ्चाशत्पीठसञ्चयः।।**

इति भावयित्वा, मातृकाभिः समं पूर्वोक्तेषु तासां स्थानेषु पीठानि क्रमेण विन्यसेत्। यथा—

**ॐ ऐं ह्रीं श्रीं अं कामरूपाय नमः।** शिरसि।।
**ॐ ऐं ह्रीं श्रीं आं वाराणस्यै नमः।** मुखवृत्ते।।
**ॐ ऐं ह्रीं श्रीं इं नेपालाय नमः।** दक्षनेत्रे।।
**ॐ ऐं ह्रीं श्रीं ईं पौण्ड्रवर्धनाय नमः।** वामनेत्रे।।
**ॐ ऐं ह्रीं श्रीं उं पुरस्थिरकाश्मीराय नमः।** दक्षकर्णे।।
**ॐ ऐं ह्रीं श्रीं ऊं कान्यकुब्जाय नमः।** वामकर्णे।।
**ॐ ऐं ह्रीं श्रीं ऋं पूर्णशैलाय नमः।** दक्षनासापुटे।।
**ॐ ऐं ह्रीं श्रीं ॠं अर्बुदाचलाय नमः।** वामनासापुटे।।
**ॐ ऐं ह्रीं श्रीं लृं आम्रातकेश्वराय नमः।** दक्षगण्डे।।
**ॐ ऐं ह्रीं श्रीं लॄं एकाम्राय नमः।** वामगण्डे।।
**ॐ ऐं ह्रीं श्रीं एं त्रिस्रोतसे नमः।** ऊर्ध्वोष्ठे।।
**ॐ ऐं ह्रीं श्रीं ऐं कामकोटये नमः।** अधरोष्ठे।।
**ॐ ऐं ह्रीं श्रीं ओं कैलासाय नमः।** ऊर्ध्वदन्तपङ्क्तौ।।
**ॐ ऐं ह्रीं श्रीं औं भृगुनगराय नमः।** अधोदन्तपङ्क्तौ।।
**ॐ ऐं ह्रीं श्रीं अं केदाराय नमः।** जिह्वाग्रे।।
**ॐ ऐं ह्रीं श्रीं अः चन्द्रपुष्करिण्यै नमः।** कण्ठे।।
**ॐ ऐं ह्रीं श्रीं कं श्रीपुराय नमः।** दक्षबाहुमूले।।
**ॐ ऐं ह्रीं श्रीं खं ओङ्काराय नमः।** दक्षकूर्परे।।
**ॐ ऐं ह्रीं श्रीं गं जालन्धराय नमः।** दक्षमणिबन्धे।।
**ॐ ऐं ह्रीं श्रीं घं मालवाय नमः।** दक्षकराङ्गुलिमूले।।
**ॐ ऐं ह्रीं श्रीं ङं कुलान्तकाय नमः।** दक्षकराङ्गुल्यग्रे।।
**ॐ ऐं ह्रीं श्रीं चं देवीकोटाय नमः।** वामबाहुमूले।।
**ॐ ऐं ह्रीं श्रीं छं गोकर्णाय नमः।** वामकूर्परे।।

ॐ ऐं ह्रीं श्रीं जं मारुतेश्वराय नमः। वाममणिबन्धे।।
ॐ ऐं ह्रीं श्रीं झं अट्टहासाय नमः। वामकराङ्गुलिमूले।।
ॐ ऐं ह्रीं श्रीं ञं विरजायै नमः। वामकराङ्गुल्यग्रे।।
ॐ ऐं ह्रीं श्रीं टं राजगेहाय नमः। दक्षोरुमूले।।
ॐ ऐं ह्रीं श्रीं ठं महापथाय नमः। दक्षजानुनि।।
ॐ ऐं ह्रीं श्रीं डं कोलापुराय नमः। दक्षगुल्फे।।
ॐ ऐं ह्रीं श्रीं ढं एलपुराय नमः। दक्षपादाङ्गुलिमूले।।
ॐ ऐं ह्रीं श्रीं णं कालेश्वराय नमः। दक्षपादाङ्गुल्यग्रे।।
ॐ ऐं ह्रीं श्रीं तं जयंतिकायै नमः। वामोरुमूले।।
ॐ ऐं ह्रीं श्रीं थं उज्जयिन्यै नमः। वामजानुनि।।
ॐ ऐं ह्रीं श्रीं दं चित्रायै नमः। वामगुल्फे।।
ॐ ऐं ह्रीं श्रीं धं क्षीरिकायै नमः। वामपादाङ्गुलिमूले।।
ॐ ऐं ह्रीं श्रीं नं हस्तिनापुराय नमः। वामपादाङ्गुल्यग्रे।।
ॐ ऐं ह्रीं श्रीं पं उड्डीशाय नमः। दक्षपार्श्वे।।
ॐ ऐं ह्रीं श्रीं फं प्रयागाय नमः। वामपार्श्वे।।
ॐ ऐं ह्रीं श्रीं बं षष्टीशाय नमः। पृष्ठे।।
ॐ ऐं ह्रीं श्रीं भं मायापुर्यै नमः। नाभौ।।
ॐ ऐं ह्रीं श्रीं मं जलेशाय नमः। जठरे।।
ॐ ऐं ह्रीं श्रीं यं मलयाय नमः। हृदये।।
ॐ ऐं ह्रीं श्रीं रं श्रीशैलाय नमः। दक्षस्कन्धे।।
ॐ ऐं ह्रीं श्रीं लं मेरवे नमः। गलपृष्ठे।।
ॐ ऐं ह्रीं श्रीं वं गिरिवराय नमः। वामस्कन्धे।।
ॐ ऐं ह्रीं श्रीं शं महेन्द्रा नमः। हृदयादिदक्षकरङ्गुल्यन्तम्।।
ॐ ऐं ह्रीं श्रीं षं वामनाय नमः। हृदयादिवामकरङ्गुल्यन्तम्।।
ॐ ऐं ह्रीं श्रीं सं हिरण्यपुराय नमः। हृदयादिदक्षपादाङ्गुल्यन्तम्।।
ॐ ऐं ह्रीं श्रीं हं महालक्ष्मीपुराय नमः। हृदयादिवामपादाङ्गुल्यन्तम्।
ॐ ऐं ह्रीं श्रीं ळं ओड्याणाय नमः। हृदयादिगुह्यान्तम्।।
ॐ ऐं ह्रीं श्रीं क्षं छायाछत्राय नमः। हृदयादिमूर्धान्तम्।।

इति षडवयवकः षोढान्यासः समाप्तः

ॐ श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं। सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्वष्टष्चतुष्कषष्ठिनवकं वीरावलीपञ्चकं। श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।
गुरुर्ब्रह्मा गुरुर्विष्णु र्गुरुर्देवो महेश्वरः। गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ।।
वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् । रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ।।
सेवे सिन्दूरसंदोहसुन्दरस्वाङ्गभासुराम् । करुणापूरपीयूषकटाक्षां कुलनायिकाम् ।।
द्विनेत्रं द्विभुजं शान्तं गुरुं पद्मासनस्थितम् । योगपीठे समासीनं नमामि शिरसि स्थितम्।।
नमामि सद्गुरुं शान्तं प्रत्यक्षशिवरूपिणम् । शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ।।
यां नित्या परया शक्तिर्जगच्चैतन्यरूपिणी । तां नमामि महादेवीं पञ्चमीं मातृरूपिणीम्।।

नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् ।।
श्रीशंकराचार्यमथास्म पद्मपादं च हस्तामलकं च शिष्यम् ।
तं तोटकं वार्तिककारमन्यानस्मद्गुरून् संततमानतोऽस्मि ।।

*यागमन्दिरप्रवेशः*

ॐ ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः
(द्वारस्य दक्षशाखायां)

ॐ ऐं ह्रीं श्रीं भं भैरवाय नमः।
(द्वारस्य वामशाखायां)

ॐ ऐं ह्रीं श्रीं लं लम्बोदराय नमः।
(द्वारस्य ऊर्ध्वशाखायां)

इति द्वारदेवताः संपूज्य।



## तत्त्वाचमनम्

ॐ ऐं ह्रीं श्रीं ऐं कएईलह्रीं आत्मतत्त्वं शोधयामि स्वाहा।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं हसकलह्रीं विद्यातत्त्वं शोधयामि स्वाहा ।
ॐ ऐं ह्रीं श्रीं ऐं सहलह्रीं शिवतत्त्वं शोधयामि स्वाहा ।
ॐ ऐं ह्रीं श्रीं ऐं क ए ई ल ह्रीं क्लीं हसकहलह्री सौः सहलह्रीं सर्व तत्त्वं शोधयामि स्वाहा ।

**अमृतार्णवमध्योद्यत् स्वर्णद्वीपे मनोरमे । कल्पवृक्षवनान्तःस्थे नवमाणिक्यमंडपे ।।१।।**
**नवरत्नमयश्रीमत् सिंहासनगताम्बुजे । त्रिकोणान्तःसमासीनं चंद्रसूर्यायुतप्रभम् ।।२।।**
**अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् । कोटिकंदर्पलावण्यं सदा षोडशवार्षिकम् ।।३।।**
**मंदस्मितमुखांभोजं त्रिनेत्रं चंद्रशेखरम् । दिव्याम्बरस्त्रगालेपं दिव्याभरणभूषितम् ।।४।।**
**पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः विद्यासंसदि बिभ्राणं सदानंदमुखेक्षणम् ।।५।।**
**महाषोढोदिताशेषदेवतागणसेवितम्। एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम् ।।६।।**
**पुरुषं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत्। अथवा निष्कलं ध्यायेत् सच्चिदानंदलक्षणम् ।।७।।**
**सर्वतेजोमयं ध्यायेत् सचराचरविग्रहम् ।।**

इति स्वाभेदेन ध्यात्वा योनिलिंगसुरभिकपालज्ञानत्रिशूलपुस्तकवनमालानभोमहामुद्रा इति दशमुद्राविरच्य शिरसि श्रीगुरुं ध्यायेत्। यथा।

**सहस्रदलपंकजे सकलशीतरश्मिप्रभं वराभयकराम्बुजं विमलगंधपुष्पांवरम्।**
**प्रसन्नवदनेक्षणं सकलदेवतारूपिणं स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम्।।**

इति श्रीगुरुं ध्यात्वा। तद्विद्यया तत्पादुकां शिरसि विन्यस्य प्रणम्य स्वगुरुकृतं स्वनाम स्वमूलाधारे स्मृत्वा शिवरूपं स्वात्मानं ध्यायेत्।

## घण्टपूजा

**हे घण्टे सुस्वरे पीठे घण्टाध्वनिविभूषिते । वादयन्ति परानन्दे घण्टादेवं प्रपूजयेत् ।।**
**आगमार्थं च देवानां गमनार्थं तु रक्षसाम् । कुर्यात् घण्टारवं तत्र देवताह्वानलाञ्छनम् ।।**

इति घण्टानादं कृत्वा।

## सङ्कल्पः

**शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये।।**

मूलेन प्राणानायम्य। देशकालौ संकीर्त्य—

**मम श्रीललितामहात्रिपुरसुन्दरीप्रीत्यर्थं यथासंभवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि।**

## आत्मपूजा

आत्मानं अलंकृत्य ताम्बूलेन सुरभितवदनः सन् प्रमुदितचित्तः **शिवोऽहं** इति भावयेत्

आत्मानं गन्धपुष्पाक्षत्तैरलङ्कृत्य —

**आत्मने नमः। अन्तरात्मने नमः। जीवात्मने नमः। ज्ञानात्मने नमः। परमात्मने नमः।** पुष्पं शिरसि धारयेत्।

**देहो देवालयप्रोक्तो जीवो देवस्सनातनः। त्यजेद ज्ञाननिर्माल्यं सोहं भावेन पूजयेत्।**

एवमेव स्वरूपिणं ध्यात्वा।

**आराधयामि मणिसन्निभमात्मलिङ्गम् मायापुरी हृदयपङ्कजसन्निविष्टम् ।**
**श्रद्धाविनीत विमलचित्त जलाभिषेकैः नित्यं समाधिकुसुमैर्न पुनर्भवाय ।।**

**रत्नैः कल्पित-मासनं हिमजलैः स्नानं च दिव्यांवरं नानारत्न-विभूषितं मृगमदामोदांकितं चन्दनम्।**
**जाती-चंपक-बिल्वपत्र-रचितं पुष्पं च धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम्।।१।।**
**सौवर्णे नवरत्नखण्डरचिते पात्रे घृतं पायसं भक्ष्यं पंचविधं पयोदधियुतं रंभाफलं पानकम्।**
**शाकानामयुतं जलं रुचिकरं कर्पूरखण्डोज्ज्वलं तांबूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु।।२।।**
**छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं वीणा-भेरि-मृदंग-कोहलकला-गीतं च नृत्यं तथा।**
**साष्टांगं प्रणतिः स्तुति-र्बहुविधा ह्येतत् समस्तं मया संकल्पेन समर्पितं तव विभो पूजां गृहाणे प्रभो।।३।।**
**आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः।**
**संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम्।।४।।**
**करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वापराधम्।**
**विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शंभो।।५।।**

## आसनपूजा

आसनमास्तीर्य दक्षिणहस्ते जलमादाय **सौः** इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण आसनं प्रोक्षयेत्।

**अस्य श्रीआसनमहामन्त्रस्य—पृथिव्या मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसने विनियोगः।**

**पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम्।।**

**योगासनाय नमः, वीरासनाय नमः, शरासनाय नमः, ॐ ऐं ह्रीं श्रीं ॐ ह्रीं आधारशक्तिकमलासनाय नमः।**

इति पुष्पाक्षतैः आसनमभ्यर्च्य आसने उपविशेत्।

**ॐ ऐं ह्रीं श्रीं रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः।**

इति भूमौ पुष्पाञ्जलिं विकिरेत्।

## *दिग्बन्धनम् देहरक्षणम् च*

**ॐ ऐन्द्रीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ आग्नेयीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ याम्यीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ नैर्ऋतीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ वारुणीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ वायवीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ कौबेरीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ ऐशानीं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ ऊर्ध्वं दिशा सबन्धेन नमश्चक्राय स्वाहा।**
**ॐ अधरे दिशा सबन्धेन नमश्चक्राय स्वाहा।**

## *देहरक्षा*

**ॐ ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष—**

इति देहे त्रिः व्यापकं कृत्वा।

**गुं गुरुभ्यो नमः।** (दक्षबाहौ)
**गं गणपतये नमः।** (वामबाहौ)
**दुं दुर्गायै नमः।** (दक्षोरौ)
**वं वटुकाय नमः।** (वामोरौ)
**यां योगिनीभ्यो नमः।** (पादयोः)

**क्षं क्षेत्रपालाय नमः।** (नाभौ)

**पं परमात्मने नमः।** (हृदये)

**ॐ ऐं ह्रीं श्रीं ॐ नमो भगवति तिरस्करिणि महामाये महानिद्रे सकलपशुजनमनश्चक्षुःश्रोत्रतिरस्करणं कुरु कुरु स्वाहा।**

**ॐ ऐं ह्रीं श्रीं हसन्ति हसितालापे मातङ्गिपरिचारिके मम भयविघ्नापदां नाशं कुरु कुरु ठः ठः ठः हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र हुँ फट् स्वाहा** —इति परितो वह्निप्राकारं विभाव्य **भूर्भुवस्वरोम्** इति दिग्बन्धः।।

**परमामृतवर्षेण प्लावयन्तं चराचरम् । संचिन्त्य परमद्वैतभावनाऽमृतसेवया ।।**
**मोदमानो विस्मृतान्यविकल्पविभवभ्रमः । चिदम्बुधिमहाभङ्गच्छिन्नसंकोचसङ्कटः ।।**
**समुल्लसन्महानादलोकनोऽन्तर्मुखायनः । मन्त्रमय्या मनोवृत्त्या परमाद्वैतमीहते ।।**
**सपर्या सर्वभावेषु सा परा परिकीर्तिता । अपरा तु बहिर्वक्ष्यमाणचक्रार्चनाविधिः ।।**
**परापरास्य बाह्यस्य चिद्व्योम्नि विलयः स्मृता। इत्थं त्रिधा समुद्दिष्टा बाह्याभ्यन्तरभेदतः ।।**

एवं भावयित्वा

**ॐ ऐं ह्रीं श्रीं समस्तप्रकट-गुप्त-गुप्ततर-संप्रदाय-कुलोत्तीर्ण-निगर्भ-रहस्यातिरहस्य-परापरातिरहस्य-योगिनीदेवताभ्यो नमः।**

इति मूर्ध्नि बद्धाञ्जलिः।

**ॐ ऐं ह्रीं श्रीं ऐं ह्रः अस्त्राय फट्**—इति अस्त्रमन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादिकनिष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात्।

**ॐ ऐं ह्रीं श्रीं श्रीगुरो दक्षिणामूर्ते भक्तानुग्रहकारक। अनुज्ञां देहि भगवन् श्रीचक्रयजनाय मे।।**
**ॐ ऐं ह्रीं श्रीं अतिक्रूर महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि।।**

स्वगुरु श्री परमगुरु श्री परमेष्ठिगुरु आदि तीनों चक्र के दाहिने में रहकर उनके चरणों को हमारे बायें कन्धे पर रखे हुए हैं ऐसी मानसिक भावना करते हुए दोनों जगह निम्नलिखित पूजा करे

## *श्रीस्वगुरु-श्रीपरमगुरु-श्रीपरमेष्ठिगुरु पूजनम्*

**स्वगुरु परमगुरु परमेष्ठिगुरवे नमः। ध्यायामि। आवाहयामि। आसनं समर्पयामि। पाद्यं कल्पयामि। अर्घ्यं कल्पयामि। आचमनीयं कल्पयामि। मधुपर्कं कल्पयामि। स्नानं कल्पयामि।**

**यज्ञोपवीतं कल्पयामि। गन्धान् कल्पयामि। श्रीस्वगुरवे नमः। श्रीपरमगुरवे नमः। श्रीपरमेष्ठिगुरवे नमः। नानाविधपरिमलपत्रपुष्पाणि समर्पयामि। गुरवे नमः धूपमाघ्रापयामि। नैवेद्यं समर्पयामि। मध्ये मध्ये पानीयं। उत्तरापोशनं हस्तप्रक्षालनं। आचमनीयं तांबूलं च समर्पयामि। कर्पूरनीराजनं दर्शयामि। गुरुभ्यो नमः मन्त्रपुष्पं समर्पयामि। प्रदक्षिणनमस्कारन् समर्पयामि। समस्तराजोपचारदेवोपचारान् समर्पयामि। अनया पूजया भगवान्सर्वदेवात्मकः स्वगुरु परमगुरु परमेष्ठिगुरु सुप्रीतो सुप्रसन्नो वरदो भवत।**

ऐसे ही श्रीमहागणपति की भी पूजा करे

**अनया पूजया भगवान्सर्वदेवात्मकः श्रीमहागणपतिः सुप्रीतो सुप्रसन्नो वरदो भवतु।।**

## *लघुप्राणप्रतिष्ठा*

**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं हं ॐ हंसः सोहं, सोहं हंसः शिवः, श्रीचक्रस्य प्राणा इह प्राणाः।**

**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों श्रीचक्रस्य जीव इह स्थितः। सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणा इहैवागत्य अस्मिन् चक्रे सुखं चिरं तिष्ठन्तु स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ॐ असुनीतेपुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्। ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृळया नस्स्वस्ति।** (प्राणप्रतिष्ठा काले यत्किंचित् गोक्षीरम् नैवेद्यं कुर्यात्)

## *श्रीचिन्तामणि गृह राजम् विमर्श तालिका*




**श्रीनगरपद्माटवी वाटिकाएँ एवं प्राकाराः चित्रनिरूपणम्**

**A भागः श्री चिन्तामणी गृहके मध्यभाग**

**१. चिदग्निकुण्डः**

**२. श्री ललिता परमेश्वरी का रथ**

**३. श्री श्यामला का रथ**

**४. श्री वाराही का रथ**

**५. श्री श्यामला का गृह**

**६. श्री वाराही का गृह**

७. श्री ब्रह्मा का गृह
८. श्री विष्णु का गृह
९. श्री रूद्र का गृह
१०. श्री महेश्वर का गृह
११. श्री सदाशिव का गृह
पूजा, पंच पात्र विधानम्

१२. वर्धनीकलशस्थापनम्
१३. सामान्यार्ध्य (शङ्खं) स्थापनम्
१४. विशेषार्ध्य कलशस्थापनम्
१५. श्री गुरू पात्रम्
१६. साधक आत्म पात्रम्
१७. श्री चिन्तामणि गृह राजम् (श्रीचक्रम्)

बीच का तालाब श्रीमहापद्माटवी

I. इन्द्र दिग— पूर्वाम्नाय देवताएँ

II. यम दिग— दक्षिणाम्नाय देवताएँ

III. वरुण दिग— पश्चिमाम्नाय देवताएँ

IV. कुबेर दिग— उत्तराम्नाय देवताएँ

## B भागः

### श्री चिन्तामणि गृह के निचले भाग
### (पूर्व फाठक से प्रारम्भ)

१. लोहे का किला (नानावृक्ष महोदनाः)
२. इस्पात का किला (कल्पवाटिका)
३. ताम्बे का किला (चन्दनवाटिका)
४. रांगे का किला (हरिचन्द्र वाटिका)
५. पीतल का किला (मन्दार वाटिका)
६. पञ्चधातुओं का किला (पारिजात वाटिका)
७. चाँदी का किला (कदम्ब वाटिका)
८, ९. पुष्परागरत्न प्राकारः
१०. पद्मरागरत्न प्राकारः
११. गोमेदकरत्न प्राकारः

१२. वज्ररत्न प्राकारः
१३. वैडूर्यरत्न प्राकारः
१४. इन्द्रनीलरत्न प्राकारः
१५. मुक्तारत्न प्राकारः
१६. मरकत रत्न प्राकारः
१७. विद्रुम रत्न प्राकारः
१८. माणिक्य रत्न प्राकारः
१९. नाना रत्न प्राकारः
२०. मनोमय प्राकारः
२१. बुद्धिमय प्राकारः

२२. अहंकार मय प्राकारः
२३. सूर्य प्राकारः
२४. चन्द्र प्राकारः
२५. श्रृंगार प्राकारः
२६. लोहे का किला (लगाव)
२७. महाकाल महाकाली (वासस्थलः)
२८. रांझी का किला (पुष्प वाटिका)
२९. वसन्त ऋतुः
३०. ग्रीष्म ऋतुः
३१. वर्षा ऋतुः
३२. शरद् ऋतुः
३३. हेमन्त ऋतुः
३४. शिशिर ऋतुः
३५. सिद्धगणाः
३६. चारणगणाः
३७. वटुकगणाः
३८. रंभा मेनका आदि अप्सराएँ
३९. अनन्त आदि नाग देवता
४०. अग्निदेवता / निर्ऋति देवता
४१. वायु देवता / ईशान देवता
४२. वाराही
४३. चतुर्मुख ब्रह्मा
४४. विष्णुः
४५. रुद्रः
४६. अमृतवापिका (तारादेवी)
४७. आनन्दवापिका (वारुणी देवी)
४८. सिराश वापिका (कुरुकुल्लादेवी)
४९. मार्त्तण्डभैरवः
५०. चन्द्रः
५१. मन्मथः

## *मन्दिरपूजा*

(कुसुमाक्षतैरभ्यर्चयेत्)

ओं ऐं ह्रीं श्रीं अमृताम्भोनिधये नमः
ॐ ऐं ह्रीं श्रीं रत्नद्वीपाय नमः
ॐ ऐं ह्रीं श्रीं नानावृक्षमहोद्यानाय नमः
ॐ ऐं ह्रीं श्रीं कल्पवाटिकायै नमः
ॐ ऐं ह्रीं श्रीं संतानवाटिकायै नमः
ॐ ऐं ह्रीं श्रीं हरिचन्दनवाटिकायै नमः
ॐ ऐं ह्रीं श्रीं मन्दारवाटिकायै नमः
ॐ ऐं ह्रीं श्रीं पारिजातवाटिकायै नमः
ॐ ऐं ह्रीं श्रीं कदम्बवाटिकायै नमः
ॐ ऐं ह्रीं श्रीं पुष्परागरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं पद्मरागरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं गोमेदकरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं वज्ररत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं वैडूर्यरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं इन्द्रनीलरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं मुक्तारत्नप्राकाराय नमः

ॐ ऐं ह्रीं श्रीं मरकतरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं विद्रुमरत्नप्राकाराय नमः
ॐ ऐं ह्रीं श्रीं माणिक्यमण्डपाय नमः
ॐ ऐं ह्रीं श्रीं सहस्रस्तम्भमण्डपाय नमः
ॐ ऐं ह्रीं श्रीं अमृतवापिकायै नमः
ॐ ऐं ह्रीं श्रीं आनन्दवापिकायै नमः
ॐ ऐं ह्रीं श्रीं विमर्शवापिकायै नमः
ॐ ऐं ह्रीं श्रीं बालातपोद्गाराय नमः
ॐ ऐं ह्रीं श्रीं चन्द्रिकोद्गाराय नमः
ॐ ऐं ह्रीं श्रीं महाशृङ्गारपरिघायै नमः
ॐ ऐं ह्रीं श्रीं महापद्माटव्यै नमः
ॐ ऐं ह्रीं श्रीं चिन्तामणिमयगृहराजाय नमः
ॐ ऐं ह्रीं श्रीं पूर्वाम्नायमयपूर्वद्वाराय नमः
ॐ ऐं ह्रीं श्रीं दक्षिणाम्नायमयदक्षिणद्वाराय नमः
ॐ ऐं ह्रीं श्रीं पश्चिमाम्नायमयपश्चिमद्वाराय नमः
ॐ ऐं ह्रीं श्रीं उत्तराम्नायमयोत्तरद्वाराय नमः
ॐ ऐं ह्रीं श्रीं रत्नप्रदीपवलयाय नमः
ॐ ऐं ह्रीं श्रीं मणिमयमहासिंहासनाय नमः
ॐ ऐं ह्रीं श्रीं ब्रह्ममयैकमञ्चपादाय नमः
ॐ ऐं ह्रीं श्रीं विष्णुमयैकमञ्चपादाय नमः
ॐ ऐं ह्रीं श्रीं रुद्रमयैकमञ्चपादाय नमः
ॐ ऐं ह्रीं श्रीं ईश्वरमयैकमञ्चपादाय नमः
ॐ ऐं ह्रीं श्रीं सदाशिवमयैकमञ्चफलकाय नमः
ॐ ऐं ह्रीं श्रीं हंसतूलिकातल्पाय नमः
ॐ ऐं ह्रीं श्रीं हंसतूलिकामहोपधानाय नमः
ॐ ऐं ह्रीं श्रीं कौसुम्भास्तरणाय नमः
ॐ ऐं ह्रीं श्रीं महावितानकाय नमः
ॐ ऐं ह्रीं श्रीं महामायायवनिकायै नमः

इति चतुश्चत्वारिंशन्मन्दिरमन्त्रैः तत्तदखिलं भावयन्कुसुमाक्षतैरभ्यर्चयेत्।

## दीपपूजा

स्वदक्षभागे गन्धपुष्पाक्षतादीन्निधाय दीपानभितः प्रज्वाल्य।

**घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः।**
**सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः।।**

(दक्षवामभागौ देव्या एव)

ॐ ऐं ह्रीं श्रीं **दीपदेवि महादेवि शुभं भवतु मे सदा। यावत्पूजासमाप्तिः स्यात्तावत्प्रज्वल सुस्थिरा।।**

इति पुष्पाञ्जलिं दद्यात्।

मूलेन चक्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्रवामदक्षकोणेषु पुष्पाञ्जलीन्दद्यात्।




## द्वादश - ज्योतिर्लिंग

| क्र. | नाम | राज्य | जिला | स्थान |
|---|---|---|---|---|
| १ | सोमनाथ | गुजरात | जूनागढ़ | प्रभास |
| २ | मल्लिकार्जुन | आंधप्रदेश | कर्नूल | श्री शैल |
| ३ | महाकाल | मध्यप्रदेश | उज्जैन | उज्जैन |

कर्मक्षयो भवेत्तस्य यस्य तुष्टो महेश्वरः।।
( शि०पु०शा०सं०अ० ३८)




# भारत के शक्तिपीठ

| क. | स्थान | जिला | अंग/आभूषण | शक्ति का नाम | भैरव का नाम |
|---|---|---|---|---|---|
| | **पश्चिम बंगाल** | | | | |
| १ | बटनगर | मुर्शिदाबाद | किरीट | विमला | संवर्त |
| २ | लाभपुर | वीरभूम | अधरोष्ठ | फुल्लरा | विश्वेश |
| ३ | नंदीपुर | वीरभूम | कंठहार | नन्दिनी | नन्दिकेश्वर |
| ४ | नलहाटी | वीरभूम | शिरोनली | कालिका | योगीश |
| ५ | वक्रेश्वर | वीरभूम | मन | महिषमर्दिनी | वक्रनाथ |
| ६ | बहुला (केतुब्रह्म) | वर्दमान | वामबाहु | बहुला | भीरुक |
| ७ | त्रिस्रोता (शालवाड़ी) | जलपाईगुड़ी | वामपाद | भ्रामरी | ईश्वर |
| ८ | विभाष-तमलूक | मेदिनीपुर | वामगुल्फ | कपालिनी | सर्वानन्द |
| ९ | युगाद्या (क्षीरग्राम) | वर्दमान | दक्षिण पादांगुष्ठ | भूतधात्री | क्षीरकटक |
| १० | कालीपीठ(कलकत्ता) | हावड़ा | द पादांगुली | कालिका | नकुलीश |
| | **उत्तर-प्रदेश** | | | | |
| ११ | वृंदावन | मथुरा | केशकल्प | उमा | भूतेश |

| क | स्थान | जिला | अंग/आभूषण | शक्ति का नाम | भैरव के नाम |
|---|---|---|---|---|---|
| | **गुजरात** | | | | |
| ३० | गिरनार | जूनागढ | ऊर्ध्वोष्ठ | अवन्ती | लम्बकर्ण |
| ३१ | प्रभास | जूनागढ | उदर | चन्द्रभागा | वक्रतुण्ड |
| | **महाराष्ट्र** | | | | |
| ३२ | करवीर | कोल्हापुर | तीनोनेत्र | महिषमर्दिनी | क्रोधीश |
| ३३ | पंचवटी | नासिक | चिबुक | भ्रामरी | विकृताक्ष |
| | **कर्णाटक** | | | | |
| ३५ | पंचसागर | उत्तरकन्नड | अधोदंतपंक्ति | वाराही | महारुद्र |
| ३६ | करणाट | अज्ञात | दोनोकर्ण | जयदुर्गा | अभीरु |
| | **आन्ध्रप्रदेश** | | | | |
| [illegible] | गोदावरीतट(राज महेन्द्री) | [illegible] | गोदावरी वामगण्ड | विश्वेशी | दण्ड पाणी |
| [illegible] | [illegible] | [illegible] | [illegible] | महालक्ष्मी | [illegible]रानंद |

# भूतशुद्ध्यादि विघ्नोत्सारणान्तम्

## भूतशुद्धिः

श्वाससमीरं पिङ्गलया अन्तराकृष्य—

**ॐ ऐं ह्रीं श्रीं मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा**—इति मन्त्रेण मूलाधारस्थितं जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवेन एकीभूतं विभाव्य इडया वायुं रेचयेत्।।

**ॐ ऐं ह्रीं श्रीं यं १६.** (इडया पूरयित्वा) **संकोचशरीरं शोषय शोषय स्वाहा**—इति निजशरीरं शोषितं विभाव्य पिङ्गलया रेचयेत्।

**ॐ ऐं ह्रीं श्रीं रं १६.** (पिङ्गलया पूरयित्वा) **संकोचशरीरं दह दह पच पच स्वाहा**—इति प्लुष्टं भस्मीकृतं च विभाव्य इडया रेचयेत्।

**ॐ ऐं ह्रीं श्रीं वं १६.** (इडया पूरयित्वा) **परमशिवामृतं वर्षय वर्षय स्वाहा**—इति तद्भस्म सहस्रारेन्दुमण्डल-विगलदमृतरसेन सिक्तं च विभाव्य पिङ्गलया रेचयेत्।

**ॐ ऐं ह्रीं श्रीं लं १६.** (पिङ्गलया पूरयित्वा) **शांभवशरीरमुत्पादयोत्पादय स्वाहा**—इति तद्भस्मनो दिव्यशरीरमुत्पन्नं विभाव्य इडया रेचयेत्।

**ॐ ऐं ह्रीं श्रीं हंसः सोहं** (इडया पूरयित्वा) **अवतर अवतर शिवपदात् जीव सुषुम्नापथेन प्रविश मूलशृङ्गाटकं उल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोहं स्वाहा**—इति परमशिवेनैकीकृतं जीवं पुनः सुषुम्नावर्त्मना मूलाधारे स्थापितं चिन्तयेत्।

## आत्मप्राणप्रतिष्ठा

हृदि दक्षकरतलं निधाय—**ॐ ऐं ह्रीं श्रीं आं सोहं**—इति त्रिः पठेत्।

अथ मूलेन षोडशधा दशधा त्रिधा वा प्राणानायम्य।

## विघ्नोत्सारणम्

**ॐ ऐं ह्रीं श्रीं अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।।**

इति मन्त्रमुच्चार्य युगपद्वामपार्ष्णिभूतलाघातत्रय-करास्फोटनत्रय-क्रूरदृष्ट्यवलोकनपूर्वक-तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत्।

अथ **नमः** इति अङ्गुष्ठमन्त्रमुच्चारयन् अङ्कुशमुद्रया शिखां बध्नीयात्।

ततः न्यासान् कुर्यात्-न्यासाः न्यांस प्रकणे पुट संख्ये 453/511 द्रष्टव्याः

# पात्रासादनम्

## वर्धनीकलशस्थापनम्

स्वपुरतः वामभागे त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य—



मण्डलं मूलेन समभ्यर्च्य, कर्पूरादिवासितजलपूरितं कलशं गन्धपुष्पाक्षतैः अलंकृत्य मण्डलोपरि संस्थापयेत्।

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।**
**मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।।**
**कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ।**
**ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।।**
**अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ।**

**ॐ आपो वा इदँ सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाँस्यापो ज्योतीँष्यापो यजूँष्यापः सत्यमापाः सर्वा देवता आपो भूर्भुवस्वरोम् ॐ।**

**गङ्गे च यमुने चैव गोदावरि सरस्वति । नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ।।**
**सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः । आयान्तु देवीपूजार्थं दूरितक्षयकारकाः ।।**

मूलेन अष्टवारमभिमन्त्र्य, धेनुमुद्रां प्रदर्श्य, तज्जलेन पूजोपकरणानि आत्मानं च प्रोक्षयेत्।।

## सामान्यार्घ्यविधिः

वर्धनीपात्रस्य दक्षिणतः वर्धनीपात्रगतेन जलेन बिन्दुत्रिकोण-षट्कोण-वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय।




चतुरश्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च बालाषडङ्गैः संपूजयेत्। यथा—

**ॐ ऐं ह्रीं श्रीं ऐं हृदयाय नमः। हृदयशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं क्लीं शिरसे स्वाहा। शिरःशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सौः शिखायै वषट्। शिखाशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं कवचाय हुम्। कवचशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं क्लीं नेत्रत्रयाय वौषट्। नेत्रशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सौः अस्त्राय फट्। अस्त्रशक्तिश्री पादुकां पूजयामि नमः।।**

षट्कोणे स्वाग्रादिप्रादक्षिण्येन—

**ॐ ऐं ह्रीं श्रीं ऐं क ५ हृदयाय नमः। हृदयशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ शिरसे स्वाहा। शिरःशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सौः स-४ शिखायै वषट्। शिखाशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क-५ कवचाय हुम्। कवचशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ नेत्रत्रयाय वौषट्। नेत्रशक्तिश्री पादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सौः स-४ अस्त्राय फट्। अस्त्रशक्तिश्री पादुकां पूजयामि नमः।।**

त्रिकोणे स्वाग्रादिप्रादक्षिण्येन—

**ॐ ऐं ह्रीं श्रीं ऐं क-५ नमः** **ॐ ऐं ह्रीं श्रीं सौः स-४ नमः**
**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ नमः** **ॐ ऐं ह्रीं श्रीं मूलं नमः (बिन्दौ)**

ततः **ॐ ऐं ह्रीं श्रीं अस्त्राय फट्**—इति सामान्यार्घ्यपात्रस्य आधारं प्रक्षाल्य

**ॐ ऐं ह्रीं श्रीं अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीमहात्रिपुरसुन्दर्याः सामान्यार्घ्यपात्राधाराय नमः।।** इति मण्डलस्योपरि संस्थाप्य

**ॐ ऐं ह्रीं श्रीं अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम्। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः** इति अग्निमण्डलं विभाव्य दश वह्निकलाः संपूजयेत्। तद्यथा—

**ॐ ऐं ह्रीं श्रीं यं धूम्रार्चिष्कलायै नमः**
**ॐ ऐं ह्रीं श्रीं रं ऊष्मायै नमः**
**ॐ ऐं ह्रीं श्रीं लं ज्वलिन्यै नमः**
**ॐ ऐं ह्रीं श्रीं वं ज्वालिन्यै नमः**
**ॐ ऐं ह्रीं श्रीं शं विस्फुलिङ्गिन्यै नमः**
**ॐ ऐं ह्रीं श्रीं षं सुश्रियै नमः**
**ॐ ऐं ह्रीं श्रीं सं सुरूपायै नमः**
**ॐ ऐं ह्रीं श्रीं हं कपिलायै नमः**
**ॐ ऐं ह्रीं श्रीं ळं हव्यवाहिन्यै नमः**
**ॐ ऐं ह्रीं श्रीं क्षं कव्यवाहिन्यै नमः**

**ॐ ऐं ह्रीं श्रीं अस्त्राय फट्**—इति क्षालितं शङ्खं गृहीत्वा—

**ॐ ऐं ह्रीं श्रीं उं सूर्यमण्डलायार्थप्रदद्वादशकलात्मने श्रीमहात्रिपुरसुन्दर्याः सामान्यार्घ्यपात्राय नमः**— इति संस्थाप्य

**ॐ ऐं ह्रीं श्रीं आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्मयेन सविता रथेना देवो याति भुवना विपश्यन्। हां हीं हूं हैं हौं हः। हमलवरयूम्। सूर्यमण्डलाय नमः**—इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः संपूजयेत्।



तद्यथा—

ॐ ऐं ह्रीं श्रीं कं भं तपिनीकलायै नमः

ॐ ऐं ह्रीं श्रीं खं बं तापिनीकलायै नमः

ॐ ऐं ह्रीं श्रीं गं फं धूम्राकलायै नमः

ॐ ऐं ह्रीं श्रीं घं पं मरीचिकलायै नमः

ॐ ऐं ह्रीं श्रीं ङं नं ज्वालिनीकलायै नमः

ॐ ऐं ह्रीं श्रीं चं धं रुचिकलायै नमः

ॐ ऐं ह्रीं श्रीं छं दं सुषुम्नाकलायै नमः

ॐ ऐं ह्रीं श्रीं जं थं भोगदाकलायै नमः

ॐ ऐं ह्रीं श्रीं झं तं विश्वाकलायै नमः

ॐ ऐं ह्रीं श्रीं ञं णं बोधिनीकलायै नमः

ॐ ऐं ह्रीं श्रीं टं ढं धारिणीकलायै नमः

ॐ ऐं ह्रीं श्रीं ठं डं क्षमाकलायै नमः

**ॐ ऐं ह्रीं श्रीमं सोममण्डलाय कामप्रदषोडशकलात्मने महात्रिपुरसुन्दर्याः सामान्यार्घ्यामृताय नमः**—इति वर्धनीसलिलमापूर्य क्षीरबिन्दुं दत्वा

**ॐ ऐं ह्रीं श्रींआप्यायस्व समेतु ते विश्वतः सोमवृष्णियं भवावाजस्य संगथे। सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः**—इति सोममण्डलं विभाव्य षोडश सोमकलाः संपूजयेत्।

तद्यथा—

ॐ ऐं ह्रीं श्रीं अं अमृताकलायै नमः

ॐ ऐं ह्रीं श्रीं आं मानदाकलायै नमः

ॐ ऐं ह्रीं श्रीं इं पूषाकलायै नमः

ॐ ऐं ह्रीं श्रीं ईं तुष्टिकलायै नमः

ॐ ऐं ह्रीं श्रीं उं पुष्टिकलायै नमः

ॐ ऐं ह्रीं श्रीं ऊं रतिकलायै नमः

ॐ ऐं ह्रीं श्रीं ऋं धृतिकलायै नमः

ॐ ऐं ह्रीं श्रीं ॠं शशिनीकलायै नमः

ॐ ऐं ह्रीं श्रीं लृं चन्द्रिकाकलायै नमः

ॐ ऐं ह्रीं श्रीं लॄं कान्तिकलायै नमः

ॐ ऐं ह्रीं श्रीं एं ज्योत्स्नाकलायै नमः

ॐ ऐं ह्रीं श्रीं ऐं श्रीकलायै नमः

ॐ ऐं ह्रीं श्रीं ओं प्रीतिकलायै नमः

ॐ ऐं ह्रीं श्रीं औं अङ्गदाकलायै नमः

ॐ ऐं ह्रीं श्रीं अं पूर्णाकलायै नमः

ॐ ऐं ह्रीं श्रीं अः पूर्णामृता कलायै नमः

ततस्तस्मिन्शङ्खे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण षडङ्गैः संपूज्य, **अस्त्राय फट्** इति संरक्ष्य, **कवचाय हुं** इति अवकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, मूलेन सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः पूजोपकरणानि आत्मानं च प्रोक्ष्य, शङ्खजलात् किंचित् वर्धन्यां क्षिपेत्।

## विशेषार्घ्यविधिः




सामान्यार्घ्योदकेन तद्दक्षिणतः बिन्दु-त्रिकोण-षट्कोणवृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य, बिन्दौ सानुस्वारं तुरीयस्वरं विलिख्य,

चतुरश्रे प्राग्वत् षडङ्गं विन्यस्य, षट्कोणे स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गैरभ्यर्च्य, त्रिकोणे मूलत्रिखण्डैः अभ्यर्च्य, मूलेन बिन्दुं च अर्चयेत्। तद्यथा—

चतुरश्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च—

**ॐ ऐं ह्रीं श्रीं ऐं क-५ हृदयाय नमः। हृदयशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ शिरसे स्वाहा। शिरःशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं सौः स-४ शिखायै वषट्। शिखाशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क-५ कवचाय हुम्। कवचशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ नेत्रत्रयाय वौषट्। नेत्रशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं सौः स-४ अस्त्राय फट्। अस्त्रशक्तिश्री पादुकां पूजयामि नमः**

ततः षट्कोणे स्वाग्रादिप्रादक्षिण्येन—

**ॐ ऐं ह्रीं श्रीं ऐं क-५ हृदयाय नमः। हृदयशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ शिरसे स्वाहा। शिरःशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं सौः स-४ शिखायै वषट्। शिखाशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क-५ कवचाय हुम्। कवचशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ नेत्रत्रयाय वौषट्। नेत्रशक्तिश्री पादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं सौः स-४ अस्त्राय फट्। अस्त्रशक्तिश्री पादुकां पूजयामि नमः**

ततस्त्रिकोणे स्वाग्रादिप्रादक्षिण्येन—

**ॐ ऐं ह्रीं श्रीं ऐं क-५ नमः** **ॐ ऐं ह्रीं श्रीं सौः स-४ नमः**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ नमः** **ॐ ऐं ह्रीं श्रीं मूलं नमः** (बिन्दौ)

षोडश्युपासकानां तु षोडशीमन्त्रेण सर्वत्र पूजा विधेया।

अथ **ॐ ऐं ह्रीं श्रीं अस्त्राय फट्** इति आधारं प्रक्षाल्य,

**ॐ ऐं ह्रीं श्रीं ऐं क-५ अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीमहात्रिपुरसुन्दर्या विशेषार्घ्यपात्राधाराय नमः** इति आधारं संस्थाप्य

**ॐ ऐं ह्रीं श्रीं अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम्। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः**—इति अग्निमण्डलं विभाव्य दश वह्निकलाः पूजयेत्। यथा—

**ॐ ऐं ह्रीं श्रीं यं धूम्रार्चिष्कलायै नमः**
**ॐ ऐं ह्रीं श्रीं रं ऊष्माकलायै नमः**
**ॐ ऐं ह्रीं श्रीं लं ज्वलिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं वं ज्वालिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं शं विस्फुलिङ्गिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं षं सुश्रीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं सं सुरूपाकलायै नमः**
**ॐ ऐं ह्रीं श्रीं हं कपिलाकलायै नमः**
**ॐ ऐं ह्रीं श्रीं ळं हव्यवाहिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं क्षं कव्यवाहिनीकलायै नमः**

ततः—

**ॐ ऐं ह्रीं श्रीं अस्त्राय फट्** इति अस्त्रमन्त्रेण विशेषार्घ्यपात्रं प्रक्षाल्य

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ उं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने श्रीमहात्रिपुरसुन्दर्या विशेषार्घ्यपात्राय नमः** इति आधारोपरि संस्थाप्य।

**ॐ ऐं ह्रीं श्रीं ह्रीं ऐं महालक्ष्मीश्वरि परमस्वामिनि ऊर्ध्वशून्यप्रवाहिनिसोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छागच्छ विश विश पात्रं प्रतिगृहण प्रतिगृहण हुं फट् स्वाहा** इति पुष्पाञ्जलिं विकीर्य।

**ॐ ऐं ह्रीं श्रीं आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवना विपश्यन्। हां हीं हूं हैं हौं हः हमलवरयूं सूर्यमण्डलाय नमः** इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः पूजयेत्। यथा—

**ॐ ऐं ह्रीं श्रीं कं भं तपिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं खं बं तापिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं गं फं धूम्राकलायै नमः**
**ॐ ऐं ह्रीं श्रीं घं पं मरीचिकलायै नमः**
**ॐ ऐं ह्रीं श्रीं ङं नं ज्वालिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं चं धं रुचिकलायै नमः**
**ॐ ऐं ह्रीं श्रीं छं दं सुषुम्नाकलायै नमः**
**ॐ ऐं ह्रीं श्रीं जं थं भोगदाकलायै नमः**
**ॐ ऐं ह्रीं श्रीं झं तं विश्वाकलायै नमः**
**ॐ ऐं ह्रीं श्रीं ञ णं बोधिनीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं टं ढं धारिणीकलायै नमः**
**ॐ ऐं ह्रीं श्रीं ठं डं क्षमाकलायै नमः**

सुधा सूक्तं आचरेत अस्य पाठं स्तोत्र प्रकरणे पुटे द्रष्टव्यम्।

## शुद्धिसंस्कारः

विशेषार्घ्यपात्रस्य दक्षिणतः सामान्यार्घ्योदकेन त्रिकोण-वृत्त-चतुरश्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य*

**ॐ ऐं ह्रीं श्रीं ॐ हीं ह्रौं नमः शिवाय** इति मण्डलं अभ्यर्च्य शुद्धिपात्रं संस्थाप्य

**ॐ ह्रीं जुंसः स्वाहा** इत्यष्टवारं अभिमन्त्र्य तत्र त्रिकोणं अकथादि रेखा त्रयात्मकं विभाव्य हस्क्षमलवरयूं इति भैरवनवकं हस्क्षमलवरयीं इति भैरवीनवकं दक्षहस्तेन पूजनं-वामहस्तेन तत्वमुद्रया गृहीत आदिमशकलेन अमृतबिन्दुना तर्पयेत्।

इति सर्वत्र ज्ञेयम्।

**ॐ हस्क्ष्मलवरयूं आनन्द भैरवाय वौषट् आनन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं आनन्द भैरव्यै वौषट् आनन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं सुरानन्द भैरवाय वौषट् सुरानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं सुरानन्द भैरव्यै वौषट् सुरानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं अमृतानन्द भैरवाय वौषट् अमृतानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं अमृतानन्द भैरव्यै वौषट् अमृतानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं तरुणानन्द भैरवाय वौषट् तरुणानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलरयीं तरुणानन्द भैरव्यै वौषट् तरुणानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं उन्मनानन्द भैरवाय वौषट् उन्मनानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं उन्मनानन्द भैरव्यै वौषट् उन्मनानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं ज्ञानानन्द भैरवाय वौषट् ज्ञानानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं ज्ञानानन्द भैरव्यै वौषट् ज्ञानानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं मुख्यानन्द भैरवाय वौषट् मुख्यानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं मुख्यानन्द भैरव्यै वौषट् मुख्यानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं परानन्द भैरवाय वौषट् परानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं परानन्द भैरव्यै वौषट् परानन्द भैरवी श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयूं कलानन्द भैरवाय वौषट् कलानन्द भैरव श्री पादुकां पूजयामि नमः।**
**ॐ हस्क्ष्मलवरयीं कलानन्द भैरव्यै वौषट् कलानन्द भैरवी श्री पादुकां पूजयामि नमः।**

इति भैरव मिथुन नवकं मध्ये अष्टदिक्षु च संपूज्य संतर्प्य।

---

* अस्य चित्रं पुटे द्रष्टव्यम्।

ततः त्रिकोणस्य अन्तः **ह ळ क्षा न्** विलिख्य मध्ये बिन्दुं तुरीय स्वरं **(ई)** विलिख्य तत्पार्श्वयोः **हंसः** विलिख्य




**हंसः नमः** इति संपूज्य त्रिकोणस्य परितः वृत्तं निष्पाद्य तद्बहिः षट्कोणं विलिख्य मूलषडङ्गैः अभ्यर्च्य **मूलं—चिन्मयीं आनन्दलक्षणां अमृतकलश पिशितहस्तद्वयां प्रसन्नां श्रीललितां सुधादेवीं पूजयामि नमः स्वाहा**—इति सुधादेवीं आवाह्य षण्मुद्राः प्रदर्श्य प्राणप्रतिष्ठां कृत्वा षोडशोपचारैः संपूज्य **वषट्** इति उद्धरणपात्रेण किञ्चित् उद्धृत्य स्वाहा इति तत्रैव निक्षिपेत् हुं इति अवकुण्ठ्य **बौषट्** इति धेनुमुद्रया अमृतीकृत्य फट् इति संरक्ष्य **नमः** इति पुष्पं दत्वा

**ॐ ऐं ह्रीं श्रीं ओं श्लीं पशु हुं फट्** इति अष्टवारमभिमन्त्र्य

**ॐ ऐं ह्रीं श्रीं सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।**

**भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः।।**

**ॐ ऐं ह्रीं श्रीं वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः।।**

**ॐ ऐं ह्रीं श्रीं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।।**

**ॐ ऐं ह्रीं श्रीं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्।**

**ॐ ऐं ह्रीं श्रीं ईशानस्सर्वविद्यानमीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों।।** इत्यभ्यर्च्य।

ततो विशेषार्घ्यपात्रे—

**ॐ ऐं ह्रीं श्रीं सौः स-४ मं सोममण्डलाय कामप्रदषोडशकलात्मने श्री महात्रिपुरसुन्दर्या विशेषार्घ्यामृताय नमः**—इति तत्त्वमुद्रया गृहीतनागरखण्डोपरि सबिन्दु अकारादिक्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितं अमृतं आपूर्य अष्टगन्धलोलितं पुष्पं निधाय नागरखण्डं निक्षिप्य।

**ॐ ऐं ह्रीं श्रीं आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्। भवावाजस्य संगथे।। सां सीं सूं सैं सैं सः समलवरयूं सोममण्डलाय नमः**—इति सोममण्डलं विभाव्य षोडश सोमकलाः पूजयेत्।

**यथा—**

**ॐ ऐं ह्रीं श्रीं अं अमृता कलायै नमः**
**ॐ ऐं ह्रीं श्रीं आं मानदा कलायै नमः**
**ॐ ऐं ह्रीं श्रीं इं पूषा कलायै नमः**
**ॐ ऐं ह्रीं श्रीं ईं तुष्टि कलायै नमः**
**ॐ ऐं ह्रीं श्रीं उं पुष्टि कलायै नमः**
**ॐ ऐं ह्रीं श्रीं ऊं रति कलायै नमः**
**ॐ ऐं ह्रीं श्रीं ऋं धृति कलायै नमः**
**ॐ ऐं ह्रीं श्रीं ॠं शशिनी कलायै नमः**
**ॐ ऐं ह्रीं श्रीं लृं चन्द्रिका कलायै नमः**
**ॐ ऐं ह्रीं श्रीं लॄं कान्ति कलायै नमः**
**ॐ ऐं ह्रीं श्रीं एं ज्योत्स्ना कलायै नमः**
**ॐ ऐं ह्रीं श्रीं ऐं श्री कलायै नमः**
**ॐ ऐं ह्रीं श्रीं ओं प्रीति कलायै नमः**
**ॐ ऐं ह्रीं श्रीं औं अङ्गदा कलायै नमः**
**ॐ ऐं ह्रीं श्रीं अं पूर्णा कलायै नमः**
**ॐ ऐं ह्रीं श्रीं अः पूर्णामृता कलायै नमः**

**ततः ॐ ऐं ह्रीं श्रीं ॐ जूंसः स्वाहा** इति अष्टवारमभिमन्त्र्य।

तत्रार्घ्यामृते स्वाग्राद्यप्रादक्षिण्येन अकथादि-षोडशवर्णात्मक-रेखात्रयं त्रिकोणं विलिख्य, तदन्तः स्वाग्रादिकोणेषु अप्रादक्षिण्येन पञ्चदशीमूलखण्डत्रयं, बिन्दौ सबिन्दुतुरीयस्वरं, तद्वामदक्षयोः क्रमेण **हं सः** इति च विलिख्य—

**ॐ ऐं ह्रीं श्रीं हंसः नमः** इति आराध्य, त्रिकोणस्य परितः वृत्तं, तद्बहिश्च षट्कोणं निर्माय, स्वाग्रकोणादिप्रादक्षिण्येन षडङ्गमन्त्रैः षट्कोणमभ्यर्च्य

**ॐ ऐं ह्रीं श्रीं मूलं तां चिन्मयीं आनन्दलक्षणां अमृतकलशपिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा** इति सुधादेवीं समभ्यर्च्य तदर्घ्यांकिंचित् पात्रान्तरेण

**ॐ ऐं ह्रीं श्रीं वषट्।** इत्युद्धृत्य
**ॐ ऐं ह्रीं श्रीं फट्।** इति संरक्ष्य
**ॐ ऐं ह्रीं श्रीं स्वाहा।** इति तत्रैव निक्षिप्य
**ॐ ऐं ह्रीं श्रीं नमः।** इति पुष्पं दत्वा
**ॐ ऐं ह्रीं श्रीं हुं।** इति अवकुण्ठ्य
**ॐ ऐं ह्रीं श्रीं मूलेन** गालिन्या निरीक्ष्य
**ॐ ऐं ह्रीं श्रीं वौषट्।** इसि धेनुमुद्रया अमृतीकृत्य
**ॐ ऐं ह्रीं श्रीं ऐं** इति योनिमुद्रया नत्वा

**ॐ ऐं ह्रीं श्रीं मूलेन** सप्तवारमभिमन्त्र्य, सुधादेवीं षोडशोपचारैः संपूज्य तद्बिन्दुभिः सपर्यासाधनानि प्रोक्ष्य सर्वं विद्यामयं विभावयेत्।। ततः शुद्धिपात्रस्य अधः त्रिकोण-वृत्त-चतुरश्रात्मकं मण्डलद्वयं विलिख्य। प्रथममण्डले—

**ॐ ऐं ह्रीं श्रीं हंसश्शिवस्सोहं, सोहं हंसश्शिवः, हंसश्शिवस्सोहं हंसः, ह्स्ख्फ्रें हसक्षमलवरयूं नमः।** इत्यभ्यर्च्य, गुरुपात्रं निधाय द्वितीयमण्डले—

**ॐ ऐं ह्रीं श्रीं हंसः नमः।** इत्यभ्यर्च्य, आत्मपात्रं निदध्यात्।

ततो विशेषार्घ्यपात्रं करेण संस्पृश्य वक्ष्यमाणचतुर्नवतिमन्त्रैः अभिमन्त्रयेत्—

### वह्निकलाः

ॐ ऐं ह्रीं श्रीं यं धूम्रार्चिषे नमः ॐ ऐं ह्रीं श्रीं षं सुश्रियै नमः
ॐ ऐं ह्रीं श्रीं रं ऊष्मायै नमः ॐ ऐं ह्रीं श्रीं सं सुरूपायै नमः
ॐ ऐं ह्रीं श्रीं लं ज्वलिन्यै नमः ॐ ऐं ह्रीं श्रीं हं कपिलायै नमः
ॐ ऐं ह्रीं श्रीं वं ज्वालिन्यै नमः ॐ ऐं ह्रीं श्रीं ळं हव्यवाहिन्यै नमः
ॐ ऐं ह्रीं श्रीं शं विस्फुलिङ्गिन्यै नमः ॐ ऐं ह्रीं श्रीं क्षं कव्यवाहिन्यै नमः

### सूर्यकलाः

ॐ ऐं ह्रीं श्रीं कं भं तपिन्यै नमः ॐ ऐं ह्रीं श्रीं छं दं सुषुम्नायै नमः
ॐ ऐं ह्रीं श्रीं खं बं तापिन्यै नमः ॐ ऐं ह्रीं श्रीं जं थं भोगदायै नमः
ॐ ऐं ह्रीं श्रीं गं फं धूम्रायै नमः ॐ ऐं ह्रीं श्रीं झं तं विश्वायै नमः
ॐ ऐं ह्रीं श्रीं घं पं मरीच्यै नमः ॐ ऐं ह्रीं श्रीं ञं णं बोधिन्यै नमः
ॐ ऐं ह्रीं श्रीं ङं नं ज्वालिन्यै नमः ॐ ऐं ह्रीं श्रीं टं ढं धारिण्यै नमः
ॐ ऐं ह्रीं श्रीं चं धं रुच्यै नमः ॐ ऐं ह्रीं श्रीं ठं डं क्षमायै नमः

### सोमकलाः

ॐ ऐं ह्रीं श्रीं अं अमृतायै नमः ॐ ऐं ह्रीं श्रीं लृं चन्द्रिकायै नमः
ॐ ऐं ह्रीं श्रीं आं मानदायै नमः ॐ ऐं ह्रीं श्रीं लॄं कान्त्यै नमः
ॐ ऐं ह्रीं श्रीं इं पूषायै नमः ॐ ऐं ह्रीं श्रीं एं ज्योत्स्नायै नमः
ॐ ऐं ह्रीं श्रीं ईं तुष्ट्यै नमः ॐ ऐं ह्रीं श्रीं ऐं श्रियै नमः
ॐ ऐं ह्रीं श्रीं उं पुष्ट्यै नमः ॐ ऐं ह्रीं श्रीं ओं प्रीत्यै नमः
ॐ ऐं ह्रीं श्रीं ऊं रत्यै नमः ॐ ऐं ह्रीं श्रीं औं अङ्गदायै नमः
ॐ ऐं ह्रीं श्रीं ऋं धृत्यै नमः ॐ ऐं ह्रीं श्रीं अं पूर्णायै नमः
ॐ ऐं ह्रीं श्रीं ॠं शशिन्यै नमः ॐ ऐं ह्रीं श्रीं अः पूर्णामृतायै नमः

### ब्रह्मकलाः

ॐ ऐं ह्रीं श्रीं कं सृष्ट्यै नमः ॐ ऐं ह्रीं श्रीं गं स्मृत्यै नमः
ॐ ऐं ह्रीं श्रीं खं ऋद्ध्यै नमः ॐ ऐं ह्रीं श्रीं घं मेधायै नमः

ॐ ऐं ह्रीं श्रीं ङं कान्त्यै नमः ॐ ऐं ह्रीं श्रीं जं स्थिरायै नमः
ॐ ऐं ह्रीं श्रीं चं लक्ष्म्यै नमः ॐ ऐं ह्रीं श्रीं झं स्थित्यै नमः
ॐ ऐं ह्रीं श्रीं छं द्युत्यै नमः ॐ ऐं ह्रीं श्रीं ञं सिद्ध्यै नमः

ॐ ऐं ह्रीं श्रीं हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।। नमः।।

## विष्णुकलाः

ॐ ऐं ह्रीं श्रीं टं जरायै नमः ॐ ऐं ह्रीं श्रीं तं कामिकायै नमः
ॐ ऐं ह्रीं श्रीं ठं पालिन्यै नमः ॐ ऐं ह्रीं श्रीं थं वरदायै नमः
ॐ ऐं ह्रीं श्रीं डं शान्त्यै नमः ॐ ऐं ह्रीं श्रीं दं ह्लादिन्यै नमः
ॐ ऐं ह्रीं श्रीं ढं ईश्वर्यै नमः ॐ ऐं ह्रीं श्रीं धं प्रीत्यै नमः
ॐ ऐं ह्रीं श्रीं णं रत्यै नमः ॐ ऐं ह्रीं श्रीं नं दीर्घायै नमः

ॐ ऐं ह्रीं श्रीं प्रतद्विष्णुस्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा।। नमः।।

## रुद्रकलाः

ॐ ऐं ह्रीं श्रीं पं तीक्ष्णायै नमः ॐ ऐं ह्रीं श्रीं यं क्षुधायै नमः
ॐ ऐं ह्रीं श्रीं फं रौद्र्यै नमः ॐ ऐं ह्रीं श्रीं रं क्रोधिन्यै नमः
ॐ ऐं ह्रीं श्रीं बं भयायै नमः ॐ ऐं ह्रीं श्रीं लं क्रियायै नमः
ॐ ऐं ह्रीं श्रीं भं निद्रायै नमः ॐ ऐं ह्रीं श्रीं वं उद्गार्यै नमः
ॐ ऐं ह्रीं श्रीं मं तन्द्र्यै नमः ॐ ऐं ह्रीं श्रीं शं मृत्यवे नमः

ॐ ऐं ह्रीं श्रीं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्।।नमः।।

## ईश्वरकलाः

ॐ ऐं ह्रीं श्रीं षं पीतायै नमः ॐ ऐं ह्रीं श्रीं हं अरुणायै नमः
ॐ ऐं ह्रीं श्रीं सं श्वेतायै नमः ॐ ऐं ह्रीं श्रीं क्षं असितायै नमः

ॐ ऐं ह्रीं श्रीं तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते। विष्णोर्यत्परमं पदम्।।नमः।।

सदाशिवकलाः

| | | | | | |
|---|---|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं | अं निवृत्त्यै | नमः | ॐ ऐं ह्रीं श्रीं | लृं परायै | नमः |
| ॐ ऐं ह्रीं श्रीं | आं प्रतिष्ठायै | नमः | ॐ ऐं ह्रीं श्रीं | ॡं सूक्ष्मायै | नमः |
| ॐ ऐं ह्रीं श्रीं | इं विद्यायै | नमः | ॐ ऐं ह्रीं श्रीं | एं सूक्ष्मामृतायै | नमः |
| ॐ ऐं ह्रीं श्रीं | ईं शान्त्यै | नमः | ॐ ऐं ह्रीं श्रीं | ऐं ज्ञानायै | नमः |
| ॐ ऐं ह्रीं श्रीं | उं इन्धिकायै | नमः | ॐ ऐं ह्रीं श्रीं | ओं ज्ञानामृतायै | नमः |
| ॐ ऐं ह्रीं श्रीं | ऊं दीपिकायै | नमः | ॐ ऐं ह्रीं श्रीं | औं आप्यायिन्यै | नमः |
| ॐ ऐं ह्रीं श्रीं | ऋं रेचिकायै | नमः | ॐ ऐं ह्रीं श्रीं | अं व्यापिन्यै | नमः |
| ॐ ऐं ह्रीं श्रीं | ॠं मोचिकायै | नमः | ॐ ऐं ह्रीं श्रीं | अः व्योमरूपायै | नमः |

ॐ ऐं ह्रीं श्रीं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा।।नमः।

ॐ ऐं ह्रीं श्रीं मूलं नमः।।

ॐ ऐं ह्रीं श्रीं अखण्डैकरसानन्दकरे परसुधात्मनि। स्वच्छन्दस्फुरणामत्र निधेहि कुलनायिके।।नमः।

ॐ ऐं ह्रीं श्रीं अकुलस्थामृताकारे शुद्धज्ञानकरे परे।

अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि।।नमः।

ॐ ऐं ह्रीं श्रीं तद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत्स्वरूपिणि।

भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु।।नमः।

ॐ ऐं ह्रीं श्रीं ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा।।नमः।

ॐ ऐं ह्रीं श्रीं ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय महा क्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु हसौः स्हौः ँ।।नमः।

एवमभिमन्त्रितविशेषार्घ्यामृतात् किंचित् गुरुपात्रे उद्धृत्य गुरुत्रयं यजेत्। गुरुः सन्निहितो यदि तस्मै निवेदयेत्।

पुनः आत्मपात्रे किंचिद्विशेषार्घ्यामृतमुद्धृत्य, मूलाधार्ं वालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठित चिदग्निमण्डलं ध्यात्वा—

**ॐ ऐं ह्रीं श्रीं कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः।** इति मनसा संपूज्य

**ॐ ऐं ह्रीं श्रीं मूलं पुण्यं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं पापं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं कृत्यं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं अकृत्यं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं सङ्कल्पं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं विकल्पं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं धर्मं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं अधर्मं जुहोमि स्वाहा**
**ॐ ऐं ह्रीं श्रीं मूलं अधर्मं जुहोमि वौषट्**

**ॐ ऐं ह्रीं श्रीं इतः पूर्वं प्राणबुद्धिदेहधर्मादिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यां उदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा—** इति पूर्णाहुति विभाव्य।

**ॐ ऐं ह्रीं श्रीं आर्द्र ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि।**

**योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि।**

**अहमेवाहं मां जुहोमि स्वाहा।**

इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात्। विशेषार्घ्यपात्रात्किंचित्क्षीरं कारणकलशे निक्षिपेत्।।

## *अन्तर्यागादि लयाङ्गपूजान्तम्*

### अन्तर्यागः

एवं निरस्तनिखिलदोषः सन् आमूलाधारादाब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेत्।

ततस्तत्तेजसि—

**मूलाधारादधोगते अकुलसहस्रारे- भूपुरस्थितदेवीः,**
**तदुपरि स्थिते विषुवनाम्नि रक्तवर्णषड्दलपद्मे षोडशदलदेवीः,**
**मूलाधारे चतुर्दले अष्टदलदेवीः, स्वाधिष्ठाने षड्दले चतुर्दशारदेवीः,**
**मणिपूरके दशदले बहिर्दशारदेवीः, अनाहते द्वादशदले अन्तर्दशारदेवीः,**
**विशुद्धौ षोडशदले अष्टारदेवीः, लम्बिकाग्रे आयुधदेवीः त्रिकोणदेवीश्च,**
**आज्ञायां द्विदले बिन्दुगतदेवीं च,**

ध्यात्वा तत्तदग्रे जीवात्मानं पुष्पपूरिताञ्जलि निविष्टं भावयन् तत्तत्पूजामन्त्रैः तत्तदावरणपूजां, देव्या वामहस्ते पूजासमर्पणं च विभाव्य, श्रीमहात्रिपुरसुन्दर्यां सचक्रावयवानि आवरणानि विलीनानि विभाव्य, मध्यत्र्यश्राग्रे (देवीपादमूले) स्थितजीवात्मना सहितां श्रीदेवीं हृदयं नीत्वा स्वाञ्जलिगतकुसुमैः तत्र तां संपूज्य, ततः अकुलेन्दुगलितामृतधारारूपिणीः चन्दनकुसुमधूपदीपनैवेद्यशालिकरकमलाः पीतासितश्या-मरक्तशुक्लवर्णाः धरणिवियदनिलानलजललक्षणपञ्चभूतमयीः सर्वावयवसुन्दरीः पञ्चदेवताः देव्यग्रे संस्मृत्य, ताभिः चन्दनाद्युपचारान् श्रीदेव्यै समर्पितान् स्मारं स्मारं पञ्चोपचारमुद्राश्च प्रदर्शिता भावयेत्।

ततो देव्या नासायां गन्धदेवता, श्रोत्रे पुष्पदेवता, नाभौ धूपदेवता, नयने दीपदेवता, जिह्वायां नैवेद्यदेवता इति क्रमेण विलीनाः विभाव्य, मूलविद्यां उच्चरन्, जीवात्मानं श्रीदेवीपादारविन्दमूले लीनं विभाव्य, हृदयगतदेवीरूपं मध्यत्र्यश्रसहितं तत्रैव केवलं ज्योतिर्मयतामापन्नं ध्यायन् संक्षोभिण्यादिनवमुद्राः भावयित्वा, क्षणं न किंचिदपि चिन्तयेत्।

अथ देव्या प्रेरितमानसः सन् पुनः प्रकृतिमालम्ब्य तेजोरूपेण परिणतां परमशिवज्योतिरभिन्न-प्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकां स्वात्माभिन्नां परचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदलकमलात् वहन्नासापुटेन निर्गतां त्रिखण्डमुद्रामण्डितशिखण्डे कुसुमगर्भितेऽञ्जलौ समानीय—

**ॐ ऐं ह्रीं श्रीं हीं श्रीं सौः श्री ललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः।**

## ध्यानम्

**ध्यायेन्निरामयं वस्तु जगत्त्रयविमोहिनीम् । अशेषव्यवहाराणां स्वमिनीं संविदं पराम् ।।**
**उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् । जपाकुसुमसंकाशां पद्मरागमणिप्रभाम् ।।**
**स्फुरत्पद्मनिभां तप्तकाञ्चनाभां सुरेश्वरीम् । रक्तोत्पलदलाकारपादपल्लवराजिताम् ।।**
**अनर्घरत्नखचितमञ्जीरचरणद्वयाम् । पादाङ्गुलीयकक्षिप्तरत्नतेजोविराजिताम् ।।**
**कदलीललितस्तम्भसुकुमारोरुकोमलाम् । नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ।।**
**मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् । अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ।।**
**रोमराजिलतोद्भूतमहाकुचपलान्विताम् । सुवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ।।**
**अनर्घमौक्तिकस्फारहारभारविराजिताम् । नवरत्नप्रभाराजद्ग्रैवेयकविभूषणाम् ।।**
**श्रुतिभूषामनोरम्यकपोलस्थलमञ्जुलाम् । उद्यदादित्यसंकाशताटङ्कसुमुखप्रभाम् ।।**

पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् । स्फुरन्मदनकोदण्डसुभ्रुवं पद्मलोचनाम् ।।

ललाटपट्टसंराजद्रत्नाढ्यतिलकाङ्किताम् । मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ।।

स्फुरच्चन्द्रकलाराजन्मुकुटां च त्रिलोचनाम् । प्रवालवल्लीविलसद्बाहुवल्लीचतुष्टयाम् ।।

इक्षुकोदण्डपुष्पेषु पाशाङ्कुशचतुर्भुजाम् । सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ।।

सर्वतीर्थमयीं दिव्यां सर्वकामप्रपूरिणीम् । सर्वमन्त्रमयीं नित्यां सर्वागमविशारदाम् ।।

सर्वक्षेत्रमयीं देवीं सर्वविद्यामयीं शिवाम् । सर्वयागमयीं विद्यां सर्वदेवस्वरूपिणीम् ।।

सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम्। सर्वाम्नायमयीं देवीं सर्वायतनसेविताम् ।।

सर्वानन्दमयीं ज्ञानगह्वरां संविदं पराम् । एवं ध्यायेत्परामम्बां सच्चिदानन्दरूपिणीम् ।।

इति निजलीलाङ्गीकृतललितवपुषं विचिन्त्य ।

## आवाहनम्

४ हस्रैं हस्क्लीं हस्रौः

महापद्मवनान्तस्थे कारणानन्दविग्रहे। सर्वभूतहिते मातः एह्येहि परमेश्वरि ।।

एह्येहि देवदेवेशि त्रिपुरे देवपूजिते। परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धिदे ।।

देवेशि भक्तसुलभे सर्वावरणसंवृते। यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ।।

बिन्दुपीठगतनिर्विशेषब्रह्मात्मकश्रीमत्कामेश्वराङ्के श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकामावाहयामि नमः।।

नित्यादिकमणिमान्तं श्रीकामेश्वराङ्कोपवेशनं विना श्रीदेवीसमानाकृतिवेषभूषणायुधशक्तिचक्रं ओघत्रयगुरुमण्डलं च वक्ष्यमाणेषु आवरणेषु निजस्वामिन्यभिमुखोपविष्टमवमृश्य

ॐ ऐं ह्रीं श्रीं मूलं आवाहिता भव।।

ॐ ऐं ह्रीं श्रीं मूलं संस्थापिता भव।।

ॐ ऐं ह्रीं श्रीं मूलं सन्निधापिता भव।।

ॐ ऐं ह्रीं श्रीं मूलं संनिरुद्धा भव।।

ॐ ऐं ह्रीं श्रीं मूलं संमुखी भव।।

ॐ ऐं ह्रीं श्रीं मूलं अवकुण्ठिता भव।।

इति मन्त्रैरावाहनादिषण्मुद्राः प्रदर्श्य, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत्। अथ हृदयादिषडङ्गमुद्राः बाणाद्यायुधमुद्राश्च तत्तन्मन्त्रपूर्वकं प्रदर्शयेत्।

## चतुःषष्ट्युपचारपूजा

अथ श्रीपरदेवतायाः चतुष्षष्ट्युपचारानाचरेत्। तेष्वशक्तानां भावनया सामान्यार्घ्योदकात् किञ्चिदम्बाचरणाम्बुजेऽर्पणबुद्ध्या पात्रान्तरे निक्षिपेत्। पुष्पाक्षतान्वाऽर्पयेत्।

**ॐ ऐं ह्रीं श्रीं श्री ललितायै पाद्यं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै आभरणावरोपणं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै सुगन्धितैलाभ्यङ्गं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै मज्जनशालाप्रवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै मज्जनशालामणिपीठोपवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै दिव्यस्नानीयोद्वर्तनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै उष्णोदकस्नानं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै कनककलशच्युतसकलतीर्थाभिषेकं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै धौतवस्त्रपरिमार्जनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै अरुणदुकूलपरिधानं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै अरुणकुचोत्तरीयं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै आलेपमण्डपप्रवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै आलेपमण्डपमणिपीठोपवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै चन्दनागरुकुंकुममृगमदकर्पूरकस्तूरीगोरोचनादि दिव्यगन्धसर्वाङ्गीण-विलेपनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै केशभारस्य कालागुरुधूपं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै मल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुहळीपुन्नागकल्हारमुख्य-सर्वर्तुकुसुममालाः कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै भूषणमण्डपप्रवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै भूषणमण्डपमणिपीठोपवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नवमणिमकुटं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै चन्द्रशकलं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै सीमन्तसिन्दूरं कल्पयामि नमः**

ॐ ऐं ह्रीं श्रीं श्री ललितायै तिलकरत्नं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै कालाञ्जनं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै वाळीयुगलं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै मणिकुण्डलयुगलं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै नासाभरणं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै अधरयावकं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै प्रथमभूषणं (माङ्गल्यसूत्रं) कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै कनकचिन्ताकं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै पदकं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै महापदकं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै मुक्तावलिं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै एकावलिं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै छन्नवीरं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै केयूरयुगलचतुष्टयं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै वलयावलिं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै ऊर्मिकावलिं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै काञ्चीदाम कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै कटिसूत्रं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै सौभाग्याभरणं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै पादकटकं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै रत्ननूपुरं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै पादाङ्गुलीयकं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै एककरे पाशं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै अन्यकरेऽङ्कुशं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै इतरकरे पुण्ड्रेक्षुचापं कल्पयामि नमः
ॐ ऐं ह्रीं श्रीं श्री ललितायै अपरकरे पुष्पबाणान् कल्पयामि नमः

**ॐ ऐं ह्रीं श्रीं श्री ललितायै श्रीमन्माणिक्यपादुके कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै स्वसमानवेषाभिरावरणदेवताभिः सह महाचक्राधिरोहणं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै कामेश्वराङ्कपर्यङ्कोपवेशनं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै अमृतासवचषकं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै आचमनीयं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै कर्पूरवीटिकां कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै आनन्दोल्लासविलासहासं कल्पयामि नमः**

अथ मङ्गळारार्तिकम्-कलधौतादिभाजने कुङ्कुमचन्दनादिलिखितस्याष्टषट्चतुर्दळाद्यन्यतमस्य कमलस्य चन्द्राकारचरुगोलकवत्यां चणकमुद्गजुषि वा कर्णिकायां दळेषु च पयःशर्करापिण्डीकृत-यवगोधूमादिपिष्टोपादानकानि त्रिकोणशिरस्क—डमर्वाकृतीनि चतुरङ्गुलोत्सेधानि घृतपाचितानि नवसप्तपञ्चान्यतमसंख्यानि दीपपात्राणि निधाय तेषु गोघृतं प्रत्येकं कर्षप्रमितं आपूर्य कर्पूरगर्भितां वर्तिकां हृल्लेखया प्रज्वाल्य—

**ॐ ऐं ह्रीं श्रीं श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं**—इति नवाक्षर्यो रत्नेश्वरीविद्यया अभिमन्त्र्य चक्रमुद्रां प्रदर्श्य मूलेनाभ्यर्च्य—

**ॐ ऐं ह्रीं श्रीं जगद्ध्वनिमन्त्रमातः स्वाहा**—इति मन्त्रपूर्वकं गन्धाक्षतादिना घण्टां संपूज्य तां वादयन् जानुचुम्बितभूतलः तत्पात्रं आमस्तकमुद्धृत्य—

**ॐ ऐं ह्रीं श्रीं श्रीललितायै मङ्गळारार्तिकं कल्पयामि नमः।**

**समस्तचक्रचक्रेशीयुते देवि नवात्मिके।**
**आरार्तिकमिदं तुभ्यं गृहाण मम सिद्धये।**

इति नववारं श्रीदेव्या आचूडं आचरणाब्जं परिभ्राम्य दक्षभागे स्थापयेत्।

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः छत्रं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः चामरयुगलं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः दर्पणं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः तालवृन्तं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः गन्धं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः पुष्पं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः धूपं कल्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं श्री ललितायै नमः दीपं कल्पयामि नमः**

अथ नैवेद्यम्—देव्याः पुरतः स्वदक्षिणे चतुरश्रमण्डलं निर्माय तत्र आधारोपरि नैवेद्यं निधाय मूलेन प्रोक्ष्य **वं** इति धेनुमुद्रया अमृतीकृत्य मूलेन त्रिवारं अभिमन्त्र्य आपोशनं दत्वा—

**ॐ ऐं ह्रीं श्रीं श्रीललितायै नैवेद्यं कल्पयामि नमः।**

अथ श्रीललितायै पानीयं उत्तरापोशनं हस्तप्रक्षालनं गण्डूषं आचमनीयं ताम्बूलं च कल्पयेत्।

**ॐ ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः क्रों हस्ख्फ्रें हसौः ऐं**—इति सर्वसंक्षोभिण्यादिनवमुद्राः प्रदर्शयेत्।

षोडश्युपासकास्तु **हस्रैं हस्क्लरीं हस्रौः** इति त्रिखण्डामपि प्रदर्शयेयुः।

## *चतुरायतनपूजा*

**नैर्ऋते च गणेशानं सूर्यं वायव्य एव च। ईशाने विष्णुमाग्नेये शिवं चैव प्रपूजयेत्।।**

## *गणपतिपूजा*

**बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः।**

**ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः।।**

**श्री महागणपतिं ध्यायामि। आवाहयामि। महागणपतये नमः। आसनं समर्पयामि। पाद्यं समर्पयामि। अर्घ्यं समर्पयामि। आचमनीयं समर्पयामि। मधुपर्कं समर्पयामि। स्नानं समर्पयामि। आचमनीयं समर्पयामि। वस्त्रालंकारान् समर्पयामि। यज्ञोपवीतं समर्पयामि। गन्धान् धारयामि।**

| | | | | | |
|---|---|---|---|---|---|
| **ॐ** | **सुमुखाय** | **नमः** | **ॐ** | **धूमकेतवे** | **नमः** |
| **ॐ** | **एकदन्ताय** | **नमः** | **ॐ** | **गणाध्यक्षाय** | **नमः** |
| **ॐ** | **कपिलाय** | **नमः** | **ॐ** | **भालचन्द्राय** | **नमः** |
| **ॐ** | **गजकर्णकाय** | **नमः** | **ॐ** | **गजाननाय** | **नमः** |
| **ॐ** | **लम्बोदराय** | **नमः** | **ॐ** | **वक्रतुण्डाय** | **नमः** |
| **ॐ** | **विकटाय** | **नमः** | **ॐ** | **शूर्पकर्णाय** | **नमः** |
| **ॐ** | **विघ्नराजाय** | **नमः** | **ॐ** | **हेरम्बाय** | **नमः** |
| **ॐ** | **विनायकाय** | **नमः** | **ॐ** | **स्कन्दपूर्वजाय** | **नमः** |

**महागणपतये नमः नानाविधपरिमलपत्रपुष्पाणि समर्पयामि।**

**ॐ ऐं ह्रीं श्रीं गणपति मूलं महागणपतिश्रीपादुकां पूजयामि तर्पयामि नमः।** इति त्रिः संतर्पयेत्।

**ॐ ऐं ह्रीं श्रीं क्लीं द्वि। उं । सूर्यचक्रे जालन्द्रपीठे षष्टीशनाथदशारचतुर्धशारचक्र बिध्यातत्वतिकृन्यज्ञान शक्ति कामराजात्मक कामकलास्वरूप वज्रेश्वरी विष्णवात्मशक्ति श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सौः। त्रि । मं सोमचक्रे पूर्णगिरिपीठे गह्वरे उड्डीशनाथाष्टारषोडशारचतुरश्रचक्र शिवतत्व संहारकृत्य क्रियाशक्ति शक्तिबीजात्मक परापरशक्ति स्वरूप भगमालिनीरुद्रात्मशक्ति श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं प्र। क्लीं द्वि। सौः त्रि।। अं उं मं परब्रह्मचक्रे महाड्याणपीठे चर्यानन्दनाथ समस्तचक्र सपरिवार परमतत्व सृष्टिस्थिति संहारकृत्येच्छा ज्ञान क्रियाशान्तशक्ति वाग्भवकामराजशक्ति बीजात्मक परमशक्ति स्वरूप श्रीमहात्रिपुरसुन्दरी ब्रह्मात्मशक्ति श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं अं अग्निमण्डलाय धर्मप्रददशकलात्मने कलाकलिताय ऋग्वेदमयमण्डलान्तर्गतात्मने सामान्यार्घ्यमाधाराय नमः** इत्यस्त्रक्षालितमाधारं संस्थाप्य।

**ॐ ऐं ह्रीं श्रीं ऐं प्र अं अग्निमण्डलाय धर्मप्रददशकलात्मने विशेषार्घ्यपात्राधाराय नमः।** इत्यस्त्रक्षालितं आधारं संस्थाप्य।

**ॐ ऐं ह्रीं श्रीं यं रं लं वं शं षं सं हं ळं क्षं अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम्।। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमडलाय नमः। वह्नेदशकला इहागच्छतागच्छत** इति पूज्य। अग्निमण्डलं विभाव्य पश्चिमादिप्रादक्षिण्येन

| | |
|---|---|
| **ॐ ऐं ह्रीं श्रीं यं धूम्रार्चिष्कलायै नमः** | **ॐ ऐं ह्रीं श्रीं षं सुश्री कलायै नमः** |
| **ॐ ऐं ह्रीं श्रीं रं ऊष्मा नमः** | **ॐ ऐं ह्रीं श्रीं सं सूरूपा नमः** |
| **ॐ ऐं ह्रीं श्रीं लं ज्वलनी नमः** | **ॐ ऐं ह्रीं श्रीं हं कपिला नमः** |
| **ॐ ऐं ह्रीं श्रीं वं ज्वालिनी नमः** | **ॐ ऐं ह्रीं श्रीं ळं हव्यवाहिनी नमः** |
| **ॐ ऐं ह्रीं श्रीं शं विस्फुलिंगनी नमः** | **ॐ ऐं ह्रीं श्रीं क्षं कव्यवाहिनी नमः** |

इत्याधारे दशकला सम्पूज्य।

**ऐं ह्राः अस्त्राय फट्।।**

**ॐ ऐं ह्रीं श्रीं उं अर्कमण्डलाय अर्थप्रदद्वादशकलात्मने कलाकलिताय यजुर्वेदमयमण्डलान्तगतात्मने पात्राय नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं द्वि उं सूर्यमण्डलाया धर्मप्रदद्वादशकलात्मने विशेषार्घ्यपात्राय नमः।**

**ॐ ऐं ह्रीं श्रीं ह्रीं ऐं महालक्ष्मीश्वरी परमस्वामिनी ऊर्ध्वशून्यप्रवाहिनी सोमसूर्याग्नि भक्षिणी परमाकाशभासुरे आगच्छागच्छ विशविश प्रतिगृहण प्रतिगृहण हुं फट् स्वाहा।** इति पुष्पाञ्जलिं विकीर्य

**कं भं, खं वं, गं फं, घं पं, ङं नं, चं धं, छं दं, जं थं, झं तं, ञं णं, टं ढं, ठं डं, ॐ ऐं ह्रीं श्रीं आसत्येन रजसा वर्तमानोनिवेशयन्नमृतं मर्त्यं च हिरण्येन सवितारथेना देवो याति भुवनाविपश्यन्।**

**ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हमलवरयूं** सूर्यमण्डलं विभाव्य। पश्चिमादिप्रादक्षिण्येन।

**ॐ ऐं ह्रीं श्रीं कं भं तपिनी कलायै नमः**

**ॐ ऐं ह्रीं श्रीं खं बं तापिनी कलायै नमः**

**ॐ ऐं ह्रीं श्रीं गं फं धूंम्रा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं घं पं मरीचि कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ङं नं ज्वलिनी कलायै नमः**

**ॐ ऐं ह्रीं श्रीं चं धं रुचि कलायै नमः**

**ॐ ऐं ह्रीं श्रीं छं दं सुषुम्ना कलायै नमः**

**ॐ ऐं ह्रीं श्रीं जं थं भोगदा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं झं तं विश्वा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ञं णं बोधिनी कलायै नमः**

**ॐ ऐं ह्रीं श्रीं टं ढं धारिणी कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ठं डं क्षमा कलायै नमः**

इति द्वादशकला सम्पूज्य। **ॐ ऐं ह्रीं श्रीं ऐं अस्त्राय फट्।**

**हंसश्शुचिषद्वसुरन्तरिक्षसद्धोतारेदिषदथिर्रदोणसत्।**

**नृषद्वरस्सदृतसद्धयोमसदब्जागोजात्रृतजाअद्रिजा ऋतं बृहत्। ॐ ऐं ह्रीं श्रीं सौः** त्रि **मं सोममण्डलाय कामप्रद षोडशकलात्मने विशेषार्घ्याऽमृताय नमः।**

सबिन्दु क्षकारादि अकारान्तं प्रतिलोमेन सविन्दु अकारादिक्षरान्तं विलोमेन मातृकायाकर्पूरादिभिः सुरभिः कृतं क्षीरामृतमभिमापूर्य इति वर्धिनीसलिलेन विशेषार्घ्यपात्र मातृकाय प्रतिलोमेन आपूर्य।

अष्टगन्धलोलितं पुष्पं च निधाय नागरखण्डं निक्षिपेत्। **क्लीं** इत्युद्धृत्य शुद्धिलेशं विनिक्षिप्य।

**ॐ ऐं ह्रीं श्रीं मां सोममण्डलाय कामप्रदषोडशकलात्मने कलाकलिताय सामवेदमय मण्डलान्तर्गतात्मने विशेषार्घ्य पात्रामृताय नमः।**

**ॐ ऐं ह्रीं श्रीं अं+अः आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम् भवावाजस्य संगते। सां सीं सूं सैं सौ सः**

**समलवरयूं सोमस्य षोडशकला इह आगच्छागच्छा।** इति सम्पूज्य। सोममण्डलं विभाष्य।

पश्चिमादिप्रादक्षिण्येन।

**ॐ ऐं ह्रीं श्रीं अं अमृता कलायै नमः**

**ॐ ऐं ह्रीं श्रीं आं मानदा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं इं पूषा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं लृं चन्द्रिका कलायै नमः**

**ॐ ऐं ह्रीं श्रीं लॄं कान्ति कलायै नमः**

**ॐ ऐं ह्रीं श्रीं एं ज्योत्स्ना कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ईं तुष्टि कलायै नमः**

**ॐ ऐं ह्रीं श्रीं उं पुष्टि कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ऊं रति कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ऋं धृति कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ॠं शशिनि कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ऐं श्री कलायै नमः**

**ॐ ऐं ह्रीं श्रीं ओं प्रीति कलायै नमः**

**ॐ ऐं ह्रीं श्रीं औं अंगदा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं अं पूर्णा कलायै नमः**

**ॐ ऐं ह्रीं श्रीं अः पूर्णामृता कलायै नमः**

इति षोडशकला सम्पूज्य।

**ॐ पतिक्देवताभ्यो नमः।**

**ॐ जूं स्वाहा।** इति अष्टवारं जपित्वा तत्र विशेषार्घ्यामृते स्वाग्रादि प्रादक्षिण्येन अ-क-थादिषोडशवर्ण रेखात्रयम् त्रिकोणे विलिख्य।

तदनन्तः स्वाग्रादि कोणेषु प्रादक्षिण्येन **ह ळ क्ष** मान् विलिख्य।




बहिः मूलखण्डत्रयं। बिन्दौ सबिन्दुं तुरीयस्वरं **(ई)** विलिख्य ततवामदक्षयोः क्रमेण **हंसः नमः** इति विलिख्य।

**ॐ ऐं ह्रीं श्रीं हंसः नमः** इति मन्त्रेण आराध्य चतुरश्रे षडङ्गशक्ति सम्पूज्य।

## पञ्चदशऋचः

**स्वाधिष्टया मधिष्टया पवस्व सोमधारया।।१।। इन्द्राय पातवे सुतः रक्षोहाविश्वचर्षणीरभियोनिमपोहतं दृणास्सधस्थमासदत्।।२।। घरिवोथातमो भव। मंहिष्टोवृत्रहं तमः वर्षिराधो मधोनां।।३।। अभ्यर्षमधानां। देवानां वीतिमन्धसा। अभिवाजस्तुतश्रवः।।ॐ ऐं ह्रीं श्रीं।। त्वामच्छाचरामसि तदिदर्थं दिवे दिवे। इन्धोत्वेन आशसः।।५।। विष्णुर्योनिं कल्पयतु। त्वष्टा रूपाणि विशतु। आसिञ्चतु प्रजापतिः। धाता गर्भं दधातु ते।।६।। गर्भं देहि सिनीवालि गर्भं देहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्त्रजा।।७।। हिरणमयीअरणी यन्निर्मन्थते अश्विना। तं ते गर्भं हवामहे। दशमे मासि सूतवे।।८।। त्रिभिष्वं देवसवितर्वर्षिष्टैस्सोमधामभिः। अग्ने दक्षैः पुनीहि नः।।९।। पुनन्तु मां देवजनाः पुनन्तु वसवो धिया। विश्वेदेवाः पुनीत मा जातवेदाः पुनीहि मा।।१०।। प्रप्यायस्व प्रस्यन्दस्व सोमविश्वेभिरंशुभिः। देवेभ्य उत्तम हविः।।११।। इमं**

मे गङ्गे यमुने सरस्वती श्रुतुद्रिस्तोमं सचतापरुष्ण्या असिक्न्या मरुद्वृधे वितस्तयार्जीगीये शृणुया सुषोमया। सितासिते सरिते यत्र सङ्गते तत्राप्लुतासेदिवमुत्पतन्ति ये वै तत्त्वां विसृजन्ति धीरास्ती वै जनासो अमृतत्वं भजन्ते।।१२।। तामन्धसानो मनुषोदुरोणे। अत्तमं रथिं सहवीरं वचस्यवे कृतं तीर्थं मुप्रपाणं शुभस्य ती स्थाणुं यथेष्ठामपदुर्मतिं हतिम्।।१३।। शोणामेकमुदकं गामवाजति मां समेकाः विंशतिसूनया भृतं। अनिस्त्रचस्सकृदेवाको अपाभवत् किं स्विकं पुत्रेभ्यः पितराउपावतः इत्यभिमन्त्र्य

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ग्लूं गगन रत्नाय नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्लूं स्वर्ग रत्नाय नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः न्लूं नाग रत्नाय नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः प्लूं पवन रत्नाय नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः म्लूं मर्त्य रत्नाय नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः आनन्दभैरवद्वन्द्वचतुरश्रालनार्चयेत्।

ॐ ऐं ह्रीं श्रीं हसक्षमलवरयूं आनन्दभैरवाय वौषट् तर्पयामि।

ॐ ऐं ह्रीं श्रीं सहक्षमलवरयूं सुधादेव्यै वौषट् तर्पयामि।

तस्मिन् अमृते बिन्दुः त्रकोण षट्कोण वृत्त अष्टारं विलिख्य बिन्दुं मूलेन अभ्यर्च्य।

त्रिकोणस्य अग्रकोणमारभ्य प्रादक्षिण्येन।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं अग्निचक्रे ब्रह्मात्म शक्ति श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः क्लीं सूर्यचक्रे विष्णुवात्म शक्ति श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सौः सोमचक्रे रुद्रात्म शक्ति श्रीपादुका पूजयामि नमः।।

बिन्दौ ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं क्लीं सौः परब्रह्मचक्रे परब्रह्मात्म श्रीपादुकां पूजयामि नमः।।

षटकोणे

ऐं प्र ह्रां हृदयदेवी हृदय शक्ति श्रीपादुकां पूजयामि नमः।।

क्लीं द्वि ह्रीं शिरोदेवी शिरः श्रीपादुकां पूजयामि नमः।।

सौः त्रि ह्रूं शिखादेवी शिरवा श्रीपादुकां पूजयामि नमः।।

ऐं प्र ह्रैं कवचदेवी कवच श्रीपादुकां पूजयामि नमः।।

क्लीं द्वि ह्रौं नेत्रदेवी नेत्र श्रीपादुकां पूजयामि नमः।।

सौ त्रि हः अस्त्रदेवी अस्त्रा श्रीपादुकां पूजयामि नमः।।

अष्टारेषु

**ॐ ऐं ह्रीं श्रीं अं कं खं गं घं ङं असितांग भैरवसमेत आं ब्राह्मी देवी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं इं चं छं जं झं ञं रूरू भैरवसमेत ईं माहेश्वरी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं उं टं ठं डं ढं णं चण्ड भैरवसमेत ऊं कौमारी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऋं तं थं दं धं नं क्रोध भैरवसमेत ॠं वैष्णवी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं लृं पं फं बं भं मं उन्मत्त भैरवसमेत ॡं वाराहि श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं एं यं रं लं वं कपालि भैरवसमेत ऐं माहेन्द्री देवी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ओं शं षं सं भीषण भैरवसमेत औं चामुण्डा श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं अं हं ळं क्षं संहार भैरवसमेत अः महालक्ष्मी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** मूल**१६ तां चिन्मयीमानन्दलक्षणामृतकलाशसित पद्महस्तद्वयां (पिशित) प्रसन्नां देवीं पूजयामि स्वाहा** इति सुधादेवीमभ्यर्च्य। तदर्घ्यामृतं किञ्चित् पात्रान्तेरेण

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वषट्** इति उद्धृत्य
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः फट्** इति सम्प्रक्ष्य
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्वाहा** इति तत्रैव निक्षिप्य
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः** इति पुष्पंदत्वा
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हुं** इति अवकुण्ठ्य
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलेन** इति गालिन्यानिरीक्ष्य
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वौषट्** इति धेनुमुद्रयामृतीकृत्य
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** ऐं इति योनिमुद्रया नत्वा
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** मूलेन सप्तवारमभिमन्त्र्य।।

## सुधादेवी यजनम्

सुधादेवी प्राणप्रतिष्ठां कृत्वा।।

श्रीयन्त्र के सामने तथा अपने दाहिने हाथ से भूमिपर बिन्दु त्रिकोण षट्कोण वृत्त चतुरश्र मत्स्यमुद्रया लिखे उसे फूल से मूल मन्त्र से १६ बार अर्चना करें तत्पाश्चात् एक सुलक्षण नौ साल की कन्या, यथासम्भव वस्त्र-आभरण देकर उसे अलंकृत कर बिठावें उपासक अपने दाहिने हाथ में चन्दन, कुंकुम अक्षत आदि लेकर उस कन्या को सुधा देवी के रूप में भावना कर अपने हाथ को उस कन्या के सिर पर रखकर ''चर्मानुवाकम्'' नामक मन्त्र को पाठ करें तत्पश्चात् प्राणप्रतिष्ठा करें तत्पश्चात् उस विशेषार्घ्य पात्र को उस कन्या के हाथ में दे उसे उस पात्र को अपने दहिने जाँघ पर रखने के लिए कहे तथा अपने दाहिने हाथ से उस पात्र को छिपाने के लिए कहे तत्पश्चात् निम्नलिखित षोडशोपचार पूजा करें। चर्मानुवाकम् मन्त्र पुटे सं ३२८ द्रष्टव्यम् षोडशोपचारं कुर्यात्।

ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः ध्यायामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः आवाहयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः आसनं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः पाद्यं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः अर्घ्यं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः आचमनीयं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः मधुपर्कं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः स्नानं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः आचमनीयं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः वस्त्रालङ्कारान् कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः यज्ञोपवीतं कल्पयामि
ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः गन्धं कल्पयामि
पुष्पाणि पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ॐ मायायै नमः
ॐ ऐं ह्रीं श्रीं ॐ मायाकलायै नमः
ॐ ऐं ह्रीं श्रीं ॐ विध्यायै नमः
ॐ ऐं ह्रीं श्रीं ॐ रौद्र्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ दुर्गायै नमः
ॐ ऐं ह्रीं श्रीं ॐ कालिकायै नमः
ॐ ऐं ह्रीं श्रीं ॐ पातालभैरव्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ नक्षत्रमालाभूषणायै नमः
ॐ ऐं ह्रीं श्रीं आं आदित्यकलायै नमः
ॐ ऐं ह्रीं श्रीं सं सोमकलायै नमः
ॐ ऐं ह्रीं श्रीं अं अंकारककलायै नमः
ॐ ऐं ह्रीं श्रीं बुं बुधकलायै नमः
ॐ ऐं ह्रीं श्रीं बृं बृहस्पातिकलायै नमः
ॐ ऐं ह्रीं श्रीं शुं शुक्रकलायै नमः
ॐ ऐं ह्रीं श्रीं शं शनैश्चरकलायै नमः
ॐ ऐं ह्रीं श्रीं रां राहुकलायै नमः
ॐ ऐं ह्रीं श्रीं कें केतुकलायै नमः
ॐ ऐं ह्रीं श्रीं कुं कुजकलायै नमः
ॐ ऐं ह्रीं श्रीं औं घटेब्रह्मणे नमः
ॐ ऐं ह्रीं श्रीं औं रसेविष्णवे नमः
ॐ ऐं ह्रीं श्रीं औं बूभ्दुदेरुद्रायै नमः
ॐ ऐं ह्रीं श्रीं औं नादेईशानायै नमः
ॐ ऐं ह्रीं श्रीं औं आमेदेसदाशिवायै नमः

एवं घटे सुदेवीं च पूजयेत्।

ॐ ऐं ह्रीं श्रीं सुधादेव्यै नमः धूपमाघ्रापयामि। दीपं दर्शयामि [१]नैवेद्यं समर्पयामि मध्ये मध्ये पानीयं उत्तरापेशनं हस्तप्रक्षालनं पादप्रक्षालनं आचमनीयं ताम्बूलं च समर्पयामि कर्पूरनीराञ्जनं दर्शयामि मन्त्रपुष्पं प्रदक्षिणनमस्कारान् समर्पयामि समस्तराजोपचारान् देवोपचारान् समर्पयामि।

अनया पूजया भगवती सर्वदेवात्मकः श्रीसुधादेवी सुप्रीतासुप्रसन्नावरदाभवतु।

विशेषार्घ्यपात्रं करेण संस्पृश्य।

---

१. नैवेद्यम्— (१) महानैवेद्यम् (२) गुडान्नं (३) दधियान्नम् (४) माषापूपं (५) द्राक्षाफलं (६) मिश्री (७) मधु (८) नारिकेलं (९) फलादि (१०) ताम्बूलं पुगीफलं।

**ॐ ऐं ह्रीं श्रीं ब्रह्माण्डखण्डसंभूतं आशेषरससंहृतं अपूरितं महाकायं पीयूषरसमाहरे।**

**ॐ ऐं ह्रीं श्रीं अकार उकार मकार बिन्दुनादात्मकं ब्रह्मविष्णु रुद्रेश्वर सदाशिवात्मक पञ्चाशत्कलात्मने प्रणवमण्डलाय नमः।**

**ॐ ऐं ह्रीं श्रीं हस्त्रैं हस्त्रक्लीं हसौः ॐ नमो भगवती तिरस्करिणी महामाये महानिद्रेसकलरिपुपशुजनमनश्चक्षुश्रोत्रं तिरस्करणं कुरु कुरु हुं फट् स्वाहा** (इतिवामकरे) **तिरस्करिणीं सप्त वारं जपेत्।**

तत्पश्चात् उस कन्या के हाथ से उस विशोषार्घ्य पात्र को अपनावे सुधा देवी को उद्वास करें— उन कन्या को मिष्टान्न-भोजन करावें अर्ध्य पात्र को अपने दहिने हाथ से ढँक के निम्नलिखित मन्त्र का पाठ करे (यदि कन्या को रखने में असमर्थ हो तो विशोषार्घ्य पात्र को श्रीयन्त्र के दहिने भाग में रखकर प्राणप्रतिष्ठा करें किसी कन्या को भोजन करावें)

**संज्ञानं विज्ञानं प्रज्ञानं जानदभि जानत्।**

**सङ्कल्पमानं प्रकल्पमानमुपकल्पमानमुपकक्लृप्तं क्लृप्तं श्श्रेयोवसीय आयथ्सं भूतं भूतं।**

**चित्रः केतुः प्रभानाभान् थ्संभान्। जोत्रिष्मा तेजस्वाना तपँ स्तपन्नभितपन्न। रोचनोरोचमान-श्शोभनश्शोभमानः कल्याणः। दर्शादृष्टा दर्शताविश्वरूपा सुदर्शना। आप्यामानाप्याय मानाप्याय सूनृतेरा। आपूर्यमाणा पूर्यमाणा पूरयन्ती पूर्णापौर्ण-मासी। दाताप्रदाता नंदोमोदः प्रमोदः। आवेशयन्निवेशयन् संवेशयन् स्संशान्ति शान्ति आभवन् प्रभवन् संभवन्संभूतो भूतः विष्टुतं प्रस्तुतं संस्तुतं कल्याणं विश्वरूपं शुक्रममृतं तेजस्विनो तेजस्सपृद्ध।**

**सुधारवतान् समायातु विचिन्त्येन तु वामके।**

**ॐ ऐं ह्रीं श्रीं हस्त्रौं हस्त्रक्लीं हस्त्रौः ओं नमो भगवती तिरस्करिणी महामाये महानिद्रे सकलरिपुपशुजन मनः चक्षुः श्रोत्रं तिरस्करणं कुरु कुरु हुं फट् स्वाहा।** इति सप्तवारं जपित्वा।

*तत्पश्चात् इस घट को श्रीयन्त्र के आगे रखकर हाथ से स्पृष्ट करते हुए निम्नलिखित ध्यान आदि मन्त्र का पाठ करे।*

ध्यानम्

**नीलन्तुरंगमधिगुह्य विराजमानां नीलांशुकाभरणमाल्यविलेपनाढ्यां ।**
**निद्रापटेन भुवनं नितरोदधाना खड्गायुधा भगवती परिपातु सा नः।।** इति ध्यात्वा।।

## शापविमोचनम्

**ॐ ऐं ह्रीं श्रीं सूर्यमण्डलसंभूतो वरुणानवमध्यगे। अमांबीजमये देवी शुक्रशापविमोचय।।**

**ॐ ऐं ह्रीं श्रीं ॐ ह्रीं ॐ नमो भगवती वारुणीजलमूर्तये ग्रामेश्वरीक्रमेण पथिक्देवताभ्यो गृहण गृहण सर्वदीपान् मोचय मोचय सर्वदोषमोचिकायै स्वाहा।**

इति शुक्रशापविमोचनम्।

ॐ ऐं ह्रीं श्रीं ॐ गोपालं वटुकं चैव गणनाथ महेश्वरी सर्वशापनिवृत्यर्थं शुक्रशापविमोचयेत्।

शुक्रं तेअन्यद्धयजतं ते अन्यद्विषुरूपे अहनि द्यौरिवासि। विश्वा हि माया अवसिस्वधावोभद्रा ते पूषन्त्रि हरातिरस्तु।

ॐ ऐं ह्रीं श्रीं शुक्रशापानां ओं ऐं ह्रीं श्रीं क्लीं अमोघास्त्रेण ओं ऐं ह्रीं श्रीं सौः मोचय मोचय हुं फट् स्वाहा।

ॐ ऐं ह्रीं श्रीं ह्स्त्रां ह्स्त्रीं ह्स्त्रूं ह्स्त्रैं ह्स्त्रः अमृते अमृतोद्भवे अमृतेश्वरी अमृतवर्षिणी अमृतस्वरूपिणी अमृतं स्त्रावय स्त्रावय शुक्रशापस्तु रां मोचय मोचय मोचिकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं ओं जूं सः स्वाहा। इति अष्टवारं जपित्वा।

ॐ ऐं ह्रीं श्रीं ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमत शुरुचोवेन आवह सबुद्धन्या उपमा अस्य विष्ठास्सतश्च योनिमसत-श्चविवसुः।

ॐ ऐं ह्रीं श्रीं ब्रां ब्रीं ब्रूं ब्रैं ब्रौं ब्रः ब्रह्मशापविमोचकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं इदं विष्णुर्विचक्रमे-त्रेधानिदधे पदं समूढमस्यपाँसुरे ॐ ऐं ह्रीं श्रीं वां वीं वूं वैं वौं वः विष्णुशापविमोचकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनं। उर्वारुकमिव बन्धनात्मृत्योर्मुक्षीयमामृतात्। त्वमग्ने रुद्रो असुरो महोदिवस्त्व ँशुद्धो मारुतं पृक्ष ईशिषे। त्वं वातोररुणेर्यासिशं सयस्त्वं पूषाविधतः पासिनुत्मना।

आवोराजानमध्वरस रुद्र ँ होतार ँ सत्ययज ँ रोदस्यो

अग्निपुरातनयित्लोरचित्ता द्धिरण्यरूपमवसे कृणुध्वं।

ॐ ऐं ह्रीं श्रीं रां रीं रूं रैं रौं रः रुद्रशापविमोचकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं ऐ व्लूं झ्रीं जुं सः अमृते अमृतोद्भवे अमृतेश्वरी

अमृतवर्षिणीं अमृतं स्त्रावय स्त्रावय स्वाहा। नमः।

ॐ ऐं ह्रीं श्रीं इदं विष्णुर्विचक्रमे त्रेधानिदधे पदं समूढमस्यपाँसुरे।। क्रां क्रीं क्रूं क्रैं क्रौं क्रः। कृष्णशाप विमोचकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं दां दीं दूं दैं दौं दः दुर्वासशापविमोचकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं वां वीं वूं वैं वौं वः वरुणशापविमोचकायै स्वाहा।

ॐ ऐं ह्रीं श्रीं सूर्यमण्डलसंभूते वरुणानवमध्यगे। अमां बीजंमयेदेवी शुक्रशापविमोचकायै स्वाहा।

मूलेन। नैवेद्यं। योनिमुद्रया नमस्कृत्य।

तत्पश्चात् उस विशोषार्घ्य पात्र को उस स्थान विशेष पर रखे जहाँ यन्त्र पहले ही लिखा हुआ हो

**आण्वादि पशुपाशमोचिनीं आत्मभैरवसुखप्रबोधिनीं गद्यपद्यमधवाग्विलासिनीं आद्यमध्यपरमेश्वरीं भजे। ओस्वाधिष्ठया मधिष्ठया पवस्य सोमधारया। इद्राय पातवे सुतः रक्षोहा-विश्वचर्षणिरभियोनिमपोदतं दृणास्सधस्थमासदत्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हस्ख्फ्रें पथिक्देवदाभ्यो हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ग्राम चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः क्रीध चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः दृष्टि चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्पर्श चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सृष्टि चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धट चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तपनवेद चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः निर्देश चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सर्वजनदृष्टिस्पर्शदोष चण्डालिनी हुं फट् स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पशुपाश चण्डालिनी हुं फट् स्वाहा।**

इत्येकादशदोषन्निरस्य। **कां कीं कूं कैं कौं कः विकारशोषिणि अस्य विकारान् हन हन स्वाहा।**

पान्तदेवताः गन्धपुष्पाक्षतैः कलामृतबिन्दुयुक्तैस्सम्पूज्य।

अथ विशोषार्घ्यपात्रं करेण स्पृष्ट्वा।

**ॐ ऐं ह्रीं श्रीं ॐ ह्रीं हौं नमःशिवाय** इति अष्टवारं जपित्वा

**ॐ ऐं ह्रीं श्रीं ॐ श्लीं पशु हुं फट्** इति अष्टवारमभिमन्त्र्य

**ॐ ऐं ह्रीं श्रीं सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः।**

**भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः।**

**ॐ ऐं ह्रीं श्रीं वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः।**

**ॐ ऐं ह्रीं श्रीं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।**

ॐ ऐं ह्रीं श्रीं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्।

ॐ ऐं ह्रीं श्रीं ईशानस्सर्वविद्यानां ईश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवों।

## वह्निकलाः

ॐ ऐं ह्रीं श्रीं यं धूम्रार्चिषे नमः
ॐ ऐं ह्रीं श्रीं रं ऊष्माय नमः
ॐ ऐं ह्रीं श्रीं लं ज्वलिन्यै नमः
ॐ ऐं ह्रीं श्रीं वं ज्वालिन्यै नमः
ॐ ऐं ह्रीं श्रीं शं विस्फुलिङ्गिन्यै नमः
ॐ ऐं ह्रीं श्रीं षं सुश्रियै नमः
ॐ ऐं ह्रीं श्रीं सं सुरूपायै नमः
ॐ ऐं ह्रीं श्रीं हं कपिलायै नमः
ॐ ऐं ह्रीं श्रीं ळं हव्यवाहिन्यै नमः
ॐ ऐं ह्रीं श्रीं क्षं कव्यवाहिन्यै नमः

ॐ ऐं ह्रीं श्रीं अग्निं दूतं वृणीमहे होतारं विश्ववेदसं अस्य यज्ञस्य सुक्रतुम्। नमः।

## सूर्यकलाः

ॐ ऐं ह्रीं श्रीं कं भं तपिन्यै नमः
ॐ ऐं ह्रीं श्रीं खं बं तापिन्यै नमः
ॐ ऐं ह्रीं श्रीं गं फं धूम्रायै नमः
ॐ ऐं ह्रीं श्रीं घं पं मरीच्यै नमः
ॐ ऐं ह्रीं श्रीं ङं नं ज्वालिन्यैनमः
ॐ ऐं ह्रीं श्रीं चं धं रुच्यै नमः
ॐ ऐं ह्रीं श्रीं छं दं सुषुम्नायै नमः
ॐ ऐं ह्रीं श्रीं जं थं भोगदायै नमः
ॐ ऐं ह्रीं श्रीं झं तं विश्वायै नमः
ॐ ऐं ह्रीं श्रीं ञं णं बोधिन्यै नमः
ॐ ऐं ह्रीं श्रीं टं ढं धारिण्यै नमः
ॐ ऐं ह्रीं श्रीं ठं डं क्षमयै नमः

ॐ ऐं ह्रीं श्रीं आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवी याति भुवना विपश्यन्। नमः।

## सोमकलाः

ॐ ऐं ह्रीं श्रीं अं अमृतायै नमः
ॐ ऐं ह्रीं श्रीं आं मानदायै नमः
ॐ ऐं ह्रीं श्रीं इं पूषायै नमः
ॐ ऐं ह्रीं श्रीं ईं तुष्ट्यै नमः
ॐ ऐं ह्रीं श्रीं उं पुष्ट्यै नमः
ॐ ऐं ह्रीं श्रीं ऊं रत्यै नमः
ॐ ऐं ह्रीं श्रीं ऋं धृत्यै नमः
ॐ ऐं ह्रीं श्रीं ॠं शशिन्यै नमः
ॐ ऐं ह्रीं श्रीं ऌं चन्द्रिकायै नमः
ॐ ऐं ह्रीं श्रीं ॡं कान्त्यै नमः
ॐ ऐं ह्रीं श्रीं एं ज्योत्स्नायै नमः
ॐ ऐं ह्रीं श्रीं ऐं श्रियै नमः
ॐ ऐं ह्रीं श्रीं ओं प्रीत्यै नमः
ॐ ऐं ह्रीं श्रीं औं अङ्गदायै नमः
ॐ ऐं ह्रीं श्रीं अं पूर्णायै नमः
ॐ ऐं ह्रीं श्रीं अः पूर्णामृतायै नमः

ॐ ऐं ह्रीं श्रीं आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम्। भवावाजस्यसङ्गथे। नमः।

## ब्रह्मकलाः (अं ब्रह्मकलाभ्यो नमः)

ॐ ऐं ह्रीं श्रीं कं सृष्ट्यै नमः
ॐ ऐं ह्रीं श्रीं खं ऋद्ध्यै नमः
ॐ ऐं ह्रीं श्रीं गं स्मृत्यै नमः
ॐ ऐं ह्रीं श्रीं घं मेधायै नमः
ॐ ऐं ह्रीं श्रीं ङं कान्त्यै नमः
ॐ ऐं ह्रीं श्रीं चं लक्ष्म्यै नमः
ॐ ऐं ह्रीं श्रीं छं द्युत्यै नमः
ॐ ऐं ह्रीं श्रीं जं स्थिरायै नमः
ॐ ऐं ह्रीं श्रीं झं स्थित्यै नमः
ॐ ऐं ह्रीं श्रीं ञं सिद्ध्यै नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हँसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। नमः। ४ अकाररूपायै सृष्टिकर्त्र्यै ब्रह्मणे नमः।

## विष्णुकलाः (उं विष्णुकलाभ्यो नमः)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः टं जरायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ठं पालिन्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः डं शान्त्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ढं ईश्वर्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः णं रत्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तं कामिकायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः थं वरदायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः दं ह्लादिन्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धं प्रीत्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नं दीर्घायै नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः प्रतद्विष्णुस्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा। नमः। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं उकाररूपाय स्थितिकर्त्रे विष्णवे नमः।

## रुद्रकलाः (मं रुद्रकलाभ्यो नमः)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पं तीक्ष्णायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः फं रौद्र्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः बं भयायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भं निद्रायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मं तन्द्र्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः यं क्षुधायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रं क्रोधिन्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः लं क्रियायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वं उद्गायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः शं मृत्यवे नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। नमः। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मं मकारूपाय संहारकर्त्रे रुद्रेभ्यो नमः।

## ईश्वरकलाः (यं बिन्देश्वरी कलाभ्यो नमः)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः षं पीतायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हं अरुणायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सं श्वेतायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः क्षं असितायै नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवाँसः समिन्धते। विष्णोर्यत्परमं पदम्। नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः यं गायत्री विन्दुरुपाय तिरोधानकर्त्र्यै ईश्वरकलायै नमः।।

## सदाशिवकलाः (हं सदाशिवकलाभ्यो नमः)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं निवृत्त्यै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः लृं परायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः आं प्रतिष्ठायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः लॄं सूक्ष्मायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः इं विद्यायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः एं सूक्ष्मामृतायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ईं शान्त्यै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ज्ञानायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं इन्धिकायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं ज्ञानामृतायै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऊं दीपिकायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः औं आप्यायिन्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऋं रेचिकायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं व्यापिन्यै नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॠं मोचिकायै नमः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अः व्योमरूपायै नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिँशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्त्रजा।।नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं/१६ त्रिपुरसुन्दरी कलाभ्यो नमः।

हं नामरूपमायानुग्रहकर्त्र्यै सदाशिवायै नमः।

इति ८८ कलाः सम्पूज्य

## *विशेषार्ध्यप्राणप्रतिष्ठाविधिः*

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{१६}$ अस्य श्री महात्रिपुरसुन्दरीमुद्दिश्य विशेषार्घ्य प्राणप्रतिष्ठा महा मन्त्रस्य ब्रह्मविष्णु महेश्वर ऋषिः ऋग्यजुस्साम अथर्वाणिच्छन्दाँसि प्राणशक्तिः परादेवता। आं बीजं। ह्रीं शक्तिः। क्रों कीलकं। प्राणप्रतिष्ठार्थेजपे विनयोगः बीजेन करषडंगन्यासः।

ध्यानम्।

रक्तांबोधिस्थपोतोल्लसिदरुणसरोजादिरूढाकराब्जैः पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्चबाणान्। बिभ्राणासृक्कपालं त्रिणयनलसितापीनवक्षोरुहाढ्या देवीबालार्कवर्णा भवतु शुभकरी प्राणशक्तिः परा नः।।

लंइत्यदिपञ्चपूजा

ॐ ह्रीं क्रों यं रं लं वं शं षं सं सोहं हंसः क्रों ह्रीं आं श्रीं महात्रिपुरसुन्दर्याः प्रणः इह प्राणाः।।

ॐ ह्रीं क्रों यं रं लं वं श षं सं सोहं हंसः श्रीमहात्रिपुरसुन्दर्याःजीव इह स्थिताः।।

ॐ ह्रीं क्रों यं रं लं वं श षं सं सोहं हंसः श्रीमहात्रिपुरसुन्दर्याःसर्वेन्द्रयाणिः।।

वाङ्मनश्चक्षुश्रोत्रजिह्वाघ्राणप्राणाऽपानव्यानोदान समानाः इहैवागत्य अस्मिन्विशेषार्घ्ये सुरवरं चिरं तिष्ठन्तु स्वाहा।

ॐ ह्रीं ओं हंसः इति प्राणप्रतिष्ठा।

ॐ असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगं। ज्योक्पश्येम सूर्यमुश्चरन्तमनुमते मृडया नः स्वस्ति।।

आवाहिताभव स्थापिताभव-सन्निहताभव सन्निरुद्धाभव-अवकुण्ठिताभव सुप्रीताभर-सुमुखोभव सुप्रसन्नाभव-वरदाभव प्रसीदप्रसीद त्रिपुरेशी जगद्वन्द्ये यावत्पूजावसनकं तावत्वं प्रीतिभावेन सुस्थिरा भव सर्वदा।

अकारादि क्षकारान्तं सबिन्दुमातृकामनुम् त्रिवारं जपेत्।

ॐ ऐं ह्रीं श्रीं मूलं नमः।

१ ऐं अखण्डैकरसानन्दकर परसुधात्मनि। स्वच्छन्दस्फुरणं मातर्निधेहि कुलसुन्दरी।।

२ क्लीं अकुलस्थामृताकारे शुद्धज्ञानकरे परे। अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणी।।

३ सौः त्वद्रूपिण्यैकरसत्वं कृत्वार्घ्ये तत्स्वरूपिणी भूत्वापरामृताकारे मयि चित्स्फुरणं कुरु।।

१.२.३. इति चतुर्थवारं जपेत्।

ऐं ब्लूं झ्रौं जूं सः अमृते अमृतोद्भवे अमृतेश्वरी अमृतवर्षिणी अमृतं श्रावय श्रावय स्वाहा।

ॐ ह्रीं ऐं वद वद वाग्वादिनी ऐं क्लीं क्लिन्ने क्लेदिनी क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मौक्षं कुरु कुरु स्वाहा हसौंः स्हौः।। इति पञ्चवारं जपित्वा। इत्यर्घ्यं संशोधनं।। तदर्घ्या-मृतं ज्योतिर्मयं विभाव्य।।

ऐं प्र।। क्लीं द्वि।। सौं त्रि।। इति त्रिवारं मूलेन नववारं जपेत्।

**ॐ ऐं ह्रीं श्रीं अं आं एं कं चं टं तं पं यं षं प्राणशक्ति श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं इं ईं ऐं खं छं ठं थं फं रं सं अग्निशक्ति श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं उं ऊं ओं गं जं डं दं बं लं हं इलाशक्ति श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऋं ॠं औं घं झं ढं धं भं वं ळं अंबुशक्ति श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं लृं लॄं अं अः ङं ञं णं नं मं शं क्षं क्रियाशक्ति श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वषट्** इति उद्धृत्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः फट्** इति सम्प्रक्ष्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्वाहा** इति तत्रैव निक्षिप्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः** इति पुष्पं दत्वा

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हुं** इति अवकुण्ठ्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलेन** इति गालिन्या निरीक्ष्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वौषट्** इति धेनुमुद्रयामृतो कृत्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं** इति योनिमुद्रया नत्वा

**ॐ ऐं ह्रीं श्रीं श्रीललितामहात्रिपुरसुन्दर्यै नमः। गन्धं समर्पयामि पुष्पं समर्पयामि धूपमाघ्रापयामि दीपं दर्शयामि नैवेद्यं समर्पयामि।।**

इति संपूज्य।

श्रीरुद्र। श्रीपुरुषसूक्तं। श्रीसूक्तं। श्रीनारायणसूक्तं। श्रीदुर्गासूक्तं। श्रीभूसूक्तं श्रीसुधा सूक्तानि। पठेत्।

## गुरुपात्रम्



विशेषार्घ्यपात्रस्य दक्षिणतः। बिन्दु-त्रिकोण वृत्त चतुरश्रात्मकमण्डलं मत्स्यमुद्रया विलिख्य। मूलेन बिन्दुं अभ्यर्च्य

**ॐ ऐं अं अग्निमण्डलाय धर्मप्रददशकलात्मने गुरुपात्रमाधाराय नमः।**

**क्लीं उं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने गुरुपात्राय नमः।**

**हंसः शिवः सोहं-सोहं हंसः शिवः हंसः शिवस्सोहं सोहं हंसः शिवः**

**हस्ख्फ्रें हसक्षमलवरयूं नमः।** इति गुरुपात्रे पुष्पं दत्वा।

तद्दक्षिणतः बिन्दु-त्रिकोण-वृत्तचतुरश्र-मण्डलं मत्स्यमुद्रया विलिख्य ।

मूलेन बिन्दुं अभ्यर्च्य।

**ॐ ऐं अं अग्निमण्डलाय धर्मप्रददशकलात्मने आत्मपात्रमाधाराय नमः।**

**क्लीं उं सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने आत्मपात्राय नमः।**

**ॐ हं सः** इति अत्मपात्रानन्तरे पुष्पं दत्वा।

## *तत्वशोधनम्*

विशेषार्घ्यऽमृतात्किंचित्पात्रान्तरे उद्धृत्य ततः श्रीपात्रमुत्थाप्य गुरु असन्निहिते गुरवे देवतात्मने स्वशिरः पद्मासनस्थिताय श्रीपराबीज (सौः) पूर्वक श्रीपादुके निवेद्य स्थापयेत् पूर्वमण्डले ततः गन्धपुष्पाक्षतानि करे गृहीत्वा।

**ॐ ऐं ह्रीं श्रीं ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदाय कर्तृभ्यो वंशऋषिभ्यो नमो महद्भयः नमो गुरुभ्य स्वगुरु परमगुरु परमेष्ठिगुरु परापरगुरुभ्यो नमः** स्वशिरसि गुरुत्रयं यजेत्।

**ॐ ऐं ह्रीं श्रीं समस्तप्रकट गुप्त गुप्ततरसंप्रदाय कुलकौल निगर्भ रहस्यातिरहस्य परापर रहस्ययोगिनी चक्रदेवताभ्यो नमः श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतिक्रमं मण्डलं वीराद्यष्टचतुष्कषष्टिनवकं वीरावलीपंचकं श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलं वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरं रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः।। श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसश्शिवस्सोहं स्वरूपनिरूपणहेतवे कामेश्वरी अम्बासमेत कामेश्वरानन्दनाथ स्वगुरु श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सोहं हंसश्शिवः स्वच्छप्रकाश विमर्शहेतवे उमादेवी अम्बा समेतपरमेश्वरानन्दनाथ परमगुरवे नमः श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसः शिवस्सोहं सोहं हंसः शिवः स्वात्माराम परमानन्द पञ्जरविलीनतेजसे उमादेवी आम्बासमेत सदाशिवानन्दनाथ परमेष्ठिगुरवे नमः श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं परापरगुरुभ्यो नमः।**

गुरुं सन्निहितो। गुरौ गुरुं नत्वा। गन्ध-पुष्पाक्षत-कुङ्कमानि अभ्यर्च्य गुरुं पादुकामन्त्रेण अभिपूज्य। पात्राणि समर्पयेत्।।

**देवनाथ गुरुस्वामिन्देशिकात्मनाथिका त्राहि त्राहि कृपाशंभ्यो पात्रं पूर्णतरं कुरु पात्रं पूर्णतरं कुरु।**

**हिरण्यपात्रं मघोः पूर्णं दधाति मधव्यो सनीति एकधा ब्रह्मणमुपहरति एकधैव यजमानः आयुस्तेजो दधाति।** इति मन्त्रेण गुरुं समर्पयेत्।।

## *आत्मपात्रम्*

पुनः आत्मपात्रे किंचिद्विशेषार्घ्यमृतमुद्धृत्य, मूलाधारे बालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितं चिदग्निमण्डलं ध्यात्वा

**ॐ ऐं ह्रीं श्रीं कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः।** इति मनसा सम्पूज्य

**ॐ ऐं ह्रीं श्रीं मूलं पुण्यं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं पापं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं कृत्यं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं अकृत्यं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं सङ्कल्पं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं विकल्पं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूल धर्मं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं अधर्मं जुहोमि स्वाहा**

**ॐ ऐं ह्रीं श्रीं मूलं अधर्मं जुहोमि वौषट्।**

**श्रीनाथादि गुरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतिक्रमम् मण्डलं वीराद्यष्टचतुष्कषष्टिनवकं वीरावली पञ्चकं श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।** ततः हृदये

**आत्मानं तर्पयामि।।**
**अन्तरात्मानं तर्पयामि।।**
**जीवात्मानं तर्पयामि।।**
**परमात्मानं तर्पयामि।।**

**इदं पवित्रं अमृतं पिबामि।।**

**भवभेषजं पशुपाशसमुच्चयमिदं कारणं भैरवोदितं चित्तस्वातन्त्रिय सारतत्वात् तस्यानन्दमयतत्वतः। तत्मयत्वाच्छभाविनां भवत्यां तार्हितारसे अहं तापत्रयमरितं इदं तं परमामृतं परं हन्तामयो वह्नौ जुहोमि शिवतत्वः।।**

**ॐ ऐं ह्रीं श्रीं अं+अः ऐं प्र प्रकृत्यहंकार-बुद्धि-मनस्त्वक्चक्षु-श्रोत्रजिह्वाघ्राणवाक्पाणिपादपायूपस्थ शब्दस्पर्शरूपरसगन्धाकाशवाय्वग्नि-सलिलभूम्यात्मना चतुर्विंशति शुद्धा शुद्धतत्वात्मकं ऐं-प्र आत्मत्वेन आणवमलशोधनार्थं स्थूलदेहं परिशोधयामि जुहोमि स्वाहा होष्यामि जुहोति।।** इति स्वीकृत्य।।

**ॐ ऐं ह्रीं श्रीं कं+मं क्लीं द्वि मायाकलाविद्या रागकालनियति पुरुषात्मना सप्त शुद्धतत्वात्मकं क्लीं द्वि विद्यातत्वेन मायिकमलं शोधनार्थं सूक्ष्मदेहं परिशोधयामि जुहोमि स्वाहा।। होष्यामि जुहोति।।**

**ॐ ऐं ह्रीं श्रीं यं+क्ष सौः त्रि शिवशक्ति सदाशिवेश्वर शुद्धविध्यात्मना पंचशुद्धतत्वात्मकं सौः त्रि शिवतत्वेन कार्मीकमलशोधनार्थं कारणदेहं परिशोधयामि जुहोमि स्वाहा होष्यामि। जुहोति।।**

**ॐ ऐं ह्रीं श्रीं अं+क्षं ऐं-प्र क्लीं द्वि सौ त्रि प्रकृत्यहङ्कारबुद्धिमनस्त्वक्चक्षुश्रोत्र-जिह्वाध्राणवाक्पाणिपादपायूपस्थ शब्दस्पर्शरूप-रसगन्धाकाश-वाय्वाग्नि-सलिलभूमि-मायाकला-विद्यारागकालनियति-पुरुष शिवशक्ति सदाशिवेश्वर शुद्धविद्या स्थूलसूक्ष्म कारणदेहाश्रितं परशिवं ॐ ऐं क्लीं सौः सौः क्लीं ऐं $\frac{\text{मूलम}}{\text{१६}}$ सर्वतत्वेन सर्वं देहं सर्वदेहाभिमानिनं जीवात्मानं परिशोधयामि जुहोमि स्वाहा।। होष्यामि जुहोति**

**आर्द्रं ज्वलति ज्योतिरहमस्मि ।**
**ज्योतिर्ज्वलति ब्रह्माहमस्मि ।**
**सोहमस्मि ब्रह्माहमस्मि ।**
**अहमस्मि ब्रह्माहमस्मि ।**
**अहमेवाहं मां जुहोमि स्वाहा ।।**

इति गुरौ संनिहिते होष्यामि

इति सम्प्रार्थ्य गुरोरनुज्ञां लब्ध्वा स्वशिरसि पात्रं निधाय आत्मपात्रं मण्डलं निक्षिपेत्। गुरुध्यानम्।।

इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात्। विशेषार्घ्यपात्रात्किंचित्क्षीरं कारणकलशे निक्षिपेत्।।

## *कामकला न्यासः*

**(नोटः— जब अन्तर याग करेंगे तभी यह न्यास करना चाहिए)**

**गुरु ध्यानम्।।**

**गुरु त्रयम्।**

**अस्य श्रीकामकला न्यासमहामन्त्रस्य नारदरिस्य प्रजापतय ऋषिः अनुष्टुप्पङ्क्यःच्छदांसि महाविद्या महाकामकला महात्रिरस्कण्यो देवता।। ।।ईं बीजं।। ह्री शक्तिः।। क्लीं कीलकं। इष्टार्थे जपे विनियोगः।।**

**क्यां इत्यादि करषडंगन्यासः।**

ध्यानम्

अग्रबिन्दु-परिकल्पितामनामध्यबिन्दु-युगलस्तनद्वयं
नादबिन्दु-रसनाकला स्पदां नौमि ते परशिवेपरां कलाम् ।।
महामन्त्रराजान्तर्बीजं पराख्यं स्वतो न्यस्तबिन्दुं स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत्स त्वमेव ।।
तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ।।

लंइत्यादि पञ्चपूजा।।

**ॐ ऐं ह्रीं श्रीं प्र ईं कां ईं नमः (नासिके) ॐ ऐं ह्रीं श्रीं ईं प्र ऊर्ध्वबिन्दु परिकल्पित पदद्धयाग्नि श्रीपादुकां पूजयामि नमः।।**

**प्र ईं ऐं ईं नमः (ललाट) ॐ ऐं ह्रीं श्रीं ईं प्र ऊर्ध्वबिन्दु परिकल्पित पदद्धयाग्नि श्रीपादुकां पूजयामि नमः।।**

**प्र ईं ईं नमः (नेत्रयोः) ॐ ऐं ह्रीं श्रीं ईं प्र ऊर्ध्वबिन्दु परिकल्पित पदद्धयाग्नि श्रीपादुकां पूजयामि नमः।।**

**प्र ईं लां ईं नमः (श्रोत्रयोः) ॐ ऐं ह्रीं श्रीं ईं प्र ऊर्ध्वबिन्दु परिकल्पित पदद्धयाग्नि श्रीपादुकां पूजयामि नमः।।**

**प्र ईं ह्रीं ईं नमः (ताल्वोः) ॐ ऐं ह्रीं श्रीं ईं प्र ऊर्ध्वबिन्दु परिकल्पित पदद्धयाग्नि श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं द्वि ईं हां ईं नमः (स्तनद्वयं) ॐ ऐं ह्रीं श्रीं ईं द्वि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्रीपादुकां पूजयामि नमः।।**

**द्वि ईं सां ईं नमः (बाहुद्वयं) ॐ ऐं ह्रीं श्रीं ईं द्वि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्रीपादुकां पूजयामि नमः।।**

**द्वि ईं कां ईं नमः (हृदये) ॐ ऐं ह्रीं श्रीं ईं द्वि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्रीपादुकां पूजयामि नमः।।**

**द्वि ईं हां ईं नमः (पार्श्वद्वयं) ॐ ऐं ह्रीं श्रीं ईं द्वि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्रीपादुकां पूजयामि नमः।।**

**द्वि ईं लां ईं नमः (नाभौ) ॐ ऐं ह्रीं श्रीं ईं द्वि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्रीपादुकां पूजयामि नमः।।**

**द्वि ईं ह्रीं ईं नमः (कटिद्वयं) ॐ ऐं ह्रीं श्रीं ईं द्वि अधोबिन्दुद्वयपरिकल्पितपदा व्याद्धनाग्नि श्रीपादुकां पूजयामि नमः।।**

ॐ ऐं ह्रीं श्रीं ईं सां ईं नमः (ऊरुद्वयं) ॐ ऐं ह्रीं श्रीं ईं त्रि।
नादबिन्दुद्वयापरिकल्पितपदाव्याद्धयाग्निष्टोम बिन्दु (युगलस्तनद्वयं) श्रीपादुकां पूजयामि नमः।।
ईं कां ईं नमः (जानुद्वयं) ॐ ऐं ह्रीं श्रीं ईं त्रि।
नादबिन्दुद्वयापरिकल्पितपदाव्याद्धयाग्निष्टोम बिन्दु (युगलस्तनद्वयं) श्रीपादुकां पूजयामि नमः।।
ईं लां ईं नमः (जंधद्वयं) ॐ ऐं ह्रीं श्रीं ईं त्रि।
नादबिन्दुद्वयापरिकल्पितपदाव्याद्धयाग्निष्टोम बिन्दु (युगलस्तनद्वयं) श्रीपादुकां पूजयामि नमः।।
ईं ह्लीं ईं नमः (गुल्फद्वयं) ॐ ऐं ह्रीं श्रीं ईं त्रि।
नादबिन्दुद्वयापरिकल्पितपदाव्याद्धयाग्निष्टोम बिन्दु (युगलस्तनद्वयं) श्रीपादुकां पूजयामि नमः।।
ईं श्रीं ईं नमः (पादद्वयं) ॐ ऐं ह्रीं श्रीं ईं त्रि।
नादबिन्दुद्वयापरिकल्पितपदाव्याद्धयाग्निष्टोम बिन्दु (युगलस्तनद्वयं) श्रीपादुकां पूजयामि नमः।।
एवं त्रियावृत्या व्यापकं कुर्यात्। विशेषमूल मन्त्रं जपेत्।

## *अन्तर्यागः*

**(मानसिक वृत्ति को आज्ञा चक्र पर एकत्रित करे)**

### गुरुध्यानम्

**गुरुपादुकाभ्यां नमः**

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः।
सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि, सोहमस्मि, ब्रह्माहमस्मि।।
श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीराद्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः। गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः।।
वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्। रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः।।
नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम्।।
श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्।
तं तोटकं वार्तिककारमन्या नस्मद्गुरून् सन्ततमानतोऽस्मि।।
नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे। विद्याऽवतारसंसिद्ध्यै स्वीकृतानेकविग्रह।।
नवाय नवरूपाय परमार्थस्वरूपिणे। सर्वज्ञानतमोभेदभानवे चिद्घनाय ते।।

**स्वतन्त्राय दयाक्लृप्तविग्रहाय शिवात्मने । परतन्त्राय भक्तानां भव्यानां भवरूपिणे ।।**

**विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्। प्रकाशानां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ।।**

**पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः । सदा मच्चित्तरूपेण विधेहि भवदासनम् ।।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्ली सौः, हंसः शिवः सोहं, ह्स्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः, अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं हंस, हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं हंसः स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।**

इति मृगीमुद्रया गुरुपादुकामुच्चार्य, धेन्योसुमुख-सुवृत्त चतुरश्रमुद्गरयोन्याख्याभिः पञ्चभिर्मुद्राभिः प्रणमेत्।

**क्षितौ षट्पञ्चाशाद्धसमधिक पञ्चाशदुदके। हुताशे द्वाषष्टिः चतुरधिक पञ्चाशदविले दिविद्विवषट त्रिंशत् मनसिच षष्टिरितिये मूयूखाः तेषाम्प्युपरि तव पादाम्बुजम् (सौन्दर्यलहरी)**

## *महाषोडशीध्यानम्*

**(यह उन्नत विशेषतम विधान है। मन पर सम्पूर्ण नियन्त्रण करें)**

महाषोडशीध्यानम् कुर्यात्

**मूलाधारादाब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेदिति।** अथ हृदि श्रीचक्रं विभाव्य तत्र तामेव स्वीकृतप्रागुक्तरूपां श्रीदेवीं ध्यात्वां वयमाणैः गन्धादिताम्बूलान्तं षडुपचारमन्त्रैः उपचर्य तां पुनस्तेजोरूपां परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिका स्वात्माभिन्नां परिचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदळकमलाद्वहन्ना-सापुटेन निर्गता त्रिखण्डामुद्रामण्डितशिखण्डे कुसुमगर्भिते अञ्जलौ समानीय **ऐं ह्रीं श्रीं ह्रीं श्रीं सौः श्रीललिताया अमृतचैतन्यमूर्तिं कल्पयामि नमः** इति मन्त्रमुच्चारयन् निजलीलाऽङ्गीकृतललितवपुषं विचिन्त्य-**ऐं ह्री श्रीं हस्त्रै हस्क्ल्रीं हसौः।**

## स्वदेहे चक्रपूजाविधि

(अपने स्वदेह एवं श्रीचक्र में तादात्म्य लावे)



हृदि श्रीचक्रं विभाव्य।

ॐ बिन्दुत्रिकोणसंयुक्तं वसुकोणसमन्वितम्। दशकोणद्वयोपेतं भुवनारससमन्वितम्।।
दलाष्टकसमोपेतं दलषोडशकान्वितम्। वृत्तत्रयसमन्वितं भूमिसदनत्रय शोभितम्।।
नमामिललिता चक्रं भक्तानामिष्टदायकम्।

### प्रथमावरणम्

पृथिवी तत्वम् शुक्लेरूण पीतवर्णम्। ५२ मयूखाः आनन्द भैरव-आनन्दभैरवी आदि ज्ञात्वा

### १. मूलाधारादधोगते अकुलसहस्त्रारे भूपुरस्थितदेवीः

पृथिवी तत्व १५६ मयूखाः क्षितौ पदपंचाशत मयूखाः

क्रमेण शुक्ल-अरुण-पीत-वर्णरिकात्रयस्य लकारप्रकृतिक-प्रथिव्यात्मकस्य चतुरस्त्रस्य प्रवेशरीत्या प्रथमरेखायां पश्चिमादिद्वारचतुष्टयदक्षिणभागेषु वाय्वादिकोणेषु च पश्चिमनैर्ऋतयोः पूर्वेशानयोश्च मध्ये क्रमेण।

| | | | |
|---|---|---|---|
| सहस्त्रारम् | ७ | ७ | सहस्त्रकमलम् |
| आज्ञा | ६ | ६ | द्विदलम् |
| विशुद्धी | ५ | ५ | षोडशदलम् |
| अनाहतम् | ४ | ४ | द्वादशदलम् |
| मणिपूरकम् | ३ | ३ | दशदलम् |
| स्वाधिष्टानम् | २ | २ | षड् दलम् |
| मूलाधारम् | १ | १ | चथुर्दलम् |




ॐ ऐं ह्रीं श्रीं अं आं सौः लं त्रौलोक्यमोहनचक्राय त्रिभूपुरचक्रकाय प्रथमचतुरश्ररेखायै नमः।।

ॐ ऐं ह्रीं श्रीं अं अणिमा सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं प्रां प्राकाम्य सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं लं लघिमा सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं भुं भुक्ति सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं मं महिमा सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं इं इच्छा सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ईं ईशित्व सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं प्रां प्राप्ति सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं वं वशित्व सिद्धि श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं सं सर्वकाम सिद्धि श्रीपादुकां पूजयामि नमः



ध्यानम्

एतारक्तप्रभाचिन्तामणिरत्नाभयांचिता। त्रिलोचनाश्चरूकलामैलीध्यायेदभीष्टदाः।।




ॐ ऐं ह्रीं श्रींअं आं सौः लं त्रैलोक्यमोहनचक्राय त्रिभूपुरचक्राय द्वितीय मध्य चतुरश्र अरुणरेखायै नमः।

ॐ ऐं ह्रीं श्रींअं अं असितांग भैरवसमेत अं कं खं गं घं ङं आं ब्राह्मी मातृदेवी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं इं रुं रुरु भैरवसमेत इं चं छं जं झं क्षं ईं महेश्वरी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं उं छं छण्ड भैरवसमेत उं टं ठं डं ढ़ ऊं कौमारी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ॠं क्रों क्रोध भैरवसमेत ॠं तं थं दं धं नं ॠं वैष्णवी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं लृं उं उन्मत्त भैरवसमेत लृं पं फं बं भं लृं वाराही श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं एं कं कपाली भैरवसमेत एं यं रं लं वं ऐं माहेन्द्री श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ओं भीं भीषण भैरवसमेत ओं शं षं सं ओं चामुण्डा श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं अं सं सहार भैरवसमेत अः हं ळं क्षं अः महालक्ष्मी श्रीपादुकां पूजयामि नमः

ध्यानम्

एतावंशदलश्यामाकपालोत्फलधारिणी। बन्धूकपरिघाद्याश्च ध्यायेत्ब्राह्म्यादिमातरः।।




ॐ ऐं ह्रीं श्रीं अं आं सौः लं त्रैलोक्यमोहनचक्राय त्रिभूपुरचक्रायतृतीय चतुरश्रपीतरेखायै नमः।।

ॐ ऐं ह्रीं श्रीं द्रां सर्वसंक्षोभिणी मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं द्रीं सर्वविद्राविणी मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं क्लीं सर्वाकर्षिणी मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ब्लूं सर्ववशङ्करी मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं सः सर्वोन्मादिनी मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं क्रों सर्वमहाङ्कुशा मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें सर्वखेचरी मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं हसौः सर्ववीजा मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ऐं सर्वयोनि मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं हस्रैं हस्क्ल्रीं हस्रौः सर्वत्रिखण्डा मुद्राशक्ति श्रीपादुकां पूजयामि नमः

ध्यानम्

एतारक्तवराभीतिपाशङ्कुशचतुर्भुजा।
रक्तांगीरक्तवसनास्संक्षोभिण्यादिशक्तयः।।

ॐ ऐं ह्रीं श्रीं अं आं सौः त्रिपुराचक्रेश्वरीदेवी श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं अं अणिमासिद्धि श्रीपादुकां पूजयामि नमः

द्रां सर्वसंक्षोभिणीमुद्राशक्ति श्रीपादुकां पूजयामि नमः।

द्रां सर्वसंक्षोभिणीमुद्रां प्रदर्श्य।



७ मूलम्/१६ एताः प्रकटयोगिन्यः त्रैलोक्य-मोहनचक्रेसचक्राः सासनाः समुद्राः ससिद्धयः सशक्तयः सायुधाः सवाहनाः सपरिवाराः सालङ्काराः सचक्रेश्वर्यः परया अपरया परापरया सपर्यया सर्वोपचारैः सम्पूजिताः संतर्पिताः सन्तुष्टिताः सन्तु इति हृदय श्रीचक्र मध्यस्थित देविपादारमूले पूजासमर्पणम्।। इति विभाव्या।।

ॐ ऐं ह्रीं श्रीं शृङ्गाररसात्मिकां ध्यायेत्।

ॐ ऐं ह्रीं श्रीं श्रीललितामहात्रिपुसुन्दर्यै नमः त्रिवारं अर्चयेत्।। इति विभाव्य।।



**ॐ ऐं ह्रीं श्रीं समस्तप्रकटयोगिनीमयूखा श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितपुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवीवामहस्ते** पूजा समर्पणं विभाव्य।

**ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितहृदय श्रीचक्रमध्यस्थित देवीपादारमूले विलीनानि विभाव्य।।**

योनिमुद्रां प्रणमेत्।

**द्वितीयावरणम्**

**ॐ ऐं ह्रीं श्रीं तदुपरिस्थिते विषुवनांनि रक्तवर्णषड्दलपद्मे षोडशदलदेवीः श्वेतवर्णम्**
स कारप्रकृतिक षोडशदलपद्मात्मक चन्द्रस्वरूपे स्रवदमृतरसे षोडशदलकमले देव्याग्रदलमारभ्यवामावृत्तेन।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौं सं सर्वाशापरिपूरकचक्राय षोडशदलचक्राय नमः।।**




**ॐ ऐं ह्रीं श्रीं अं कामाकर्षिणी नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं आं बुद्ध्या नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं इं अहङ्कारा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ईं शब्दा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं उं स्पर्शा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऊं रूपा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऋं रसा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ॠं गन्धा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं लृं चित्ता नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ॡं धैर्या नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं एं स्मृत्या नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं नामा नित्याकलादेवी श्रीपादुकां पूजयामि नमः**

ॐ ऐं ह्रीं श्रीं ओं बीजा नित्याकलादेवी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं औं आत्मा नित्याकलादेवी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं अं अमृता नित्याकलादेवी श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं अः शरीरा नित्याकलादेवी श्रीपादुकां पूजयामि नमः

ध्यानम्

ॐ ऐं ह्रीं श्रीं एताध्यायेत्कलादेवी पाशंकुशकरांबुजा।। रक्तांगी रक्तवसना सर्वाभरणभूषिताः।।



ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः त्रिपुरेश्वरीचक्रेश्वरी (कामाकर्षिणिपुरतः) श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं लं लघिमासिद्धि श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं द्रीं सर्वविद्राविणीमुद्राशक्ति श्रीपादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं द्रीं सर्वविद्राविणी मुद्रां प्रदर्श्य।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम्/१६ एताः गुप्तयोगिन्यः सर्वाशापरिपूरकचक्रे सचक्राः सासनाः .... + सन्तु इति हृदि श्रीचक्रमध्यस्थित देवीपदारमूले पूजासमर्पणम्।। इति विभाव्य।।

ॐ ऐं ह्रीं श्रीं वीररसात्मिकां ध्यात्वा।

ॐ ऐं ह्रीं श्रीं श्रीललितिामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।। त्रिवारण्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम्/१६ समस्तगुप्तयोगिनीमयूखा श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितपुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवीवामहस्ते पूजासमर्पणं विभाव्य।

ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितहृदय श्रीचक्रमध्यस्थित देवीपादारमूले विलीनानि विभाव्य।

योनिमुद्रां प्रणमेत्।

## तृतीयावरणम्

## ३. मूलाधारे चतुर्दले अष्टदलदेवीः







मूलाधारचक्रं। गुदोपरि।।

पृथिवीतत्वं ५६ मयूखाः

आनन्दभैरवीसमेत आनन्दभैरवः

**मूलाधारस्थपद्मे श्रुतिदलललसिते पञ्चवक्त्रां त्रिनेत्रां**
**धूम्राभामस्थितंस्थां सृणिमपि कमलं पुस्तकं ज्ञानमुद्राम् ।**
**बिभ्राणां बाहुदण्डैः सुललितवरदापूर्वशक्त्यावृतां तां**
**मुद्रात्रासक्तचित्तां मधुमदमुदितां साकिनीं भावयामः ।।१।।**

**तवाधारे मूले सह समयया लास्यपरया नवात्मानं मन्ये नवरसमहाताण्डवनटम्।**
**उभाभ्यामेताभ्यमुदयविधिमुद्दिश्य दयया सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम्।।२।।**

**वशषड्दलयुक्तैसंयुगाधारपद्मे नलिनमरुणगात्रं वारणास्यंत्रिनेत्रं**

**अभयवरदहस्तं द्यत् चारुपाशाङ्कुशो करकमलसमेतं चिन्तयेत्विघ्नराजम्।।३।।**

कुण्डलिनी ध्यानं

**ध्यायेत्कुण्डलिनीं सूक्ष्ममूलाधारवासिनीं प्रसुप्तभुजगाकारविद्युत्पटलसन्निभाम् ।**

**तामिष्टदेवतारूपां सार्द्धत्रिवलान्वितां कोटिसौदामनीं भासां स्वयंभुलिङ्गवेष्टिनीम् ।।४।।**

**मूलाधारांबुजारूढापञ्चवक्त्रस्थिसंस्थिता। अङ्कुशादिप्रहरणावरदादि निषेविता ।।५।।**

**ॐ ऐं ह्रीं श्रीं मुद्रौदनासक्तचित्तासां साकिन्यंबा विश्वंबास्वरूपिणी।**

**ॐ ऐं ह्रीं श्रीं सां हंसः मूलाधिष्ठानदेवता। सहितगणनाथस्वरूपिण्यै नमः।**

**ॐ ऐं ह्रीं श्रीं श्रीगणनाथस्वरूपिण्यंबा श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं सां सीं समलवरयूं साकिन्यै नमः।**

**ॐ ऐं ह्रीं श्रीं वं शं षं सं मां रक्ष रक्ष अस्थ्यात्मने नमः।**

इति पायूपस्थमध्यगतचतुर्दलमूलाधरकमलकर्णिकयां साकिनीं न्यस्य तद्दलेषु पूर्ववतदावरणशक्ति न्यसेत्।

**ॐ ऐं ह्रीं श्रीं वं नारदायै नमः। ॐ ऐं ह्रीं श्रीं शं श्रियै नमः।**

**ॐ ऐं ह्रीं श्रीं षं षण्डायै नमः। ॐ ऐं ह्रीं श्रीं सं सरस्वत्यै नमः।**

जपाकुसुममिश्रवर्ण

**वेदान्तवेद्यखिलविश्वमूर्ते विभो विरूपाक्षविशेषशून्यम्।।**

**विश्वेश्वराशेष तु विशेषबन्धो (मूलाधार) कवाटमुद्घाटय कालकाल।।**

हस्तताडनं कृत्वा

**ह कारप्रकृतिक अष्टमूर्त्यात्मक शिवाभिन्ने जपाकुसुममिश्रे श्रष्टपत्रे श्रीदेव्याः पृष्ठदलमारभ्य पूर्वादिक्षु अग्नेयादिविदिक्षु च क्रमेण।**

**ॐ ऐं ह्रीं श्रीं ह्रौं क्लौं सौः। हं सर्वसंक्षोभण चक्राय अष्टदलचक्राय नमः।।**

**ॐ ऐं ह्रीं श्रीं कं खं गं घं ङं अनंगकुसुमा देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं चं छं जं झं अनंगमेखला देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं टं ठं डं ढं णं अनङ्गमदना देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं तं थं दं धं अनङ्गमदनातुरा देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं पं फं बं भं मं अनं गरेखा देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्लीं श्रीं यं रं लं वं अनंगवेगिनी देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्लीं श्रीं शं षं सं अनङ्गांकुशा देवी श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्लीं श्रीं हं ळं क्षं अनङ्गमालिनी देवी श्रीपादुकां पूजयामि नमः।**

ध्यानम्।

**एताध्यायेत्पुस्तकाक्षमालाहस्तारुणप्रभा**

**वेणीकृतलसत्केशाध्यातव्यारक्तकंचुका ।।**

**ॐ ऐं ह्लीं श्रीं ह्लीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वरी (अनङ्गकुसुमाग्रे) श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्लीं श्रीं मं महिमाद्धि श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्लीं श्रीं क्लीं सर्वाकर्षिणी मुद्राशक्ति श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्लीं श्रीं क्लीं सर्वाकर्षिणी मुद्रां प्रदर्श्य।**



**मूलम्/१६ एताः गुप्ततरयोगिन्यः सर्वसंक्षोभण-चक्रेस-चक्रः सासनाः....+ सन्तु इति हृदि श्रीचक्र-मध्यस्थितदेवीपादारमूले पूजां समर्पणम्।।** इति विभाव्य

**ॐ ऐं ह्लीं श्रीं करुणरसात्मिकां ध्यात्वा।**

**ॐ ऐं ह्लीं श्रीं मूलम् श्रीललितामहात्रिरसुन्दरी श्रीपादुका पूजयामि नमः।।** त्रिवारम्

**ॐ ऐं ह्लीं श्रीं मूलम् समस्तगुप्ततरयोगिनीमयूखा श्रीपादुका पूजयामि नमः।।**

**ॐ ऐं ह्लीं श्रीं जीवात्माने आवरणानि सहितं पुष्पपूरितहस्ते हृदय** श्रीचक्रमध्यस्थित देवीवामहस्ते पूजा समर्पणं विभाव्य

**ॐ ऐं ह्लीं श्रीं जीवात्मानं अवारणानि सहित हृदय श्रीचक्रमध्यस्थित देवी पादारमूले विलीनानि विभाव्य।**

योनिमुद्रां प्रणमेत्।

**ॐ ऐं ह्लीं श्रीं स्वाधिष्ठाने षड्दले चतुर्दशारदेवीः।**

## तुरीयावरणम्

## दाडिमीवर्णम्







स्वाधिष्ठानचक्रं लिङ्गमूले अग्नितत्वं। ६२ मयूखा:।

समयांबासमेत संवर्तेश्वर:।।

**स्वाधिष्ठानाख्यपद्मे रसदललसिते वेदवक्त्रां त्रिनेत्रां**
**हस्ताब्जैर्धारयन्तीं त्रिशिखगुणकपालाङ्कुशानाक्तगर्वाम्।**
**मेदोधातुप्रतिष्ठामलिमदमुदितां बन्धिनीमुख्ययुक्तां**
**पीतां दध्योदनेष्ठामभिमतफलदां काकिनीं भावयामः।।१।।**

**तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं तमीडेस संक्तं जननि महतीनां च समयाम्।**
**यदा लोके लोकान्दहति महति क्रोवलिते दयाद्रो या दृष्टिः शिशिरमुपचारं रचयति।।२।।**

बभमयरलसद्यै रक्षरैः क्लृप्तरुचिः करमूंपरिनिविष्टं पङ्कजेपद्मयोनि ।
अभयक्रदहस्तं कुण्डिकामक्षमालाम् दधतमनलवर्णं चिन्तयेत्विश्क्योनिम् ।।३।।
स्वाधिष्टानाम्वुजगता चतुवक्त्रमनोहरा शूलाद्यायुतसम्पन्नापीतक्र्णातिगर्विता ।
मेदोनिष्ठामधुप्रीता बन्दुन्यादिसमन्विता ददयन्नासक्तहृदयाकाकिनीरूपधारिणी।।४।।

ॐ ऐं ह्रीं श्रींकां सोहं स्वाधिष्ठानदेवतायै काकिनीसहितब्रह्मस्वरूपिण्यै नमः। ब्रह्मस्वरूपिण्यंपा देवी श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं कां कीं कमलवरयूं काकिन्यै नमः।।

ॐ ऐं ह्रीं श्रीं बं+लं मां रक्ष रक्ष मेदात्मने नमः।।

इति गुह्यस्तानगत षडदलस्काधिवृानसरिस।

क्रर्णिकाया काकिन्यासः।

तद्वलोषुतदवरण शक्तिः प्रागवन्यसेता

ॐ ऐं ह्रीं श्रीं बं बन्धिन्यै नमः

ॐ ऐं ह्रीं श्रीं भं भद्रकाल्यै नमः

ॐ ऐं ह्रीं श्रीं मं महा मायायै नमः

ॐ ऐं ह्रीं श्रीं यं यमूस्विन्यैवम

ॐ ऐं ह्रीं श्रीं रं रक्ता नमः

ॐ ऐं ह्रीं श्रीं लं लम्बोष्टयै नमः

ध्यानम्।

वेदान्तवेद्यखिलविश्वमूर्ते विभोविरूपाक्षविशेषशून्यम्।।
विश्वेश्वराशेषतु विशेषबन्धो (स्वाधिष्ठान) कवाटंमुद्घाटय काल काल।।

हस्तताडनं कृत्वा।

ई कारप्रकृतिक चतुर्दशभुवनात्मक महामायारूपेदाडिमी प्रसूनसहोदरे चतुर्दशारे देव्याग्रकोणमारभ्य वामावृत्तेन।

ॐ ऐं ह्रीं श्रीं हैं हस्क्लीं हसौः।। षं सर्वसौभाग्यदायकचक्राय चतुर्दशार (मन्वश्रा) चक्राय नमः।।

ॐ ऐं ह्रीं श्रीं कं सर्वसंक्षोभिणी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं खं सर्वविद्राविणी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं गं सर्वाकर्षिणी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं घं सर्वाह्लादिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ङं सर्वसम्मोहिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं चं सर्वस्तम्भिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं छं सर्वजृंम्भिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं जं सवशङ्करी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं झं सर्वरञ्जिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ञं सर्वोन्मादिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं टं सर्वार्थसादिनी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ठं सर्वसम्पत्तिपूरणी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं डं सर्वमन्त्रमयी शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ढं सर्वद्वन्द्वक्षयङ्करी शक्ति श्रीपादुकां पूजयामि नमः।

ध्यानम्।

एता ध्योयेदिक्षुचापधराहस्ताविद्रुमप्रभा।।
रक्ताङ्गीरक्तवसना सर्वाभरणभूषिताः।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हैं ह्क्लीं हसौः त्रिपुरवासिनी चक्रेश्वरी (सर्वसंक्षोभिण्यग्रे) श्रीपादुकां पूजयामि नमः।



ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ईं ईशित्वसिद्धि श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्लूं सर्ववशङ्करी मुद्राशक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्लूं सर्ववशङ्करी मुद्रां प्रदर्श्य।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{\text{१६}}$ एताः सम्प्रदाययोगिन्यः सर्वसौभाग्यदायकचक्रे सचक्राः सासनाः....हृसन्तु इति हृदय श्रीचक्रमध्यस्थितदेवीपादारमूले पूजासमर्पणम् विभाव्य।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भयानक रसात्मिकां ध्यात्वा।



ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{\text{१६}}$ श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।। त्रिवारम्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{\text{१६}}$ समस्तसम्प्रदाययोगिनीमयूखा श्रीपादुकां पूजयामि नमः।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः जीवात्मानं आवरणानि सहित पुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवीवामहस्ते पूजा समर्पणम्।।** विभाव्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः जीवात्मानं आवरणानि सहित हृदयमध्यस्थित देवीपादारमूले विलीनानि विभाव्य।**

योनिमुद्रां प्रणमेत्।

## पञ्चमावरणम्

## ५ *मणिपूरके दशदले बहिर्दशारदेवीः।*

### *सिन्दूरवर्णम्।*







मणिपूरकचक्रम् नाभौ।।

जलतत्वं ।। ५२ मयूखाः।।

सौदामिन्यम्बासहित मेघेश्वरः।।

दिक्पत्रे नाभिपद्मे त्रिवदनलसितां दंष्ट्रिणीं रक्तवर्णो
शक्ति दम्भोलिदण्डावभयमपि भुजैर्धारयन्तीं महोग्राम्।।
डामर्याद्यैः परीतां पशुजनभयदां मासधात्वेकनिष्ठां
गौडान्नासक्तचित्तां सकलसुखकरीं लाकिनीं भावयामः।।१।।

तटित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तव श्याम मेवं कमपि मणिपूरकैशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ।।२।।

डाद्यैः फान्तगतैः प्रकल्पितदलपद्मे निविष्टं हरिं
मार्ताण्डद्धभुतिमादिपुरूषमजं नारायणं चिन्मयम् ।
आर्तां भोजगदारिशङ्खममलं पीताम्बरं कौस्तुभम्
श्रीवत्साङ्कितइन्द्र नीलसदृशं ध्यायेतजगन्मोहनम्।।३।।

मणिपूराब्जनिलयावदनत्रय-सम्भूता।
वज्रादिकायुधोपेताडामर्यादिभिरावृता।।४।।

रक्तवर्णामांसनिष्ठागुडान्नप्रीतमानसा
समस्तभक्सुखदा लाकिन्यम्बा स्वरूपिणी।।५।।

ॐ ऐं ह्रीं श्रीं लां हंस स्सोहं मपिपुरकाधिष्ठानदेवतायै लाकिनीसहितवैष्णवस्वरूपिण्यै नमः।।

वैष्णवस्वरूपिण्यम्बा श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं लां लीं लमलकरयूं काबिन्यै श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं डां+फं मां रक्ष रक्ष मांसात्मानं श्रीपादुकां पूजयामि नमः।।

इति नाभिगत दशदलमणिपूरक सरोजकणिका। यां लाकिनीं न्यसेत्।

तद्दलेषु पूर्ववत् त्परिवारशक्तिः न्यसेत्।

ॐ ऐं ह्रीं श्रीं डं डामयैं नमः।
ॐ ऐं ह्रीं श्रीं ढं ढङ्कारिण्यै नमः।
ॐ ऐं ह्रीं श्रीं णं णार्णायै नमः।
ॐ ऐं ह्रीं श्रीं तं तमस्यै नमः।
ॐ ऐं ह्रीं श्रीं थं स्थाण्व्यै नमः।
ॐ ऐं ह्रीं श्रीं दं दाक्षायण्यै नमः।
ॐ ऐं ह्रीं श्रीं धं धात्र्यै नमः।
ॐ ऐं ह्रीं श्रीं नं नार्यै नमः।
ॐ ऐं ह्रीं श्रीं पं पार्वत्यै नमः।
ॐ ऐं ह्रीं श्रीं फं फद्कारिण्यै नमः।

ध्यानम्

**वेदान्त-वेद्याखिल-विश्वमूर्ते विभो विरूपाक्ष विरोषशून्यम्।**
**विश्वेश्वराशेषंतु विशेषबन्दौ (मणिपूरक) कवाटमुद्घाटय कालकाल।।**

हस्तताडनं कृत्वा।।

**एं। एकारप्रकृतिक दशावतारात्मकविष्णुस्वरूपे प्रभापराभूतसिन्दूरे बहिर्दशारे देव्याग्रकोणमारभ्य प्रदक्षिण्येन।**

**ॐ ऐं ह्रीं श्रीं हसैं हस्क्लीं हस्सौः।। एं सर्वार्थसाधकचक्राय बहिर्दशारचक्राय नमः।**

**ॐ ऐं ह्रीं श्रीं तं सर्वसिद्धिप्रदा देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं थं सर्वसम्पत्प्रदा देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं दं सर्वप्रियङ्करी देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं धं सर्वमङ्गलकारिणी देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं नं सर्वकामप्रदा देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं पं सर्वदुःखविमोचिनी देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं फं सर्वमृत्युप्रशमनी देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं बं सर्वविघ्ननिवारणी देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं भं सर्वाङ्गसुन्दरी देवी श्रीपादुकां पूजयामि नमः**
**ॐ ऐं ह्रीं श्रीं मं सर्वसौभाग्यदायिनी देवी श्रीपादुकां पूजयामि नमः**

ध्यानम्



**एताः वराभयकरामुक्ताहारविभूषणाः।**
**त्रिलोचनाश्चन्द्रकलामौलीर्ध्यायेदभीष्टदाः।।**

**ॐ ऐं ह्रीं श्रीं हसौ हस्क्लीं हस्सौः त्रिपुराचक्रेश्वरी (सर्वसिद्धिप्रदाग्रे) श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं वं वशित्वसिद्धि श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सः सर्वोन्मादिनी मुद्राशक्ति श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं सः सर्वोन्मादिनीमुद्रां प्रदर्श्य।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौंः $\frac{\text{मूलम्}}{\text{१६}}$ एताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधकचक्रे सचक्राः सासनाः....+ सन्तु** इति श्रीचक्रमध्यस्थित देवीपदारमूले पूजासमर्पणं विभाव्य।

ॐ ऐं ह्रीं श्रीं भीमरसात्मिकां ध्यात्वा।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम/१६ श्रीललिता महात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।। त्रिवार

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम/१६ कुलकौलयोमिनीमयूखा श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं जीवात्मनं आवारणनि सहित पुष्पपूरितहस्ते हृदय श्रीचक्र मध्यस्थित देवीवामहस्ते पूजा समर्पणं विभाव्य।

ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितहृदय श्रीचक्रमध्यस्थित देवीपादारमूले विलीनानि विभाव्य। योनिमुद्रां प्रणमेत्।

## षष्ठावरणम्

### ६ *अनाहते द्वादशदले अन्तर्दशारदेवीः।*

### जपासुमनः।







अनाहत चक्रम्।। हृत्पद्मे।।
वायुस्तत्वम् ५४ मयूखाः।।
हंसेश्वरीसमेतहंसेश्वरः।।

हृत्पद्मेभानुपत्रद्विवदनलसितां दांष्ट्रिणीं श्यामवर्णां
अक्षं शूलं कपालं डमरूमपि भुजैर्धारयन्तीं त्रिनेत्रं ।
रक्तस्थां कालरात्रि प्रमृतिपरिवृतां स्निग्धभक्तैकसक्तां
श्रीमद्वीरेन्द्रवन्द्यां अभिमतफलदां राकिणीं भावयामः ।।१।।

समुन्मीलत्संवित्कमलमकरन्दैकरसिकम्
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यपरिणतिः
यदादत्ते दोषाद्गुणमखिलमद्भ्य पय इव ।।२।।

कादिः ठान्तगतिः प्रकल्पितदले पङ्केरुहे पार्वती
कान्तिः कान्त शशाङ्कनसदृशं त्र्यक्षं कपर्दोज्वलम् ।
शान्तं टङ्कमृगाङ्गधूम्रिवलयैर्भुतं करेकङ्कणं
ग्रैवेयाङ्गदहार नपुरधरं चर्माम्बरंचिन्तयेत् ।।३।।

अनाहताब्जनिलया श्यामावदनद्वया।
दंष्ट्रे ज्वलाक्षमाला दीधरारूधिरसंस्थिता ।।४।।

कालरात्र्यादिशत्यौघवृतास्निग्धौदनप्रिया
महावीरेन्द्र वरदा राकिण्यम्बास्वरूपिणी।।५।।

ॐ ऐं ह्रीं श्रीं रां हंसश्शिवस्सोहं अनाहताधिष्टानदेवतायै राकिणीसहित रूद्ररूपिण्यै नमः। रुद्ररूपिण्यंबा श्रीपादुकां पूजयामि नमः।।
ॐ ऐं ह्रीं श्रीं रां री रमलवरयूं राकिण्यै नमः।।
ॐ ऐं ह्रीं श्रीं कं+ठं मां रक्ष रक्ष असृगात्माने नमः।।

इतिमन्त्रेण हृदय स्थित द्वादशदलानाहत नलिनकर्णिकायां राकिणीं न्यस्य। तद्दलेषु, प्राग्वत् तदावरणशक्तीर्न्यसेत्।। शक्तिर्न्यसेत्।।

ॐ ऐं ह्रीं श्रीं कं कालरात्र्यै नमः।
ॐ ऐं ह्रीं श्रीं खं खण्डितायै नमः।
ॐ ऐं ह्रीं श्रीं गं गायत्र्यै नमः।
ॐ ऐं ह्रीं श्रीं घं घण्टाकर्षिण्यै नमः।
ॐ ऐं ह्रीं श्रीं ङं ङार्णायै नमः।
ॐ ऐं ह्रीं श्रीं चं चण्डायै नमः।
ॐ ऐं ह्रीं श्रीं छं छायायै नमः।
ॐ ऐं ह्रीं श्रीं जं जयायै नमः।
ॐ ऐं ह्रीं श्रीं झं झङ्कारिण्यै नमः।
ॐ ऐं ह्रीं श्रीं ञं ञानरूपायै नमः।
ॐ ऐं ह्रीं श्रीं टं टङ्कहस्तायै नमः।
ॐ ऐं ह्रीं श्रीं ठं ठङ्कारिण्यै नमः।

ध्यानम्

वेदान्तवेद्याखिल विश्वमूर्ते विभो विरूपाक्ष विशेषशून्यम्।।
विश्वेश्वरा शेषतु विशेषबन्दो (अनाहत) कवाटमुद्घाटय कालकाल।।
रेफप्रकृतिकदशक वैश्वानराभिन्नैजपासुमनः सहचरे अन्तर्दशारे देव्याग्रकोणमारभ्य वामावृत्तेन।।
ॐ ऐं ह्रीं श्रीं ॐ ह्रीं क्ली ब्लें।। रं सर्वरक्षाकरचक्राय अन्तर्दशारचक्रायनमः।।

ॐ ऐं ह्रीं श्रीं मं सर्वज्ञा देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं यं सर्वशक्ति देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं रं सर्वैश्वर्यप्रदा देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं लं सर्वज्ञानमयी देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं वं सर्वव्याधिविनाशिनी देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं शं सर्वाधारस्वरूपा देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं षं सर्वपापहरा देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं सं सर्वानन्दमयी देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं हं सर्वरक्षारूपिणी देवी श्रीपादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं क्षं सर्वेप्सितफलप्रदा देवी श्रीपादुकां पूजयामि नमः

ध्यानम्



एताः अन्तर्दशारस्थाध्यायेद्देवीरभीष्टदाः।
अक्षश्रृक्पुस्तकधराः कर्पूराकृतिकान्तयः।।

ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें। त्रिपुरपालिनीचक्रेश्वरी (अर्वज्ञाग्रे श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं पं प्राकांयसिद्धि श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं क्रों सर्वमहांकुशामुद्राशक्ति श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं क्रों सर्वमहाङ्कुशामुद्रां प्रदर्श्य।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{\text{१६}}$ एताः निगर्भयोगिन्यः सर्वरक्षाकरचक्रे सचक्राः सासनाः..+ सन्तु इति हृदि श्रीचक्रमध्यस्थित देवी पादारमूले समर्पणम्।। विभाव्य

ॐ ऐं ह्रीं श्रीं रौद्ररसात्मिकां ध्यात्वा।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम् श्रीललिता महात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।।

त्रिवारम्

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम् निगर्भयोगिनीमयूखा श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितपुष्पपूरितहस्ते हृदय श्रीचक्रमध्यस्थित देवी वामहस्त पूजा समर्पणम् विभाव्य।**

जीवात्मानं आवरणानि सहित हृदयश्रीचक्रमध्यत्र्यस्थित देवी पादारमूले विलीनानि विभाव्य।

**योनिमुद्रां प्रणमेत्।**

**सप्तमावणम्**

## ७ *विशुद्धौ षोडशदले अष्टारदेवी पद्मरागवर्णम्।*







विशुद्धिचक्रम्। कण्ठे।
आकशतत्वम्।।७२ मयूखाः।
व्योमेश्वरीयुक्त व्योमेश्वराख्या।
अर्धनारीश्वरः। ध्यानम्।

कण्ठस्थाने विशुद्धौ नृपदलकमले श्वेतवर्णां त्रिनेत्रां
हस्तः खट्वाङ्गखड्गौ त्रिशिखमपि महाचर्म सन्धारयन्तीम् ।
वक्स्त्रेणैकेन युक्तां पशुजनभयदां पाशान्नैकसक्तां
त्वक्स्थां वन्दऽमृताद्यैः परिवृतवपुषं टाकिनीं वीरवन्द्याम् ।।१।।

विशुद्धौ ते शुद्धस्फटिक विशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यवसितां ।
ययोः कान्त्या भान्त्याः शशिकिरणसारूप्यसरणैः
विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ।।२।।

मूर्तिं चाङ्गनिविष्टाङ्गरहितं शान्तं त्रिधामास्पदम्
व्याप्ताशेषचराचरं गुणगणं भावैकसच्छिन्मयम् ।
मूर्त्ता मूर्त्तार्धमूर्त्तिममलं ज्योतिप्रदीपो ज्वलम्
साक्षात्षोडशवर्णं पत्रकमले जीवं चिरं चिंतयेत् ।।३।।

विशुद्धचक्रनिलयारक्तवर्णा त्रिलोचना ।
खड्वाङ्गादिप्रहरणा वदनैक समन्विता।।४।।

पायसोन्नप्रिया त्वक्स्था पशुलोक भयङ्करी।
अमृतादि महाशक्तिः संवृता डाकिनीश्वरी।।५।।

ॐ ऐं ह्रीं श्रीं डां सोहं हंसश्शिवः विशुद्धि अधिष्ठान देवतायै
डाकिनी सहित जीवेश्वर स्वरूपिण्यै नमः।
जोवेश्वरस्वरूपिण्यम्बा श्रीपादुकां पूजयामि नमः।
डां डीं डमलवरयूं डाकिन्यै नमः।
अं+अः मां रक्ष रक्ष त्वगात्माने नमः।

इति मन्त्रेण कण्ठस्थ षोडशदल विशुद्धिकमल कर्णिकायां डाकिनीं न्यस्य। तद्दलेषु पुरोभागादि प्रादक्षिण्येन तदाभरणसहितं न्यसेत्।

ॐ ऐं ह्रीं श्रीं अं अमृतायै नमः।
ॐ ऐं ह्रीं श्रीं आं आकर्षिण्यै नमः।
ॐ ऐं ह्रीं श्रीं इं इन्द्राण्यै नमः।
ॐ ऐं ह्रीं श्रीं ईं ईशिन्यै नमः।
ॐ ऐं ह्रीं श्रीं उं उमायै नमः।
ॐ ऐं ह्रीं श्रीं ऊं ऊर्ध्वकेश्यै नमः।
ॐ ऐं ह्रीं श्रीं ऋं ऋद्धिदायै नमः।
ॐ ऐं ह्रीं श्रीं ॠं ॠकारायैः।
ॐ ऐं ह्रीं श्रीं लृं लृकारायै नमः।
ॐ ऐं ह्रीं श्रीं लॄं लॄकारायै नमः।

ॐ ऐं ह्रीं श्रीं एं एकपादायै नमः। ॐ ऐं ह्रीं श्रीं औं औषध्यै नमः।
ॐ ऐं ह्रीं श्रीं ऐ ऐश्वर्यात्मिकायै नमः। ॐ ऐं ह्रीं श्रीं अं अम्बिकायै नमः।
ॐ ऐं ह्रीं श्रीं ओं ओङ्कारान्यै नमः। ॐ ऐं ह्रीं श्रीं अः अक्षरायै नमः।

ध्यानम्

वेदान्तवेद्याखिलविश्वमूर्त्ते विभो विरूपाक्षविशेषशून्यम्।।

विश्वेश्वराशेषतुविशेबन्धो (विशुद्धिचक्र) कवाटमुद्घाटयकालकाल। हस्तताडनं कृत्वा।।

ॐ ऐं ह्रीं श्रीं कं ककारप्रकृतिक अष्टमूर्तात्मक कामेश्वरस्वरूपे पद्मरागरूचिरे अष्टारेदेव्या ग्रकोणाद्य प्रादक्षिणेन।।

ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः।। कं सर्वरोगहरचक्राय नमः।।

ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः अष्टारचक्राय नमः।।

ॐ ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः ब्लूं वशिनी वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं कं खं गं घं ङं कल्ह्रीं कामेश्वरी वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं चं छं जं झं ञं न्व्लीं मोदिनी वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं टं ठं डं ढं णं य्लूं विमला वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं तं थं दं धं नं ज्म्रीं अरुणा वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं पं फं बं भं मं हस्ल्व्यूं जधिनी वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं यं रं लं वं झ्म्र्यूं सर्वैश्वरी वाग्देवता श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं शं षं सं हं ळं क्षं क्ष्म्रीं कौलिनी वाग्देवता श्रीपादुकां पूजयामि नमः।।

ध्यानम्



एताः वाग्देवताध्यायेद्दाडिमीकुसुमप्रभा।
शरश्चापौ पुस्तकाक्षमाले हस्तैश्च बिभ्रति।।

ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वरी (वशिनीवाग्देवताग्रे) श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं भुं भुक्ति सिद्धि श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें सर्वखेचरीमुद्राशक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें सर्वखेचरीमुद्रा प्रदर्श्य।

मूलम्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{}{१६}$ एता रहस्ययमोगिन्यः सर्वरोगहरचक्रे सचक्राः सासना........+ सन्तु इति हृदय श्रीचक्र मध्यत्र्यस्थितदेवी पादारमूले पूजा समर्पणं विभाव्य।

ॐ ऐं ह्रीं श्रीं हास्यस्सात्मिकां ध्यात्वा।

ॐ ऐं ह्रीं श्रीं श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं रहस्ययोगिनीमयूखा श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं जीवान्मानं आवरणानिसहितहृदय श्रीचक्रमध्यत्र्यस्थितदेवी वामहस्ते पूजा समर्पणं विभाव्य।

ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितहृदय श्रीचक्रमध्यत्र्यस्थितदेवीपादारमूले विलीनानि विभाव्य।

योनिमुद्रां प्रणमेत्।

## अष्टमावरणम्

## ८ लंबिकाग्रे आयुधदेवी




ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रीं यां रां लां वां शां द्रां द्रीं क्लीं ब्लूं सः सर्व जंभनेभ्येकामेश्वरीकामेश्वरबाणेभ्यो नमः बाणशक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं थं धं सर्वसम्मोहनाभ्यां कामेश्वरी कामेश्वर धनुभ्यां नमः। धनुः शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं आं ह्रीं ह्रीं सर्ववशीकरणाभ्यां कामेश्वरीकामेश्वरपाशाभ्यां नमः पाशशक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्रों क्रों सर्वस्तम्भनाभ्यां कामेश्वरीकामेश्वर अङ्कुशाभ्यां नमः अङ्कुशशक्ति श्रीपादुकां पूजयामि नमः।

एताः ध्यायेत्पुस्तकाक्षमाला आयुधदेवताः।

## त्रिकोणदेवी

### बन्धूकपुष्पबन्धु किरणम्

नादप्रकृतिक गुणत्रय प्रधान त्रिशक्तिरूपरेखात्रयात्मके बन्धूकपुष्पबन्धु किरणे त्रिकोणे अग्र-दक्षवामकोणेषु बिन्दौ च क्रमेण।

ॐ ऐं ह्रीं श्रीं हस्त्रैं हस्रक्लीं हस्त्रौः (नादं) सर्वसिद्धिप्रदचक्राय त्रिकोणचक्राय नमः।

ॐ ऐं ह्रीं श्रीं ऐं प्र। अग्निचक्रे कामगिरिपीठे मित्रेशनाथनवयोनी चक्रात्मक आत्मतत्व सृष्टिकृत्यजाग्रद्दशाधिष्ठायक इच्छाशक्ति वाग्भवात्मक वागीश्वरी स्वरूपब्रह्मात्मशक्ति महाकामेश्वरी श्रीपादुकां पूजयामि नमः।

ध्यानम्

पाशांकुशामृतकपालवराभयाङ्के हस्तैश्च षड्भिरभिरामतमारुणाङ्गी।

कोणग्रहाति नयनातरूणेन्दु चूडा कामेश्वरी ममतातु समस्तकामात्।।

ॐ ऐं ह्रीं श्रीं क्लीं द्वि।। सूर्यचक्रे जालन्ध्रपीठे षष्ठीशनाथदशरद्वय चतुर्दशार चक्रात्मक विद्यातत्वस्थितिकृत्य स्वप्नदशाधिष्टायक ज्ञानशक्ति कामराजात्मक कामकलास्वरूप विष्ण्वात्माशक्ति महावज्रेश्वरी श्रीपादुकां पूजयामि नमः।

ध्यानम्

बालप्रवालरुचिराकरषडङ्ग चापेन्दुपाश गृणिपुस्तक मातुलङ्गा।

वज्रेश्वरी प्रथितदक्षकोणसंस्था वज्रोज्वलाविदिशतां ममवांचितानि।।

ॐ ऐं ह्रीं श्रीं सौः त्रि। सोमचक्रेपूर्णगिरिपीठे गह्वरेउड्डीशनाथ अष्टदलषोडशदल चतुरश्रचक्रात्मकशिवतत्व संहारकृत्य सुषुप्तिदशाधिष्टायकक्रियाशक्ति शक्तिबीजात्मकपरापरशक्ति स्वरूपरूद्रात्मशक्ति महाभगमालिनी श्रीपादुकां पूजयामि नमः

प्रत्यर्कशशाङ्करुचिराशितवामकोणा पाशङ्कुशाक्षगुणपुस्तकशास्त्रहस्ता।

उद्वासयत्यनिशमद्भुतभूरिशक्तिः भाग्यं श्रियं भगवति भगमालिनी मे।।

ॐ ऐं ह्रीं श्रीं हस्त्रैं हस्रक्लीं हस्त्रौ एं प्र क्लीं द्वि सौः त्रि।

परब्रह्मचक्रे महोड्याणपीठे श्रीचर्यानन्दनाथसमस्तचक्रात्मक सपरिवार परमतत्व सृष्टिस्थिति संहारकृत्य तुरीयदशधिष्टायक इच्छा-ज्ञानन-क्रिया शान्ताशक्ति कामराजशक्ति बीजात्मक परापरमशक्तिस्वरूप परब्रह्मात्मशक्ति श्रीमहात्रिपुरसुन्दरी वाग्देवता श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं इं इच्छा शक्ति श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं हसौः सर्वबीजामुद्राशक्ति श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं हसौः सर्वबीजामुद्रां प्रदर्श्य।।



ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{\text{१६}}$ एताः रहस्ययोगिन्यः सर्वसिद्धि प्रदचक्रे सचक्राः सासना...+ सन्तु इति हृदि श्रीचक्रमध्यस्थितदेवी पादारमूले पूजा समर्पणम्। विभाव्य।।

ॐ ऐं ह्रीं श्रीं अद्भुत रसात्मिकां ध्यात्वा।। त्रिवारम्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम् श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम् अतिरहस्ययोगिनीमयूखा श्रीपादुकां पूजयामि नमः।।

ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानि सहितपपुष्पपूरितहस्ते हृदयश्रीचक्रमध्यस्थित देवीवामहस्ते पूजा समर्पणं विभाव्य।।

ॐ ऐं ह्रीं श्रीं जीवात्मानं आवरणानिसहितहृदय श्रीचक्रमध्यत्र्यस्थित देवीपादार-विन्द मूले विलीनानि विभाव्य।।

योनिमुद्रां प्रणमेत्।।

## नवमावरणम्

*९ आज्ञायां द्विदलं। नादं*






आज्ञाचक्रम्। भ्रुवोर्मध्ये।।
मनस्तत्वं ६४ मयूखाः।।
चित्परांबाय विनाभूतशंभुनाथः।।

**भ्रूमध्ये विन्दुपद्मे दलयुगकलिते शुक्लवर्णां कराब्जैः**
**बिभ्राणां ज्ञानमुद्रां जमरुकममलामक्षमालां कपालम् ।**
**षड्वक्त्रां मज्जसंस्थां त्रिनणयनलसितां हंसवत्यादियुक्तां**
**हारिद्रान्नैकसक्तां सकलसुखकरीं हाकिनीं भावयामः ।।१।।**
**तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं परं शम्भुं वन्दे परिमिलतपार्श्वं परचिता।**
**यमाराध्यन् भक्त्या रविशशिशुचीनामविषये निरालोकेऽलोके निवसित हि भालोकभुवने।।२।।**
**मनस्त्वं व्योमत्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम्।**
**त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवति भावेन बिभृषे।।३।।**
**हक्षाभ्यां परिक्लृप्तपतकमलेदिव्येजम्त्कारणे स्वच्छात्मानम नेकदेहनिलयं स्वछन्दतरसर्वदा।**
**तत्तयोगतयाश्वदेशिकतया भावैकसच्छिन्मयं प्रत्यक्षाक्षरविगहं परपपदं गुरुशाश्वतम्।।४।।**
**आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना। मज्ञासंस्थाहंसकती मुख्यशक्तिसमन्विता।।५।।**
**हरिद्रान्नैकरसिका हाकिनीरूपधारिणीं हां हंसश्शिवस्सोहं सोहंहंसश्शिव**
**आज्ञाधिष्टानदेवतायै हाकिनीसहितः परमात्मस्वरूपिण्यै नमः।।६।।**
**परमात्मस्वरूपिण्यम्बा श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं हां हीं हमलवरयूं हाकिन्यै नमः। ॐ ऐं ह्रीं श्रीं हे क्षं मां रक्ष रक्ष मज्जात्मने नमः।**
**इतिभ्रूमध्यगतद्विदलाज्ञाकमलकर्णिकायां हाकिनीन्यस्य।। तद्दक्षवामदलयोः क्रमेण**
**ॐ ऐं ह्रीं श्रीं हं हंसवत्यै नमः।                    ॐ ऐं ह्रीं श्रीं क्षं क्षमावत्यै नमः।**

ध्यानम्

**वेदान्तवेद्याखिलविश्वमूर्ते विभोविरूपाक्षविशेष शून्या।।**
**विश्वेश्वराशेषतुविशेषबन्धो (अद्या) कवाटय मुद्घाटय कालकल।।**

हस्तताडनं कृत्वा।



**ॐ ऐं ह्रीं श्रीं हंसवत्यै नमः।।**

**ॐ ऐं ह्रीं श्रीं क्षमावत्यै नमः।।**

**ॐ ऐं ह्रीं श्रीं** जीवात्मानं आवरणानि सहित पुष्पपूरितहस्ते हृदयमध्यत्रयस्थितदेवी वामहस्ते पूजा समर्पणं विभाव्य।।

**ॐ ऐं ह्रीं श्रीं** जीवात्मनं आवरणानि सहित हृदय मध्यत्रयस्थितदेवी पादारविन्दमूले विलीनानि विभाव्य।।

योनिमुद्रां प्रणमेत्।

## *१० बिन्दुगतदेवी*



**सहस्रारचक्रम्।।**

**श्रीराजराजेश्वरी।।**

**श्रीललितामहात्रिपुरसुन्दरी।।**

**बिन्दु भिन्न परब्रह्मात्म बिन्दुचक्रे।।**

गुरुध्यानम्।

षोडशीध्यानम्।

गुरुत्रयं स्वशिरसि।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** मूलम्/१६

**सर्वानन्दमय चक्राय नम।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** मूलम्/१६ **सपरिवारपरमतत्व सृष्टिस्थितिसंहार-कृत्य इच्छा ज्ञानक्रियाशान्ता शक्ति वाग्भवा कामराजशक्ति बीजात्मक तुरीयातीतदशाधिष्टायक परापरमशक्ति-स्वरूप श्रीमहात्रिपुरसुन्दरी परब्रह्मात्म-शक्ति श्रीपादुकां पूजयामि नमः।**

ध्यानम्

मुण्डव्योमस्थपद्मे दशशतदलके कर्णिकाचन्द्रसंस्थां
रेतोनिष्ठां समस्तायुधकलितकरां सर्वतोक्त्रपद्माम्।
आदिक्षान्तार्णशक्तिप्रकटपरिवृतां सर्ववर्णो भवानीं
सर्वान्नासक्तचित्तां परशिवरसिकां याकिनीं भावयामः।।१।।

सहस्रदलपङ्कज सकलसीतरश्मिप्रभं वराभयकराम्बुजं विमलचित्तधपुष्पाम्बरम।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणम् स्मरेच्छिरसिंहसगतदभिधानपूर्वं गुरुम्।।२।।

कुङ्कुमपङ्कसमाभांपङ्कजेक्षुचापकुसुमशरां
पङ्कजमद्धयनिषण्णां पङ्केरूहलोचनांपरामहंवन्दे।

सूर्येन्दुवह्निमयभास्वरपीटगेहा स्वेच्छाग्रहीतसृणिपाशशरेक्षुचापम्।
बालेन्दुमौलिमरूणाभरणांत्रिनेत्रां नित्यं नमामि महतीमहनीयमूर्तिम्।।३।।

सहस्रदलपद्मस्थासर्ववर्णोभशोभिता।
सर्वायुधधराशुक्लसंस्था सर्वतोमुखी।।
सर्वोदन प्रीतचित्तायाकिन्यम्बास्वरूपिणी।

ॐ ऐं ह्रीं श्रीं यां यीं यमल वरयूं याकिन्यै नमः

ॐ ऐं ह्रीं श्रीं अं आं+क्षं मां रक्ष रक्ष शुक्रात्माने नमः।।

इति ब्रह्मरन्ध्रगत सहस्रदलसरसिज कार्णिकायां याकिनीन्यस्य तद्दळेषु प्रतिविंशतिदलं।

तदावरणशक्तिः।। अमृताद्याः क्षमावन्त्यन्ताः पूर्वोक्ताः।।

प्राग्वत् यसेत्।। प्रतिनाम विंशतिवारं पठेत्।

काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगंगा
भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः।
विश्वेशोऽयं तुरीयः सकलजनमनः साक्षिभूतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत्किमास्ति ।।

मूलम्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः १६ हसकलरडैं हसकलरडीं हसकलरडौः श्रीललितामहात्रिपुरसुन्दरी चक्रेश्वरी श्रीगुरुपादुकबिन्दौ संचिन्त्य पूजयामि नमः।

श्रीललितामहात्रिपुरसुन्दरी

# श्री देवीत्रिय यजनम्

## *श्री ललिता महात्रिपुरसुन्दरी*

ध्यानम्

कल्पकोद्यानमृतुभिः षड्भिः सेवितविग्रहम् । तन्मध्येऽसंख्यरूपभिर्वृतां सङ्गीतशक्तिभिः ।।१।।
गीतवादित्रनृत्यादिसंसक्ताभिरनारतम् । विनोद्यमानां विलसन्मदमन्थरवीक्षणाम् ।।२।।
रत्नमण्डपमध्यस्थरत्नसिंहासनोपरि । शुचिस्मितां शक्तिवृन्दगीताकर्षणनन्दिताम् ।।३।।
सहजासवसम्भोगैः सञ्जातानन्दविग्रहाम् । दयामदारुणापाङ्गविलोकितसुसाधकाम् ।।४।।
परितो भूषणैश्चित्रैः स्वर्णचामरकादिभिः । विराजमानान्द्विरदानश्वानपि तथाविधान् ।।५।।
शक्तिभिर्दर्शितानग्रे पश्यन्तीमभितोत्सवाम् । स्वसमानाभिरतो नित्याभिःसेवितान्तथा ।।६।।
याति तासां पूजयिता तत्समाकारतां शनैः । तद्दिनोदस्तत्समीपनीवासी स्यात् सुनिश्चितम् ।।७।।

## *श्री ललितानामानि*

ॐ ऐं ह्रीं श्रीं सिंहासनेश्यै नमः
ॐ ऐं ह्रीं श्रीं ललितायै नमः
ॐ ऐं ह्रीं श्रीं महाराज्यै नमः
ॐ ऐं ह्रीं श्रीं वराङ्कुशायै नमः
ॐ ऐं ह्रीं श्रीं चापिन्यै नमः
ॐ ऐं ह्रीं श्रीं त्रिपुरायै नमः
ॐ ऐं ह्रीं श्रीं महात्रिपुरसुन्दर्यै नमः
ॐ ऐं ह्रीं श्रीं सुन्दरीचक्रनाथायै नमः
ॐ ऐं ह्रीं श्रीं अनङ्गवल्लभायै नमः
ॐ ऐं ह्रीं श्रीं सम्राज्ञ्यै नमः
ॐ ऐं ह्रीं श्रीं सर्वपाटलायै नमः
ॐ ऐं ह्रीं श्रीं चक्रिण्यै नमः
ॐ ऐं ह्रीं श्रीं कुलनाथायै नमः
ॐ ऐं ह्रीं श्रीं चक्रेश्वर्यै नमः
ॐ ऐं ह्रीं श्रीं आम्नायनाथायै नमः
ॐ ऐं ह्रीं श्रीं महादेव्यै नमः
ॐ ऐं ह्रीं श्रीं सर्वाम्नायनिवासिन्यै नमः
ॐ ऐं ह्रीं श्रीं शृङ्गारनायिकायै नमः
ॐ ऐं ह्रीं श्रीं कामेश्यै नमः
ॐ ऐं ह्रीं श्रीं परमेश्वर्यै नमः
ॐ ऐं ह्रीं श्रीं कामराजप्रियायै नमः
ॐ ऐं ह्रीं श्रीं कामकोटिकायै नमः
ॐ ऐं ह्रीं श्रीं चक्रवर्तिन्यै नमः
ॐ ऐं ह्रीं श्रीं महाविद्यायै नमः
ॐ ऐं ह्रीं श्रीं शिवायै नमः



ॐ ऐं ह्रीं श्रीं प्रं प्राप्तिसिद्धि श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ऐं सर्वयोनिमुद्रां शक्ति श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ऐं सर्वयोनिमुद्रां प्रदर्श्य।

## षोडशोपासकानामेव



ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम्/१६ ऐता परापररहस्ययोगिनी सर्वानन्दमयबैन्दवचक्रे महोड्याणपीठे श्रीचर्यानाथात्मकतुरीयतुरीयातीत दशादिष्टायक शान्तिकलात्मक प्रकाश-विमर्शसामरस्यात्मकपरब्रह्मस्वरूपिणीपरामृतशक्तिः सर्वमन्त्रेश्वरी सर्वयन्त्रेश्वरी सर्ववीरेश्वरी सर्वपीठेश्वरी सर्वविश्वेश्वरी वागीश्वरी सर्वयोगेश्वरी सर्वसिद्धेश्वरी सर्वतत्वेश्वरी सकलजगत्युत्पत्तिस्थिति संहारमातृका सचक्रा सासना... सन्तु इति हृदिमध्यत्र्यस्यानग्रे श्रीललितामहात्रिपुरसुन्दरी पादारबिन्दुमूले पूजयामि नमः इति विभाव्य।

ॐ ऐं ह्रीं श्रीं शान्तिरसात्मिकां ध्यात्वा।

ॐ ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं ऐं सौ ओं ह्रीं श्रीं कएईल ह्रीं हसकहल ह्रीं सकलह्रीं सौः क्लीं ह्रीं श्री महाषोडशी श्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलम्/१६ श्रीललितामहात्रिपुरसुन्दर्यै नमः। त्रिवारम्।।

जगन्मातर्महादेवि महात्रिपुरसुन्दरी । सुधाचैतन्यमूर्तिं ते कल्पयामि नमश्शिवे ।।

महापद्मवनान्तःस्थे कारणानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरी ।।

एह्येहि देवदेवेशि त्रिपुरे देवपूजिते । परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धिदे ।।

इति मन्त्रेण बन्दुपीठगतनिर्विशेषब्रह्मात्मक श्रीकामेश्वराङ्के परदेवतामावाहयेत् ।।

**ओं समस्तप्रकट गुप्त गुप्ततर सम्प्रदायक कुल कौलगर्भ निगर्भ रहस्य अतिरहस्य परापररहस्य योगिनीप्रमुख सर्वशक्तिमण्डलमण्डितत्रैलोक्यमोहन सर्वाशापरिपूरकसर्वसंक्षोभण सर्वसौभाग्यदायक सर्वार्थसाधक सर्वरक्षाकर सर्वरोगहर सर्वसिद्धिप्रद सर्वानन्दमयाख्य नवचक्राधीश्वरी त्रिपुरा त्रिपुरेशी त्रिपुरसुन्दरी त्रिपुरवासिनी त्रिपुराश्री त्रिपुरमालिनी त्रिपुरासिद्धी त्रिपुराम्बा त्रिपुरभैरवी श्रीमहात्रिपुरसुन्दरी देवताञ्जलिललिता कबलित निश्शेषतत्वग्रासस्वरूपिणी श्रीललिताभट्टारिकाख्य मयूखमालिनी सच्चिदानन्दात्म प्रत्यगात्मस्वरूपिणी इच्छाज्ञानक्रिया स्वतन्त्रिणी श्रीगुरुमूर्तिस्वरूपिणी श्रीचक्रदेवताभ्यो नमः।**

अथ नित्याऽऽदिकमणिमाऽन्तं श्रीकामेश्वराङ्कोपवेशनं विना श्रीदेवी समानाकृतिवेषभूषणायुध-शक्तिचक्रं ओघत्रयगुरुमण्डलं च वक्ष्यमाणेषु आवरणेषु निजस्वामिन्यभिमुखोपविष्टमवमृश्य मूलेन आवाहन-संस्थापनसन्निधापनसन्निरोधन-सम्मुखीकरणावगुण्ठन वन्दनधेनुयोनिमुद्राः प्रदर्शयन् तदखिलं भावयेत्।

अत्र—

**मेरुमन्त्रात्मकं चक्रं श्रीत्विषस्तत्र देवताः। कामेश्वरः प्रकाशात्मा श्रीविमर्शस्तदङ्गगः।।**
**इत्येतद्ग्रवासनारूपं अभेदं च परस्परम्। ज्ञात्वा श्रीगुरुवक्राब्जात् कृता पूजा महाफला।।**

मेरुमन्त्रश्च चतुरश्रादि चक्रनवकविशेषणगतैः लकारादिभिः अवयवैः ज्ञातव्यः।

**ॐ ऐं ह्रीं श्रीं त्रिपुरे त्रिपुरेशी त्रिपुरसुन्दरी त्रिपुरवासिनी त्रिपुराश्री त्रिपुरमालिनी त्रिपुरासिद्धे त्रिपुराम्बा महात्रिपुरसुन्दरी महामहाराज्ञी महामहाशक्ति महामहागुह्ये महामहाज्ञप्ते महामहानन्दे महामहास्कन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रसांम्राज्ञी नमस्ते नमस्ते नमस्ते स्वहा श्रीचक्रसांम्राज्ञी श्रीपादुकां पूजयामि नमः।**



**ॐ ऐं ह्रीं श्रीं सं सर्वकामसिद्धि श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं हसैं हस्रक्लीं हस्रौः सर्वत्रिखण्डामुद्राशक्ति श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं सर्वत्रिखण्डमुद्रां प्रदर्श्य।।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** $\frac{\text{मूलम्}}{१६}$ **श्रीललितामहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि नमः।** त्रिवारम्।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः** मूलम् **एताः परापररहस्ययोगिनीमयूखा श्रीपादुकां पूजयामि नमः।**

सर्वावयवसुन्दरी: पञ्चदेवता: देव्याग्रे संस्पृस्येताभिः चन्दनाद्युपचारान् श्रीदेव्यै समर्पितान् स्मरं स्मरं पञ्चोपचारमुद्राश्च प्रदर्शिताभाव्येत्।

**पीतनासायां सुगन्धसत्पदार्थानुभावेन प्रत्यङ्मुखतया प्रमातरिविश्रान्तिः** गन्धं समर्पणम् ।।

**सित श्रोत्र सुशब्दवत्पदार्थानुभावेन प्रयङमुखतया प्रमातरि विश्रान्तिः** पुष्पं समर्पणम् ।।

**श्याम नाभौ सुस्पर्शवत्मदार्थानुभावेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिः** धूपं समर्पणम्।।

**रक्तनयने सुरूपवत्पदार्थानुभावेन प्रत्यङ्मुखतया प्रमातरि विश्रान्तिः** दीपं समर्पण् ।।

**शुक्लजिह्वायां स्वादुरसवत्पदार्थानुभवेन प्रत्यङ्मुखतया प्रमातरिविश्रान्तिः** नैवेद्यम् ।।

इति विभाव्य

**जीवात्मानं पञ्चदेवाताभिः सहितदेवीपादारमूले विलीनानि विभाव्य।**

**मूलविद्यां जपेत्। क्षणं न किंचिदपि चिन्तयेत्।**

अथ देव्या प्रेरितमानसः सन् पुनः प्रकृतिमालम्ब्य तेजोरूपेण परिणतां परमशिवज्योतिरभिन्न-प्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकस्वात्माभिन्नां परचिति सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदलकमलात् वहन्नासापुटेन निर्गतां त्रिखण्डमुद्रामण्डितशिखण्डे कुसुमगर्भितेऽञ्जलौ समानीय—

**ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः श्रीललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः।**

**हृन्मध्यरूपनिरुपाधिकसंविन्मात्ररूप-कामेश्वराङ्कनिलयायै**

**सच्चिदानन्दैकब्रह्मात्मने परदेवतायै ललितायै महात्रिपुरसुनन्दर्यै नमः।**

**निरुपाधिकचैतन्यमेव सच्चिदानन्दधर्मकमन्तः-करणाप्रतिबिम्बितम्**

सदाऽहमेवेत्यनुसन्धानं ललिताया लौहित्यमिति विभाव्य अभेदसम्बन्धेन चित्त्वादिधर्म्मविशिष्ट-संविदश्च तादात्म्यसम्बन्धरूपं कामाङ्कयन्त्रणं विशेषणं विभाव्य उपाध्यभावरूपशुक्लत्वेनोपलक्षिता-सतीशुद्धसंविदेव शुक्लचरणः। चित्तविशिष्टसंवित्प्राथमिकपराहन्तात्मकवृत्तिरूपेण रागेणोपलक्षिता सती रक्तचरणः। अहमाकारवृत्तिनिरूपिता विषयता चरणयोर्मिथो विशेषणविशेष्यभावरूपैव तदुभयसामरस्यमिति विभाव्य।

**हृद्रूपसर्वानन्दमयचक्रेश्वर्यै महात्रिपुरसुन्दरर्यै नमः।**

**परापररहस्ययोगिनीरूपस्वात्मात्मने प्राप्तिसिद्ध्यै नमः।**

**अपरिच्छिन्नरूपस्वात्मात्मने योनिमुद्रायै नमः।**

इति तत्वस्थूनि स्पर्शपूर्वकं सम्यगनुसन्धायोपचारान् समर्पयेत्।

तद्यथा-**एवमपरिच्छिन्नतया भाविताया ललितायाः स्वे महिम्न्येव प्रतिष्ठितमासनम् अनुसन्दधामि।** इति आसनम्।

**वियदादिस्थूलप्रपञ्चरूपपादगतस्य नामरूपात्मकमलस्य सच्चिदानन्दैकरूपत्वभावनाजलेन क्षालनं पाद्यं भावयामि।** इति पाद्यम्।।

**सूक्ष्मप्रपञ्चरूपहस्तगतस्य तस्य क्षालनमर्घ्यं चिन्तयामि।** इति अर्घ्यम्।

**भावनारूपाणामपामपि कबलीकाररूपमाचमनं विभावयामि।** इति आचमनीयम्।

**सत्वचित्त्वानन्दत्वाद्यखिलावयवाच्छेदेन भावनाजलसम्पर्करूपं स्नानमनुचिन्तयामि।** इति स्नानम्।

**तेष्वेवावयवेषु प्रसक्ताया भावनात्मकवृत्तिविशेष्यतायाः प्रोञ्छनं वृत्तिविषयत्वभावनेन वस्त्रं कल्पयामि।** इति वस्त्रम्।

**निर्विषत्वनिरञ्जनत्वाशोकत्वामृतत्वाद्यनेक धर्म्मरूपाण्याभरणानिधर्म्यभेदभावनेन समर्पयामि।** इति आभरणम्।।

**स्वशरीघटकपार्थिवभागानां जडतापनयेन चिन्मात्रतावशेषरूपं गन्धं प्रयच्छामि।** इति गन्धम्।

**आकाशभागानां तथा भावनेन पुष्पाणि ददामि।** इति पुष्पाणि।

**वायव्यभागानां तथा भावनया धूपयामि।** इति धूपम्।

**तैजसभागानां तथाकरणेनोद्दीपयामि।** इति दीपम्।

**अमृतभागांस्तथा विभाव्य निवेदयामि।** इति नैवेद्यम्।

**षोडशान्तेन्दुमण्डलस्य तथा भावनेन ताम्बूलकल्पमाचरामि।** इति ताम्बूलम्।

**परापश्यन्त्यादि निखिलशब्दानां नादद्वारा ब्रह्मण्युपसंहारचिन्तनेन स्तुवीमि।** इति स्तोत्रम्।

**विषयेषु धावमानानां चित्तवृत्तीनां विषयजडतानिरासेन ब्रह्मणि विलापनेन प्रदक्षिणीकरोमि।** इति प्रदक्षिणम्।

**तासां विषयेभ्यः परावर्तनेन ब्रह्मैकप्रवणतया प्रणमामि।** इति नमस्कारः।

**विहिताविहितविषया वृत्तय उत्पन्ना अहं त्वं गुरुर्देवतेत्यादयताः सर्व्वाश्चक्ररायस्थानन्तशक्तिकदम्ब-रूपास्तत्तत्सूक्ष्मरूपा ये ये सस्कारश्च तत्सर्वं चिन्मात्रमेवेति विभावनया निर्व्युत्थानं स्वात्मनि जुहोमि। इति उपचर्य्य जुहुयात्।** इति होमम्।

**प्रकृतभावनासु ये गुरुचरणादिशक्तिकदम्बान्ता विषयास्ते सर्वेऽपि चिन्मात्ररूपा न परस्परं भिद्यन्त इति भावनया तर्पयामि।** इति तर्पणम्।

**तिथिचक्रमुक्तरूपं कालचक्रं देशचक्रं च सर्व्वमस्ति भाति प्रियश्च न तु नामरूपवत् अतः सर्वं ब्रह्मैवेति विभावयामि।** इति ब्रह्मविभावनम्।

अथवा

**पूर्व्वलिखितां नित्याभावनामिहैव श्वासविलापनफलिकां कुर्य्यात्।**

**प्रणव चिन्तनम्। तेन मनः पवनात्मनामैक्यनिफालनेन त्रीन् मुहूर्तान् द्वावेकं मुहूर्तमवच्छिन्नं यापयेत्।**

## मुख्य-मुद्रासंक्षिप्त परिचयः

### १ श्रीगुरुवन्दनमुद्राः

विकसितकल्प उत्तानाञ्जलिः सुमुखम्। इदमेव मुष्टीकृतं सुवृत्तम्। ऊर्ध्वाधः स्थितयोः दक्षवामकरतलयोः अङ्गुलीनां मिथो मणिबन्धसम्बन्धे चतुरस्रम्। अधरोत्तरस्य वामदक्षमुष्टियुगस्य स्वाभिमुख्येन योजने मुद्गरः। तिर्यङ्मिळिताग्रयोः। मध्यमयोः पश्चात् ऊर्ध्वाधः स्थिते वामदक्षानामिके तिरः प्रसारिते तर्जनीभ्यां निपीड्य वामकनिष्ठां दक्षिणया धृत्वा अङ्गुष्ठाग्रयोः मध्यमापुरोमध्यपर्वद्वयसम्बन्धे यो निः। इति श्रीगुरुवन्दनमुद्राः।

### २. श्री विद्यादशमुद्राः-सङ्क्षोभिण्यादिमुद्राः

उत्तानयोः करतलयोः प्रसारितर्जनीकं संहतकनिष्ठानामामध्यमाग्राण्यन्योन्याभिमुख्येन संयोज्य स्वस्वकनिष्ठोपर्यङ्गुष्ठाग्रसम्बन्धे सर्वसङ्क्षोभिणी। सैव प्रसारितमध्यमाऽपि सर्वविद्राविणी। इयमेव मध्यमातर्जन्योराकुञ्चने सर्वाकर्षणी। परस्परग्रथिताङ्गुलिस्पृष्टनखाग्राङ्गुष्ठयोः मुष्ट्योः योगे सर्वशङ्करी। अधरोत्तरं तिर्यक्प्रसारिते वामदक्षिणकनिष्ठे मध्यमाभ्यां धृत्वा तयोरग्रे अङ्गुष्ठाभ्यां निपीड्य अनामातर्जन्यग्राणां पार्श्वतो मिथः संस्पर्शे सर्वोन्मादिनी। एषैव अनामयोराकुञ्चने तर्जन्योः किञ्चित् भुग्नत्वे च सर्वमहाङ्कुशा। दक्षभुजमध्यसन्धिस्थापितवामकूर्परमामणिबन्धं पाणी परिवर्त्य स्वाभिमुखमन्योन्यस्पृष्टाग्रयोः मध्यमयोः पृष्ठतोऽधरोत्तरं तिरःप्रसारितानि दक्षवामानामाकनिष्ठाग्राणि तर्जनीभ्यां धृत्वा पुरोऽङ्गुष्ठयोरन्योन्यसम्बन्धे सर्वखेचरी। ऊर्ध्वाधस्तिरः प्रसृते वामदक्षकनिष्ठाग्रे अनामिकाभ्यां धृत्वा अर्धचन्द्राकृतियोजितेषु तर्जन्युङ्गुष्ठेषु मिथः श्लिष्टाभ्यामृजुभ्यां मध्यमाभ्यां तर्जन्योः सम्बन्धे सर्वबीजम्। योनिरुक्तैव। अस्यामेव ऋजूकृतयोः कनिष्ठयोः मध्यमयोरङ्गुष्ठयोश्च पृथङ्मिथः संस्पर्शे सर्वत्रिखण्डा। उदग्राणां विरळानां वामकराङ्गुलीनां ईषदाकुञ्जने ग्रासः। मध्यमातर्जन्यङ्गुष्ठयोगे प्राणमुद्रा। मध्यमानामाऽङ्गुष्ठमेळने अपानस्य। कनिष्ठाऽनामाऽङ्गुष्ठसम्बन्धे व्यानस्य। तर्जन्यनामाऽङ्गुष्ठमिश्रणे उदानस्य। सर्वाङ्गुलिसंश्लेषे समागतस्य। वामपृष्ठेरङ्गुष्ठा-ग्रचुम्बितमूलपर्वणि तर्जन्यामीषदधोमुखप्रसृतायां नाराचः। व्यत्ययेन वामदक्षकरकनिष्ठाङ्गुष्ठाग्रयोः योगे अन्यासां वैरळ्येन प्रसारणे च चक्रम्।

## एककाले बहिर्यागः चक्रेषु एवँ स्वबाह्यदेहेषु पूजाविधिः

### *विषेशतम बहिर्यागः सपर्या विधानम्*

गुरुध्यानम्। ॐ गुरोः दक्षिणामूर्तये भक्तानुग्रहदायक। अनुज्ञां देहि भगवन्श्रीचक्रयजनाय मे।।

भैरवध्यानम्। अतिक्रूरमहाकायकल्पान्तदहनोपमभैरवाय नमस्तुभ्यं अनुज्ञां दातुमर्हसि।। इति आज्ञालब्ध्वा। **दीपं प्रज्वाल्य**

**संपादकीय टिप्पिणी :—**

प्रिय साधक बन्धुओं!

हम यहाँ एक ऐसी महत्वपूर्ण सविस्थार बहिर्याग क्रमः विधान मनोवैज्ञानिक रीति के अनुकूल उपासक सज्जनों को तुलनात्मक ढंग से शनैः शनैः बाह्य एवं अन्तर्याग क्रम पद्धति को विस्थार करते हुए दृढ बनाकर पुनः हम आप लोगों को ऐकही समय पर बाह्य एवं अन्तर्याग के द्वारा महायागक्रम के व्यक्तिगत सपर्या के अनुकूल वतावरण उपस्थित करते हुए पूर्व किये गये 'बहिर्यागक्रमः से पृथक एवं स्वोंत्कृष्ट एवं अपरोक्ष ज्ञान प्राप्ति के मूल स्त्रोत तक पहुँचाने वाला बर्हियागक्रिमः का यहाँ परिचय तथा प्रशिक्षण दे रहे हैं। अतः जो दीर्घ काल श्रीविद्या सम्पत्ति से सम्पन्न सतत प्रयत्न विभूति प्राप्त साधक गण, पूर्व कहे गये अन्य बहिर्याग क्रम सपर्या से इस पद्धति पर अधिक ध्यान दे कर जो मुख्य समझे या जिसे अपने अनुकुल समझे — जिस पद्धति आप को बाह्य वृत्ति से छुटाकारा प्रदान कर महायागक्रम-भूमिका पर स्थित कराती है, लक्ष्य प्राप्ति के निकट ले जाती है अपरोक्षज्ञान का उत्तमाधिकारी बनाती है — यहाँ परिच्य करा रहें है।

**नारायण। जगत कुस्त्रनम वासुदेवमयम्**

**द्वीपपूजा**

**ॐ ऐं ह्रीं श्रीं रक्तद्वादशयुक्ताय द्वीपनाथाय नमः।**

इति द्वीपेपष्पांजलिं दत्वा।

गुरुमन्त्रं अभ्यर्च्य।

**ॐ ऐं ह्रीं श्रीं समस्तप्रकट गुप्तगुप्ततर सम्प्रदायकुलकौल-निगर्भरहस्यातिरहस्य परापर रहस्य योगिनीचक्रदेवताभ्यो नमः।** बिन्दुं अभ्यर्च्य।

**ॐ ऐं ह्रीं श्रीं श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भौरवं सिद्धौघं बटुकत्रयं पदयुगं दूतिक्रमं मण्डलं वीराद्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलं वन्देगुरुपदद्वन्द्वमवाङ्मानसगोचरं रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः** मध्यत्रिकोणस्य अग्रकोणे।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसश्शिवस्सोहं स्वरूपनिरूपणहेतवे अमुक गुरुवे नमः मध्यत्रिकोणस्य वायुकोणेषु।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सोहं हंसश्शिवः स्वच्छप्रकाशविमर्श हेतवे अमुक परमगुरुवे नमः।** मध्यत्रिकोणस्य नैर्ऋतिकोणेषु त्रिकोणस्य पश्चिमरेखश्चान्तरे विमलाजयिन्योर्मध्ये अरुणावाग्देवतान्निधौ दक्षिणोत्तरायतं रेखात्रयं विभाव्य दक्षिणसंस्थाक्रमेण दिव्यसिद्धमानवाख्ययोघत्रयं मुनिदेववसुसंख्यां समर्चयेत्।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसस्सोहं सोहं हंसश्शिवः स्वात्मारामपरमानन्द पञ्जरविलीनतेजसे अमुक परमेष्ठिगुरव नमः।** उपरिप्रथमरेखायां।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हंसस्सोहं परमेष्ठिगुरवे नमः।** द्वितीयरेखायां

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः परापरगुरुभ्यो नमः।** तृतीयरेखायां।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीललितामहात्रिपुरसन्दर्यै नमः।** बिन्दु इति गुरमन्त्रैः अभ्यर्च्य। अथ श्रीचक्रं पुरतः प्रतिष्टाप्य।

पीठपूजां आरभेत्। **मूलम्** कुशजलेन भूमिं शोधयेत्।

**ॐ ऐं ह्रीं श्रीं प्र ललितामहात्रिपुरसुन्दर्यै नमः।।** त्रिकोणस्य अग्रकोणे।।

**ॐ ऐं ह्रीं श्रीं द्वि ललितामहात्रिपुरसुन्दर्यै नमः।।** त्रिकोणस्य वायुकोणे।।

**ॐ ऐं ह्रीं श्रीं त्रि ललितामहात्रिपुरसुन्दर्यै नमः।।** त्रिकोणस्य नैर्ऋतिकोणे।।

**ॐ ऐं ह्रीं श्रीं ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये नमः।**

**ॐ ऐं ह्रीं श्रीं शं शरवणभव। सुब्रह्मण्यस्वामिने नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सौ क्लीं ऐं। बालात्रिपुरसुन्दर्यै नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं ह्रीं श्रीं। भुवनेश्वर्यै नमः।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीललितामहात्रिपुरसुन्दर्यै नमः।**

## *आसनपूजा*

**ॐ आधारशक्त्यै नमः।**
**ॐ मूलप्रकृत्यै नमः।**
**ॐ आदिकूर्माय नमः।**
**ॐ अनन्ताय नमः।**
**ॐ वराहाय नमः।**
**ॐ कैलासगिरये नमः।**
**ॐ सहस्रस्तम्भमण्डपाय नमः।**
**ॐ रत्नसिंहासनाय नमः।**
**ॐ श्वेतच्छत्राय नमः।**
**ॐ सितचामराय नमः।**
**ॐ आत्मतत्वाय नमः।**
**ॐ विद्यातत्वाय नमः।**
**ॐ शिवतत्वाय नमः।**
**ॐ अनैश्वर्याय नमः।**

**ॐ नमो भगवते सकलतत्वाय शक्तियुक्ताय अनन्तयोग-पीठात्मने नमः।**
**ॐ ह्रींसदाशिवाय नमः।**
पूर्वद्वारे **ॐ द्वारश्रियै नमः।**
**ॐ चिच्छक्त्यै नमः।**
**ॐ मायायै नमः।**
दक्षिणद्वारे **ॐ द्वारश्रियै नमः।**
**ॐ भद्राय नमः।**
**ॐ सुभद्राय नमः।**
पश्चिमद्वारे **ॐ द्वारश्रियै नमः।**
**ॐ धात्रे नमः।**
**ॐ विधात्रे नमः।**
**ॐ आं आधारशक्तिकमलास-नाय नमः।**

उत्तरद्वारे **ॐ द्वारश्रियै नमः।**
**ॐ जयायै नमः।**
**ॐ विजयायै नमः।**
उपरिद्वारे **ॐ द्वारश्रियै नमः।**
**ॐ नन्दाय नमः।**
**ॐ सुनन्दाय नमः।**
ईशानादिकोणेषु **ॐ धर्माय नमः।**
**ॐ अधर्माय नमः।**
**ॐ ज्ञानाय नमः।**
**ॐ अज्ञानाय नमः।**
**ॐ वैराग्याय नमः।**
**ॐ अवैराग्याय नमः।**
**ॐ ऐश्वर्याय नमः।**

ॐ ऐं ह्रीं श्रीं ॐ कूं कूर्माय नमः। ॐ अं अनन्ताय नमः। ॐ प्रं पृथिव्यै नमः।
ॐ रं रसाम्बुधे नमः। ॐ रं रत्नद्वीपाय नमः। ॐ नं नन्दनोद्यानाय नमः।
ॐ रं रत्नमण्डपाय नमः। ॐ रं रत्नवेदिकाय नमः।
ॐ ऐं ह्रीं श्रीं ॐ रं रत्नसिंहासनाय नमः। ॐ श्रीचक्राय नमः।
ततः ॐ ऐं ह्रीं श्रीं ह्रीं इति मन्त्रेण पीठं विशोध्य।
ॐ ऐं ह्रीं श्रीं ॐ सां सरस्वत्यै नमः। ॐ लां लक्ष्म्यैनमः।
ॐ शं शङ्खनिधये नमः। ॐ पं पद्मननिधये नमः।
पीठस्योपरि। ॐ ऐं ह्रीं श्रीं आं आनन्दनन्दाय नमः।
ॐ ऐं ह्रीं श्रीं ॐ सं संविन्नालाय नमः।ॐ सं सर्वतत्वात्मकापद्माय नमः।
ॐ पं पञ्चाशद्वर्णाय नमः। ॐ विं विकारमयै केसरेभ्यो नमः। ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः।

## *यन्त्रस्थापनम्। श्रीचक्रप्राणपतिष्ठा*

अस्य श्रीयन्त्रराजप्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। ऋग्यजुस्सामाथर्वाणि छन्दांसि। चैतन्यं देवता। आं बीजम्। ह्रीं शक्तिः। क्रों कीलकम्। मम श्रीचक्रप्राणप्रतिष्ठायै जपे विनियोगः।

ॐ ऐं ह्रीं श्रीं अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः।
ॐ ऐं ह्रीं श्रीं उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं ॐ पं फं बं भं मं रचनादानविहरणाविसर्गानन्दात्मने ॐ कनिष्ठिकाभ्यां नमः।
ॐ ऐं ह्रीं श्रीं अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तान्तःकरणात्मने अः करतलकरपृष्ठाभ्यां नमः।

एवं हृदयादिन्यासः।

ध्यानम्

रक्ताम्बोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमळिगुणमप्यङ्कुशं पञ्चबाणान्।
बिभ्राणाऽसृक्कपालं त्रिणयनलसिता पीनवक्षीरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः।।

**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्वप्राणाः इह प्राणाः।**
**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्य जीव इह स्थिताः।**
**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्य सर्वेन्द्रियाणि।**
**ॐ ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्य वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।** इति।।

श्रीचक्रप्राणप्रतिष्ठान्त। धूपं दीपं नैवेद्यं कर्पूरं च कृत्वा।

**ॐ ऐं ह्रीं श्रीं अं अग्निमण्डलाय दशकलाय नमः।**
**ॐ ऐं ह्रीं श्रीं अं सूर्यमण्डलाय द्वादशकलाय नमः।**
**ॐ ऐं ह्रीं श्रीं मं सोममण्डलाय षोडशकलाय नमः।**

**ॐ ऐं ह्रीं श्रीं सं सत्वाय नमः।** **ॐ ऐं ह्रीं श्रीं रं रससे नमः।**
**ॐ ऐं ह्रीं श्रीं तं तमसे नमः।** **ॐ ऐं ह्रीं श्रीं आं आत्मने नमः।**
**ॐ ऐं ह्रीं श्रीं अं अन्तरात्मने नमः।** **ॐ ऐं ह्रीं श्रीं पं परमात्मने नमः।**
**ॐ ऐं ह्रीं श्रीं ह्रीं ज्ञानात्मने नमः।।** **ॐ ऐं ह्रीं श्रीं ऐं प्र कामगिरिपीठाय नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं द्वि पूर्णगिरिपीठाय नमः।** **ॐ ऐं ह्रीं श्रीं सौ जालन्द्रपीठाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौंः** मूलम् **महोट्याणपीठाय नमः।**

## *षडङ्गपूजा*

**ॐ ऐं ह्रीं श्रीं एं प्र ललितामहा मध्यम हृदया चतुरश्च** वायुकोणे
**ॐ ऐं ह्रीं श्रीं क्लीं: द्वि त्रिपुरसुन्दरीं अनामि शिरसे चतुरश्च** नैर्ऋतिकोणे
**ॐ ऐं ह्रीं श्रीं सौः त्रि त्रिपुरसुन्दरीं कनिष्टि शिखायै चतुरश्च** अग्निकोणे
**ॐ ऐं ह्रीं श्रीं ऐं प्र त्रिपुरसुन्दरीं अङ्गुष्ठा कवचा चतुरश्च** ईशनकोणे
**ॐ ऐं ह्रीं श्रीं क्लीं द्वि त्रिपुरसुन्दरीं तर्जनी** नेत्रबिन्दुकोणे
**ॐ ऐं ह्रीं श्रीं सौः त्रि त्रिपुरसुन्दरीं करतल अस्त्राय** सर्वत्रकोणे

## *आसनम्*

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सौः श्रीदेव्यात्मासनाय नमः।** अग्रकोणे
**ॐ ऐं ह्रीं श्रीं हैं हक्लीं हसौः श्रीचक्रासनाय नमः।** वायुकोणे
**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः।** नैर्ऋतिकोणे
**ॐ ऐं ह्रीं श्रीं हैं हस्रक्लीं हसौः सर्वमन्त्रासनाय नमः।** बिन्दुकोणे

ॐ ऐं ह्रीं श्रीं श्रीं ह्रीं सौः परमशिवज्योतिरभिन्न प्रकाशात्मकां स्वात्माभिन्नां परमाकाशस्वरूपिणीं श्रीललितामहात्रिपुरसुन्दरीं। ध्यात्वा।। इति पुष्पांजलिं विकीर्य त्रिकोणे।

ॐ ऐं ह्रीं श्रीं समस्तप्रकटयोगिनीभ्यो नमः। संहारचक्रदेवताभ्यो नमः।। अग्रकोणे।

ॐ ऐं ह्रीं श्रीं अतिरहस्य परापररहस्यनिगर्भ-कुलसम्प्रदाय-गुप्तगुप्ततरसमस्त-प्रकटयोगिनीभ्यो नमः। सृष्टिचक्रदेवताभ्यो नमः। वायुकोणे।

ॐ ऐं ह्रीं श्रीं समस्त-प्रकटगुप्तगुप्तरत-संप्रदायपरापररहस्य-निगर्यकुलोत्तर्णयोगिनीभ्यो नमः। स्थितिचक्रदेवताभ्यो नमः। वायुकोणे।

कालाग्निरुद्राष्टकं प्रपूजयेत् पश्चिमादिप्रादक्षिण्येत।

ॐ ऐं ह्रीं श्रीं कं कालाग्निरुद्राय नमः।।
ॐ ऐं ह्रीं श्रीं कूं कूर्माय नमः।।
ॐ ऐं ह्रीं श्रीं मं मण्डूकाय नमः।।
ॐ ऐं ह्रीं श्रीं वं वराहाय नमः।।
ॐ ऐं ह्रीं श्रीं अं आधारशक्त्यै नमः।।
ॐ ऐं ह्रीं श्रीं दिं गजेभ्यो नमः।।
ॐ ऐं ह्रीं श्रीं अं अनन्ताय नमः।।
ॐ ऐं ह्रीं श्रीं प्रं प्रदिव्यै नमः।।

दिक्पतिपूजा। ॐ पूर्वादिप्रादक्षिण्ये नमः।

## *दिक्पतिपूजा*

ॐ ऐं ह्रीं श्रीं लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। (पूर्वे।)

ॐ ऐं ह्रीं श्रीं रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। आग्नेये।

ॐ ऐं ह्रीं श्रीं टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। दक्षिणे।

ॐ ऐं ह्रीं श्रीं क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। नैर्ऋते।

ॐ ऐं ह्रीं श्रीं वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। पश्चिमे।

ॐ ऐं ह्रीं श्रीं यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। वायव्ये।

ॐ ऐं ह्रीं श्रीं सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः। उत्तरे।

**ॐ ऐं ह्रीं श्रीं हां ईशानाय त्रिशूलहस्ताय विद्याधिपतये वृषभवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः।** ऐशान्ये।

**ॐ ऐं ह्रीं श्रीं ॐ ब्रह्मणे पद्महस्ताय लोकाधिपतये हंसवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः।** इति इन्द्रेशानयोः मध्ये।।

**ॐ ऐं ह्रीं श्रीं श्रीं विष्णवे चक्रहस्ताय नागाधिपतये गरुडवाहनाय श्रीललितामहात्रिपुरसुन्दरी सपरिवाराय नमः।** इति निर्ऋतिवरुणयोः दिगन्तरे।

**ॐ ऐं ह्रीं श्रीं ॐ वास्तुपतये ब्रह्मणे नमः।** इति वास्तुनि चार्चयेत्।

## *अष्टारेषु*

### श्री भैरवीयुक्त भैरव पूजा

**ॐ ऐं ह्रीं श्रीं अं असिताङ्ग भैरवसमेत अं कं खं गं घं ङं आं ब्राह्मी देवी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं इं रुरु भैरवसमेतइं चं छं जं झं ईं माहेश्वरी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं उं चण्ड भैरवसमेत उं टं ठं डं ढं णं ऊं कौमारी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं ॠं क्रोध भैरवसमेत ॠं तं थं दं धं नं ॠं वैष्णवी श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं लृं उन्मत्त भैरवसमेत लॄं पं फं बं मं लृं वाराहि श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं एं कपालि भैरवसमेत् एं यं रं लं वं ऐं माहेन्द्री श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं औं भीषण भैरवसमेत् ओं शं षं सं औं चामुण्डा श्रीपादुकां पूजयामि नमः।।**

**ॐ ऐं ह्रीं श्रीं अं संहार भैरवसमेत् अः हं ळं क्षं अः महालक्ष्मी श्रीपादुकां पूजयामि नमः।।**

## *मन्दिरपूजा*

**ॐ ऐं ह्रीं श्रीं अमृताम्भोनिधये नमः**
**ॐ ऐं ह्रीं श्रीं रत्नद्वीपाय नमः**
**ॐ ऐं ह्रीं श्रीं नानावृक्षमहोद्यानाय नमः**
**ॐ ऐं ह्रीं श्रीं कल्पवाटिकायै नमः**
**ॐ ऐं ह्रीं श्रीं संतानवाटिकायै नमः**
**ॐ ऐं ह्रीं श्रीं हरिचन्दनवाटिकायै नमः**
**ॐ ऐं ह्रीं श्रीं मन्दारवाटिकायै नमः**
**ॐ ऐं ह्रीं श्रीं पारिजातवाटिकायै नमः**
**ॐ ऐं ह्रीं श्रीं कदम्बवाटिकायै नमः**
**ॐ ऐं ह्रीं श्रींविमर्शवापिकायै नमः**
**ॐ ऐं ह्रीं श्रींवालातपोद्गाराय नमः**
**ॐ ऐं ह्रीं श्रींचन्द्रिकोद्गाराय नमः**
**ॐ ऐं ह्रीं श्रींमहाशृङ्गारपरिघायै नमः**
**ॐ ऐं ह्रीं श्रींमहापद्माटव्यै नमः**
**ॐ ऐं ह्रीं श्रींचिन्तामणिमयगृहाराजाय नमः**
**ॐ ऐं ह्रीं श्रींपूर्वाम्नायमयपूर्वद्वाराय नमः**
**ॐ ऐं ह्रीं श्रींदक्षिणम्नायमयदक्षिणद्वाराय नमः**
**ॐ ऐं ह्रीं श्रींपश्चिमाम्नायमयपश्चिमद्वाराय नमः**

| | |
|---|---|
| ॐ ऐं ह्रीं श्रीं पुष्परागरत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं उत्तराम्नायमयोत्तरद्वाराय नमः |
| ॐ ऐं ह्रीं श्रीं पद्मरागरत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं रत्नप्रदीपवलयाय नमः |
| ॐ ऐं ह्रीं श्रीं गोमेधकात्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं मणिमयमहासिंहासनाय नमः |
| ॐ ऐं ह्रीं श्रीं वज्ररत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं ब्रह्ममयैकमञ्चपादाय नमः |
| ॐ ऐं ह्रीं श्रीं वैडूर्यरत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं विष्णुमयैकमञ्चपादाय नमः |
| ॐ ऐं ह्रीं श्रीं इन्द्रनीलरत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं रुद्रमयैकमञ्चपादाय नमः |
| ॐ ऐं ह्रीं श्रीं मुक्तारत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं ईश्वरमयैकमञ्चपादाय नमः |
| ॐ ऐं ह्रीं श्रीं मरकतरत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं सदाशिवमयैकमञ्चफलकाय नमः |
| ॐ ऐं ह्रीं श्रीं विद्रुमरत्नप्राकाराय नमः | ॐ ऐं ह्रीं श्रीं हंसतूलिकातल्पाय नमः |
| ॐ ऐं ह्रीं श्रीं माणिक्यमण्डपाय नमः | ॐ ऐं ह्रीं श्रीं हंसतूलिकामहोपधानाय नमः |
| ॐ ऐं ह्रीं श्रीं सहस्रस्तम्भमण्डपाय नमः | ॐ ऐं ह्रीं श्रीं कौसुम्भास्तरणाय नमः |
| ॐ ऐं ह्रीं श्रीं अमृतवापिकायै नमः | ॐ ऐं ह्रीं श्रीं महावितानकाय नमः |
| ॐ ऐं ह्रीं श्रीं आनन्तवापिकायै नमः | ॐ ऐं ह्रीं श्रीं महामायायवनिकायै नमः |

संक्षोभिन्यादिनवमुद्राभावयित्वा। वह्वचोपनिषत् पठत्वा यथावकाशम्)

अथ देव्याप्रेरितमनसः सन् पुनः प्रकृतिमालम्ब्य तेजोरूपेण परिणतां परमशिवज्योतिरभिन्न-प्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकां स्वात्माभिन्नां परचितं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलशतदलकमलात् वहन्नासापुटेन निर्गतां त्रिखण्डमुद्रामण्डितशिखण्डे कुसुमांचलौ तां परचितं समानीय।

**ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः श्रीललितामहात्रिपुरसुन्दर्याः अमृतचैतन्यमूर्तिं कल्पयामि नमः।**

बिन्दौ महापद्मवनं स्मरन्।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हस्र हस्रक्लीं हस्रसौः महापद्मवनान्तस्थे कारणानन्दविग्रहे सर्वभूतहिते मातः एह्येहिपरमेश्वरी मेरुमन्त्रात्मकं चक्रं श्रीत्विषः स्तत्रदेवताः कामेश्वरः प्रकाशात्मकंचक्र श्रीविमर्शस्दंगकाः। इत्येतत् वासनारूपं अभेदं च परस्परं ज्ञात्वा श्रीगुरुपत्राब्जात् कृता पूजामहाफला।**

**देवेशि भक्तसुलभे सर्वावरणसंवृते यावत्वां पूजयिष्यामितावत्त्वं सुस्थिराभव।**

## देवी आवाहनम्




**ॐ ऐं ह्रीं श्रीं सः ह्रीं भगवत्यागच्छागच्छास्मिन्मण्डले सान्निध्यं कुरु कुरु मम सुप्रसन्नं कुरु कुरु स्वाहा।** इति योनिमुद्रया ब्रह्मरध्रस्थां तटित्कोटिविडंबिनी सर्वाभरणसंच्छान्नां सपरिवारां श्रीचक्रमध्यगतां वामनासापुटमार्गविनिर्गतां देवीं बिन्दौ आवाहयेत्। आवाह्यचिन्तयेत्तत्र बिन्द्वौ मध्यनिवासिनीं मेरुमन्त्रश्चतुरश्रादिचक्रनवकविशेषणागतैर्लकारादिभिरवयवैः ज्ञातव्या। इत्यावाह्य आवाहनादिमुद्रां प्रदर्श्य।।

### प्राणप्रतिष्ठाविधिः

**अस्य श्रीललितामहात्रिपुरसुन्दरीं प्राणप्रतिष्ठा महामन्त्रस्य ब्रह्म-विष्णु-महेश्वरात्रऋषिः ऋग्यजुस्सामाथर्वणच्छन्दांसि सकलसृष्टिस्थिति संहारकारिणीरूपाप्राणशक्तिपरादेवता।**

**ॐ ऐं ह्रीं श्रीं आं बीजेभ्यो नमः** गुह्ये — **ॐ ऐं ह्रीं श्रीं ब्रह्मा बीजं** गुह्ये

**ॐ ऐं ह्रीं श्रीं ह्रीं शक्तिभ्यो नमः** पादयोः — **ॐ ऐं ह्रीं श्रीं माया शक्तिः** पादयोः

**ॐ ऐं ह्रीं श्रीं क्रों कीलकेभ्योनमः** नाभौ — **ॐ ऐं ह्रीं श्रीं जीवो बीजं** गुह्ये

**ॐ ऐं ह्रीं श्रीं स्वाहा शक्तिः** पादयोः — **ॐ ऐं ह्रीं श्रीं बुद्धि शक्तिः** पादयोः

**ॐ ऐं ह्रीं श्रीं रक्तो वर्णः** — **ॐ ऐं ह्रीं श्रीं उदानो बीजं** गुह्ये

**ॐ ऐं ह्रीं श्रीं सुषुम्नानाडी सरस्वती शक्तिः** पादयोः।।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः $\frac{\text{मूलम्}}{\text{१६}}$ मम श्रीललितामहात्रिपुरसुन्दरी प्राणपतिष्ठार्थे जपे विनियोगः नमः।**

**ॐ ऐं ह्रीं श्रीं ॐ आं आं ह्रीं क्रों ङं घं गं खं कं पृथिव्यपतेजोवाय्वाकाशप्राणात्मने क्रों ह्रीं आं यरलवशषसहों हंसस्सोहं—ॐ अं अंगुष्ठा।।** हृदया

**ॐ ऐं ह्रीं श्रीं ॐ ईं आं ह्रीं क्रों ञं झं जं छं चं शब्दस्पर्शरूपरसगन्धापानात्मने क्रों ह्रीं आं यरलवशषसहों हंसस्सोहं ॐ इं तर्जा।** शिरसे

**ॐ ऐं ह्रीं श्रीं ॐ ऊं आं ह्रीं क्रों णं ढं डं ठं टं श्रोत्रत्वक्चक्षुजिह्वाघ्राणव्यानात्मने क्रों ह्रीं आं यरलवशषसहों हंसस्सोहं ॐ उं मध्यमा।** शिरसे

**ॐ ऐं ह्रीं श्रीं ॐ ऐं आं ह्रीं क्रों नं धं दं थं तं वाक्पाणिपादपायूपस्तोदानात्मने क्रों ह्रीं आं यरलवशषसहों हंसस्सोहं ॐ एं अना।** कवचा

ॐ ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं। श्रीमहालक्ष्मीश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। त्रिशक्तिलक्ष्म्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। त्रिशक्तिलक्ष्म्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ॐ ऐं ह्रीं श्रीं श्रीं सहकलह्रीं श्रीं। महालक्ष्मीश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। सर्वसाम्राज्यलक्ष्म्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (नैर्ऋते)

## २ पञ्च कोशाम्बः

ॐ ऐं ह्रीं श्रीं मूलं। महाकोशेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्याकोशाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ॐ ऐं ह्रीं श्रीं ॐ ह्रीं हंसस्सौहं स्वाहा। महाकोशेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। परंज्योतिःकोशाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (वायव्ये)

ॐ ऐं ह्रीं श्रीं ॐ हंसः। महाकोशेश्वरीवृन्दमण्डितिासनसंस्थिता सर्वसौभाग्यजननी श्रीपादुकां पूजयामि तर्पयामि नमः। (ईशाने)

ॐ ऐं ह्रीं श्रीं हंसः। महाकोशेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। अजपाकोशाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ॐ ऐं ह्रीं श्रीं अं आंह्ळं क्षं। महाकोशेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्य जननी श्रीमहात्रिपुरसुन्दरी। मातृकाकोशाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (नैर्ऋते)

## ३ पञ्च कल्पलताः

ॐ ऐं ह्रीं श्रीं मूलं। महाकल्पलतेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्री महात्रिपुरसुन्दरी। श्रीविद्याकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ॐ ऐं ह्रीं श्रीं ह्री क्लीं ऐं ब्लूं स्त्रीं। महाकल्पलतेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। (पञ्चकामेश्वरी) त्वरिताकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (वायव्ये)

ॐ ऐं ह्रीं श्रीं ॐ ह्रीं ह्रां हसकलह्रीं ओं सरस्वत्यै नमः ह्स्रै। महाकल्पलतेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। पारिजातेश्वरीकल्पलताम्बाश्रीपादुकां पूजयामिं तर्पयामि नमः। (ईशाने)

ॐ ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं ऐं क्लीं सौः। महाकल्पलतेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्याजननी श्रीमहात्रिपुरसुन्दरी। (कुमारी) त्रिपुटाकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ॐ ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः। महाकल्पलतेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। पञ्चबाणेश्वरीकल्पलताम्बाश्रीपादुकं पूजयामि तर्पयामि नमः। (नैर्ऋते)

४ पञ्च कामदुघाः

ॐ ऐं ह्रीं श्रीं मूलं। महाकामदुघेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्याकामदुघाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ॐ ऐं ह्रीं श्रीं ॐ ह्रीं हंसः जुं संजीवनि जीवं प्राणग्रन्थिस्थं कुरु कुरु स्वाहा। महाकामदुघेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। अमृतपीठेश्वरी-कामदुघाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (वायव्ये)

ॐ ऐं ह्रीं श्रीं ऐं वद वद वाग्वादिनि हसैं क्लीं क्लिन्ने क्लेदिनि महाक्षोभं कुरु कुरु हस्क्ल्रीं सौः ओं मोक्षं कुरु कुरु हस्त्रैः। महाकामदुघेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। सुधासूकामदुघाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (ईशाने)

ॐ ऐं ह्रीं श्रीं ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अभृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा। महाकामदुघेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहत्रिपुरसुन्दरी। अमृतेश्वरी-कामदुधाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ॐ ऐं ह्रीं श्रीं ॐ ह्रीं श्रीं क्लीं ओं नमो भगवति माहेश्वरि अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा। महाकामदुघेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। अन्नपूणा-कामदुघाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (नैर्ऋते)

५ पञ्च रत्नाम्बाः

ॐ ऐं ह्रीं श्रीं मूलं। महारत्नेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। श्रीविद्या-रत्नाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (मध्ये)

ॐ ऐं ह्रीं श्रीं ज्ह्रीं महाचण्डे तेजः संकर्षिणि कालमन्थाने हः। महारत्नेश्वरीवृन्दमण्डितासनसंस्थिता सर्व-सौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। सिद्धलक्ष्मीरत्नाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (वायव्ये)

ॐ ऐं ह्रीं श्रीं ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति राजमातङ्गीश्वरी सर्वजनमनोहारि सर्वमुखरञ्जनि क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि त्रैलोक्यं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं महारत्नेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। राजमातङ्गीश्वरीरत्नाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (ईशाने)

ॐ ऐं ह्रीं श्रीं श्रीं ह्रीं श्रीं। महारत्नेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। भुवनेश्वरीरत्नाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। (आग्नेये)

ॐ ऐं ह्रीं श्रीं ऐं ग्लौं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः रुन्धे रुन्धिनि नमः जम्भे जम्भिनि नमः मोहे मोहिनि नमः स्तम्भे स्तम्भिनि नमः सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं कुरु कुरु ऐं ग्लौं ऐं ठः ठः ठः ठः हुं फट् स्वाहा। महारत्नेश्वरीवृन्दमण्डितासनसंस्थिता सर्वसौभाग्यजननी श्रीमहात्रिपुरसुन्दरी। वाराहीरत्नाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः। (नैर्ऋते)

## षड्दर्शनविद्या

ॐ ऐं ह्रीं श्रीं तारे तुत्तारे तुरे स्वाहा। तारादेवताधिष्ठितबौद्धदर्शनाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं गायत्री परोरजसि सावदों। ब्रह्मदेवताधिष्ठितवैदिकदर्शनाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं ओं ह्रीं नमश्शिवाय। रुद्रदेवताधिष्ठितशैवदर्शनाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं (ओं ह्रीं घृणिस्सूर्य आदित्यो) सूर्यदेवताधिष्ठितसौरदर्शनाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं ओं नमो नारायणाय। विष्णुदेवताधिष्ठितवैष्णवदर्शनाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं ओं श्रीं ह्रीं श्रीं भुवनेश्वरीदेवताधिष्ठितशाक्तदर्शनाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं सां हंसः मूलाधाराधिष्ठानदेवतायै साकिनीसहितगणनाथस्वरूपिण्यै नमः। गणनाथस्वरूपिण्य-म्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं कां सोहं स्वाधिष्ठानाधिष्ठानदेवतायै काकिनीसहितब्रह्मस्वरूपिण्यै नमः। ब्रह्मस्वरूपिण्यम्बा-श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं लां हंसस्सोहं मणिपूरकाधिष्ठानदेवतायै लाकिनीसहितविष्णुस्वरूपिण्यै नमः। विष्णुस्वरूपिण्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं रां हंसश्शिवस्सोहं अनाहताधिष्ठानदेवतायै राकिणीसहितसदाशिवस्वरूपिण्यै नमः। सदाशिवस्वरूपिण्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं डां सोहं हंसश्शिवः विशुद्ध्यधिष्ठानदेवतायै डाकिनीसहितजीवेश्वरस्वरूपिण्यै नमः। जीवेश्वरस्वरूपिण्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं हां हंसश्शिवस्सोहं सोहं हंसश्शिवः आज्ञाधिष्ठानदेवतायै हाकिनीसहित-परमात्मस्वरूपिण्यै नमः। परमात्मस्वरूपिण्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

## आम्नायसमष्टिपूजा

ॐ ऐं ह्रीं श्रीं हस्त्रै हस्क्ल्रीं हस्त्रौः। पूर्वाम्नायसमयविद्येश्वर्युन्मोदिनीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं मूलं गुरुत्रयगणपतिपीठत्रयसहितायै शुद्धविद्यादिसमयविद्येश्वरीपर्यन्तचतुर्विंशतिसहस्त्रदेवतापरिसेवितायै कामगिरिपीठस्थितायै पूर्वाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं ॐ ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवे कुले हसौः। दक्षिणाम्नायसमयविद्येश्वरी-भोगिनीदेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं मूलं भैरवाष्टकनवसिद्धौघवटुकत्रयपदयुगसहितायै सौभाग्यविद्यादि-समयविद्येश्वरीपर्यन्तत्रिंशत्सहस्त्रदेवतापरिसेवितायै पूर्णगिरिपीठस्थितायै दक्षिणाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दुरीश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं मूलं दशदूतीमण्डलत्रयदशवीरचतुःषष्टिसिद्धनाथसहितायै लोपामुद्रादिसमय-विद्येश्वरीपर्यन्तद्विसहस्त्रदेवतापरिसेवितायै जालन्धरपीठस्थितायै पश्चिमाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरीश्रापादुकीं पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें महाचण्डयोगीश्वरि कालिके फट्। उत्तराम्नायसमय-विद्येश्वरीकालिकादेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ ऐं ह्रीं श्रीं मूलं नवमुद्रापञ्चवीराबळीसहितायै तुर्याम्बादिसमयविद्येश्वरीपर्यन्तद्विसह-स्त्रदेवतापरिसेवितायै ओड्याणपीठस्थितायै उत्तराम्नाय समष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुर-सुन्दरीश्रीपादुकां पूजयामि तर्पयामि नमः।

मूलेन देवीं त्रिः संतर्पयेत्।।

## दण्डनाथानामानि

| | | | |
|---|---|---|---|
| ॐ ऐं ह्रीं श्रीं ॐ पञ्चम्यै | नमः | ॐ ऐं ह्रीं श्रीं ॐ पोत्रिण्यै | नमः |
| ॐ ऐं ह्रीं श्रीं ॐ दण्डनाथायै | नमः | ॐ ऐं ह्रीं श्रीं ॐ शिवायै | नमः |
| ॐ ऐं ह्रीं श्रीं ॐ सङ्केतायै | नमः | ॐ ऐं ह्रीं श्रीं ॐ वार्ताल्यै | नमः |
| ॐ ऐं ह्रीं श्रीं ॐ समयेश्वर्यै | नमः | ॐ ऐं ह्रीं श्रीं ॐ महासेनायै | नमः |
| ॐ ऐं ह्रीं श्रीं ॐ समयसङ्केतायै | नमः | ॐ ऐं ह्रीं श्रीं ॐ आज्ञाचक्रेश्वर्यै | नमः |
| ॐ ऐं ह्रीं श्रीं ॐ वाराह्यै | नमः | ॐ ऐं ह्रीं श्रीं ॐ अरिघ्न्यै | नमः |

## मन्त्रिणी नामानि

ॐ ऐं ह्रीं श्रीं ॐ संगीतयोगिन्यै नमः ॐ ऐं ह्रीं श्रीं ॐ वीणावत्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ श्यामायै नमः ॐ ऐं ह्रीं श्रीं ॐ वैणिक्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ श्यामळायै नमः ॐ ऐं ह्रीं श्रीं ॐ मुद्रिण्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ मन्त्रनायिकायै नमः ॐ ऐं ह्रीं श्रीं ॐ प्रियकप्रियायै नमः
ॐ ऐं ह्रीं श्रीं ॐ मन्त्रिण्यै नमः ॐ ऐं ह्रीं श्रीं ॐ नीपप्रियायै नमः
ॐ ऐं ह्रीं श्रीं ॐ सचिवेशान्यै नमः ॐ ऐं ह्रीं श्रीं ॐ कदम्बेश्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ प्रधानेश्यै नमः ॐ ऐं ह्रीं श्रीं ॐ कदम्बवनवासिन्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ शुकप्रियायै नमः ॐ ऐं ह्रीं श्रीं ॐ सदामदायै नमः

## ललितानामानि

ॐ ऐं ह्रीं श्रीं ॐ सिंहासनेश्यै नमः ॐ ऐं ह्रीं श्रीं ॐ कामेश्वर्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ ललितायै नमः ॐ ऐं ह्रीं श्रीं ॐ परमेश्वर्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ महाराज्ञ्यै नमः ॐ ऐं ह्रीं श्रीं ॐ कामराजप्रियायै नमः
ॐ ऐं ह्रीं श्रीं ॐ वराङ्कुशायै नमः ॐ ऐं ह्रीं श्रीं ॐ कामकोटिकायै नमः
ॐ ऐं ह्रीं श्रीं ॐ चापिन्यै नमः ॐ ऐं ह्रीं श्रीं ॐ चक्रवर्तिन्यै नमः
ॐ ऐं ह्रीं श्रीं ॐ त्रिपुरायै नमः ॐ ऐं ह्रीं श्रीं ॐ महाविद्यायै नमः
ॐ ऐं ह्रीं श्रीं ॐ महात्रिपुरसुन्दर्यै नमः ॐ ऐं ह्रीं श्रीं ॐ शिवायै नमः
ॐ ऐं ह्रीं श्रीं ॐ सुन्दरीचक्रनाथायै नमः ॐ ऐं ह्रीं श्रीं ॐ अनङ्गवल्लभायै नमः
ॐ ऐं ह्रीं श्रीं ॐ सम्राज्ञ्यै नमः ॐ ऐं ह्रीं श्रीं ॐ सर्वपाटलायै नमः
ॐ ऐं ह्रीं श्रीं ॐ चक्रिण्यै नमः ॐ ऐं ह्रीं श्रीं ॐ आम्नायनाथायै नमः
ॐ ऐं ह्रीं श्रीं ॐ महादेव्यै नमः ॐ ऐं ह्रीं श्रीं ॐ सर्वाम्नायनिवासिन्यै नमः

ॐ शृङ्गारनायिकायै नमः

## श्रीविद्यामन्त्र कीर्तनम्

श्री संगीत त्रिमूर्ति मुक्तुस्वामी दीक्षित प्रणींत

रागम् मध्यामावर्ति पल्लवी तालम-एक तालम्

श्रीमाता श्रीमाता ह्री श्रीं माता ललिताम्बा
श्री माता श्री माता ह्रीं श्रीं माता ललिताम्बा
श्री बाला श्री बाला ऐं क्लीं सौः बालाम्बा
श्री बाला श्री बाला ऐं क्लीं सौः बालाम्बा
कलयाणि कलयाणि क कार रूपा कल्याणि
कलयाणि कलयाणि क कार रूपा कलयाणि
ह्लींकारी ह्लींकारी ह्लींकार पर सौख्यता
ह्लींकरी ह्लींकारी ह्लींकार पर सौख्यता -श्री माता

अनुपल्लवी

श्री राजेश्वरीं महात्रिपुर सुन्दरीं
ललिता पट्टारिकां मजेहं भजे
विदेह कैवल्यं आसु एहि देहि मांपाहि राजसजेश्वरीं भजे।

चरणम्

आराधयामि सततं गं गणपतिं सौः शखणं
अं आं सौः त्रैलोक्यं ऐं क्लीं सौः सर्वाशां
हीं हक्लीं सौः संक्षोमणं भ ऐं हक्लीं हसौः सौभाग्य
हसौः हस्क्लीं हसौः सर्वाण्र्थं हीं क्लीं ब्लें सर्वरक्षां
हीं श्रीं सौः रोगहरं हसौं हस्क्लीं हस्त्रौः सर्वसिद्धिं
क ए ई ल ह्लीं ह स क ह ल ह्लीं स क ल ह्लीं श्रीं सर्वानन्दं
श्री नाथानन्द गुरूपादुकां पूजये सदा
चितानन्द मा होहं कामेश्वराङ्ग निलयां
वैश्रवण विनुत भह्लीं प्रणवती
गुरू गुह जननीं विरिचितय शुभमंगलां
मंगलां जयमंगलां — श्री राजराजेश्वरीं महात्रिपुर सुन्दरीं
ललित पट्टारिकां भजेहं भजे
विदेह कैवल्यं आसुएहि देहि माम्पाहि श्री राजराजेश्वरीं भजे -श्री माता

अथ यथावकाशं सहस्रनामावल्यादिना अर्चनं कुर्यात्। उत्तारार्ध पूजां कुर्यात।

# ४. महायागक्रम सपर्या खण्डः

## *पररूप व्यष्टि अन्तर्याग (मानसिक ) सपर्या पद्धतिः*

**संपादकीय टिप्पणीः —** इस सपर्या में मानसिक सन्तुलन का श्रेष्ठ प्रशिक्षिण एवं अपरोक्ष ज्ञान का अनुभव हमें शनैः शनैः कराते हुए लक्षय प्राप्ति तक ले जाता है —

### महायागक्रमः

### *भावनोपनिषत्प्रयोगः*

### भावनोपनिषत्प्रयोगे व्यष्टिअन्तर्याग क्रम सपर्याः

**अथ भावनोपनिषदा भक्त्यै या भावनाः कथिताः। भास्कररायो रचयति तासामेवं व्यष्टिअतर्याग प्रयोगविधिम्।**

*श्रीब्रह्मविद्यासंप्रदाय गुरुध्यानम्*

ॐ आब्रह्मलोकादाशेषादालोकालोकपर्वतात्।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम्।।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्यः।
सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्माहमस्मि, सोहमस्मि, ब्रह्माहमस्मि।

## *गुरुत्रयम्*

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान्द्व्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः।।

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः।।

नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमयास्य शिष्यम्।।

**श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम्।**
**तं त्रोटकं वार्तिककारभव्यानस्मद्गुरून् सन्ततमानतोऽस्मि।।**

## *श्रीगुरुपादुकामन्त्रः*

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं, हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः हंसः शिवः सोहं स्वरूपनिरूपणहेतवे श्रीगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः, हस्ख्फ्रें हसक्षमलवरयूं हसौः सहक्षमलवरयीं स्हौः सोहं हंसः शिवः स्वच्छप्रकाशविमर्शहेतवे श्रीपरमगुरवे नमः, अमुकानन्दनाथ श्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः, हस्ख्फ्रें हसक्षमलवरयूं स्हौः सोहं हंसः शिवः स्वात्मासमपञ्जर-विलीनतेजसे श्रीपरमेष्ठिगुरवे नमः, अमुकानन्दनाथश्रीपादुकां पूजयामि नमः।**

इति मृगीमुद्रया गुरुपादुकामुच्चार्य, धेन्योसुमुख-सुवृत्त चतुरश्रमुद्ररयोन्याख्याभिः पञ्चभिर्मुद्राभिः प्रणमेत्। मूलेन प्राणनायम्य।

**ऋष्यादिन्यासत्रयं कृत्वा।**

## *न्यासः*

**अस्य श्रीभावनोपनिषत्प्रयोगहामन्त्रस्य ॐ ऐं ह्रीं श्रीं आनन्दभैरवाय ऋषये नमः**- शिरसि। **ॐ ऐं ह्रीं श्रीं पङ्क्त्यै छन्दसे नमः-मुखे। ॐ ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः**—हृदि। **ॐ ऐं ह्रीं श्रीं ऐं बीजाय नमः**—गुह्ये। **ॐ ऐं ह्रीं श्रीं सौः शक्तये नमः**—पादयोः। **ॐ ऐं ह्रीं श्रीं क्लीं कीलकाय नमः**—नाभौ। (उक्तबीजशक्तिकीलकानि नाभिगुह्यपादेषु प्रायशो न्यस्तव्यानीति, मूलविद्याखण्डत्रयेणापि न्यस्तव्यानीति च केषाञ्चिदभिमतम्)। **ॐ ऐं ह्रीं श्रीं श्रीललितामहात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः**—करसम्पुटे।

**ॐ ऐं ह्रीं श्रीं मूलविद्यया सर्वङ्गे त्रिः व्यापकम्।।**
**ॐ ऐं ह्रीं श्रीं क ए ई ल ह्रीं अङ्गुष्ठाभ्यां नमः।।**
**ॐ ऐं ह्रीं श्रीं ह स क ह ल ह्रीं तर्जनीभ्यां स्वाहा।।**
**ॐ ऐं ह्रीं श्रीं स क ल ह्रीं मध्यमाभ्यां वषट्।।**
**ॐ ऐं ह्रीं श्रीं क ए ई ल ह्रीं अनामिकाभ्यां हुम्।।**
**ॐ ऐं ह्रीं श्रीं ह स क ह ल ह्रीं कनिष्ठिकाभ्यां वौषट्।।**
**ॐ ऐं ह्रीं श्रीं स क ल ह्रीं करतलकरपृष्ठाभ्यां फट्।।**

एवं हृदयादिन्यासः, यथा—

**ॐ ऐं ह्रीं श्रीं क ए ई ल ह्रीं हृदयाय नमः।।**
**ॐ ऐं ह्रीं श्रीं ह स क ह ल ह्रीं शिरसे स्वाहा।।**

ॐ ऐं ह्रीं श्रीं स क ल ह्रीं शिखायै वषट्।।
ॐ ऐं ह्रीं श्रीं क ए ई ल ह्रीं कवचाय हुम्।।
ॐ ऐं ह्रीं श्रीं ह स क ह ल ह्रीं नेत्रत्रयाय वौषट्।।
ॐ ऐं ह्रीं श्रीं स क ल ह्रीं अस्त्राय फट्।।

भूर्भुवस्वरोम् इति दिग्बन्धः।।

## श्रीगुरूमण्डलम्

**विवेकवृत्त्यवच्छिन्न चिच्छक्तिरूपसुषम्नात्मने श्रीगुरवे नमः।** इति ब्रह्मरन्ध्रं स्पृष्ट्वा।




**१ प्रथम रेखा विभाव्य**

| | | |
|---|---|---|
| दक्षश्रोत्ररूप | पयस्विन्यात्मने | ॐ ऐं ह्रीं श्रीं अं प्रकाशानन्दनाथाय नमः। |
| वामश्रोत्ररूप | शङ्खिन्यात्मने | ॐ ऐं ह्रीं श्रीं लृं विमर्शानन्दनाथाय नमः। |
| जिह्वारूप | सरस्वत्यात्मने | ॐ ऐं ह्रीं श्रीं कं आनन्दानन्दनाथाय नमः। |

### २. द्वितीय रेखा विभाव्य

| | | |
|---|---|---|
| दक्षनेत्ररूप | पूषात्मने | ॐ ऐं ह्रीं श्रीं चं ज्ञानानन्दनाथाय नमः। |
| वामनेत्ररूप | गान्धार्यात्मने | ॐ ऐं ह्रीं श्रीं टं सत्यानन्दनाथाय नमः। |
| ध्वजरूप | कुह्वात्मने | ॐ ऐं ह्रीं श्रीं तं पूर्णानन्दनाथाय नमः। |

### ३. तृतीय रेखा विभाव्य

| | | |
|---|---|---|
| दक्षनासारूप | पिङ्गलात्मने | ॐ ऐं ह्रीं श्रीं पं स्वभावानन्दनाथाय नमः। |
| वामनासारूप | इडात्मने | ॐ ऐं ह्रीं श्रीं यं प्रतिभानन्दनाथाय नमः। |
| पायुरूप | अलंबुसात्मने | ॐ ऐं ह्रीं श्रीं षं सुभगानन्दनाथाय नमः। |

इति तत्स्थानानि संपृश्य,

## देहम्



| | | |
|---|---|---|
| सहस्त्रदलम ७ | | ७ ब्रह्मन्ध्रम |
| द्विदलम ६ | | ६ आज्ञा |
| षोडशदलम् ५ | | ५ विशुद्धि |
| द्वादशदलम् ४ | | ४ अनाहतम् |
| दशदलम् ३ | | ३ मणिपूरकम् |
| षट्दलम् २ | | २ स्वाधिष्टानम् |
| चतुर्थदलम १ | | १ मूलाधारम् |

## श्रीचक्रम्



| | |
|---|---|
| नवचक्ररूपश्रीचक्रात्मने | ॐ ऐं ह्रीं श्रीं देहाय नमः। |
| पितृरूप अस्थ्यादि अवयवात्मने | ॐ ऐं ह्रीं श्रीं वाराह्यै नमः। |
| मातृरूप मांसादि अवयवात्मने | ॐ ऐं ह्रीं श्रीं बलिदेवतायै कुरुकुल्लायै नमः। |

इति त्रिर्व्यापकं कृत्वा।

| | | |
|---|---|---|
| २. देहपश्चाद्भागरूप | धर्मात्मने | ॐ ऐं ह्रीं श्रीं इक्षुसागराय नमः। |
| देहप्राग्भागरूप | कामात्मने | ॐ ऐं ह्रीं श्रीं घृतसागराय नमः। |
| देहोदग्भागरूप | मोक्षात्मने | ॐ ऐं ह्रीं श्रीं क्षीरसागराय नमः। |

देहात्मने ॐ ऐं ह्रीं श्रीं नवरत्नद्वीपाय नमः।

इति त्रिर्व्यापकं कृत्वा

| | | |
|---|---|---|
| ३. | मांसात्मने | ॐ ऐं ह्रीं श्रीं पुष्परागरत्नद्वीपाय नमः। |
| | रोमात्मने | ॐ ऐं ह्रीं श्रीं नीलरत्नद्वीपाय नमः। |
| | त्वगात्मने | ॐ ऐं ह्रीं श्रीं वैडूर्यरत्नद्वीपाय नमः। |

| | |
|---|---|
| रुधिरात्मने | ॐ ऐं ह्रीं श्रीं माणिक्यरत्नद्वीपाय नमः। |
| शुक्लात्मने | ॐ ऐं ह्रीं श्रीं मौक्तिकरत्नद्वीपाय नमः। |
| मज्जात्मने | ॐ ऐं ह्रीं श्रीं मरकतरत्नद्वीपाय नमः। |
| अस्थ्यात्मने | ॐ ऐं ह्रीं श्रीं वज्ररत्नद्वीपाय नमः। |
| मेदात्मने | ॐ ऐं ह्रीं श्रीं गोमेदकरत्नद्वीपाय नमः। |
| ओजात्मने | ॐ ऐं ह्रीं श्रीं पद्मरागरत्नद्वीपाय नमः। |

४ मांसाधिदेवतायै ॐ ऐं ह्रीं श्रीं कालचक्रेश्वर्यै नमः।

| | |
|---|---|
| रोमाधिदेवतायै | ॐ ऐं ह्रीं श्रीं मुद्राचक्रेश्वर्यै नमः। |
| त्वगधिदेवतायै | ॐ ऐं ह्रीं श्रीं मातृकाचक्रेश्वर्यै नमः। |
| रुधिराधिदेवतायै | ॐ ऐं ह्रीं श्रीं रत्नचक्रेश्वर्यै नमः। |
| शुक्लाधिदेवतायै | ॐ ऐं ह्रीं श्रीं देशचक्रेश्वर्यै नमः। |
| मज्जाधिदेवतायै | ॐ ऐं ह्रीं श्रीं गुरुचक्रेश्वर्यै नमः। |
| अस्थ्याधिदेवतायै | ॐ ऐं ह्रीं श्रीं तत्त्वचक्रेश्वर्यै नमः। |
| मेदोधिदेवतायै | ॐ ऐं ह्रीं श्रीं ग्रहचक्रेश्वर्यै नमः। |
| ओजोधिदेवतायै | ॐ ऐं ह्रीं श्रीं मूर्तिचक्रेश्वर्यै नमः। |

५ सङ्कल्पात्मभ्यः ॐ ऐं ह्रीं श्रीं कल्पतरुभ्यो नमः।

तेजात्मने ॐ ऐं ह्रीं श्रीं कल्पकोद्यानाय नमः।

६ मधुररसात्मने ॐ ऐं ह्रीं श्रीं वसन्तर्त्तवे नमः।

| | |
|---|---|
| आम्लरसात्मने | ॐ ऐं ह्रीं श्रीं ग्रीष्मर्त्तवे नमः। |
| तिक्तरसात्मने | ॐ ऐं ह्रीं श्रीं वर्षर्त्तवे नमः। |
| कटुरसात्मने | ॐ ऐं ह्रीं श्रीं शरदृत्तवे नमः। |
| कषायरसात्मने | ॐ ऐं ह्रीं श्रीं हेमन्तर्त्तवे नमः। |
| लवणरसात्मने | ॐ ऐं ह्रीं श्रीं शिशिरर्त्तवे नमः। |

७. इन्द्रियात्मभ्योऽश्वेभ्यो नमः।

| | |
|---|---|
| इन्द्रियार्थात्मभ्यो | ॐ ऐं ह्रीं श्रीं गजेभ्यो नमः। |
| करुणात्मिकायै | ॐ ऐं ह्रीं श्रीं तोयपरिघायै नमः। |
| ओजःपुञ्जात्मने | ॐ ऐं ह्रीं श्रीं माणिक्यमण्डपाय नमः। |

| | |
|---|---|
| **ज्ञानात्मने** | **ॐ ऐं ह्रीं श्रीं विशेषार्घ्याय नमः।** |
| **ज्ञेयात्मने** | **ॐ ऐं ह्रीं श्रीं हविषे नमः।** |
| **ज्ञात्रात्मने** | **ॐ ऐं ह्रीं श्रीं (होत्रे नमः) स्वात्मने नमः।** |
| **चिदात्मने** | **ॐ ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दर्यै नमः।** |

इति तत्तदनुसन्धानपूर्वकं मनसा नत्वा,

## *श्रीनित्यादेवीयजनम्*

८. ज्ञातृज्ञानज्ञेयानां नामरूपविलापनानुसन्धानेन चिन्मात्रूपताविभावनेन क्षणं विश्रम्य हृदि हस्तं निधाय—

**ॐ ऐं ह्रीं श्रीं अं आं सौः त्रिपुराचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः त्रिपुरेशीचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं हैं हक्लीं हसौः त्रिपुरवासिनीचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं हसैं हस्क्लीं हसौः त्रिपुराश्रीचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें त्रिपुरमालिनीचक्रेश्वर्यै नमः**




**ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं हस्रैं हस्क्लीं हस्रौः त्रिपुराम्बाचक्रेश्वर्यै नमः**

**ॐ ऐं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं**

**ॐ ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दरी चक्रेश्वर्यै नमः**

इति न्यसेत्।

पञ्चदश नित्या यजेत्।

चत्वारिंशदधिकचतुर्दशशतश्वासात्मने प्रतिपत्तिथिरूप

ॐ ऐं ह्रीं श्रीं अं *कामेश्वरीनित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने द्वितीयातिथिरूप

ॐ ऐं ह्रीं श्रीं आं *भगमालिनीनित्यायै* नमः।

तदुत्तरचत्वाविंशदधिकचतुर्दशशतश्वासात्मने तृतीयातिथिरूप

ॐ ऐं ह्रीं श्रीं इं *नित्यक्लिन्नानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने चतुर्थीतिथिरूप

ॐ ऐं ह्रीं श्रीं ईं *भेरुण्डानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने पञ्चमीतिथिरूप

ॐ ऐं ह्रीं श्रीं उं *वह्निवासिनीनित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने षष्टीतिथिरूप

ॐ ऐं ह्रीं श्रीं ऊं *वज्रेश्वरीनित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने सप्तमीतिथिरूप

ॐ ऐं ह्रीं श्रीं ऋं *शिवदूतीनित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने अष्टमीतिथिरूप

ॐ ऐं ह्रीं श्रीं ॠं *त्वरितानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने नवमीतिथिरूप

ॐ ऐं ह्रीं श्रीं ऌं *कुलसुन्दरीनित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने दशमीतिथिरूप

ॐ ऐं ह्रीं श्रीं ॡं *नित्यानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने एकादशीतिथिरूप

ॐ ऐं ह्रीं श्रीं एं *नीलपताकानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने द्वादशीतिथिरू

ॐ ऐं ह्रीं श्रीं ऐं *विजयानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने त्रयोदशीतिथिरूप

ॐ ऐं ह्रीं श्रीं ओं *सर्वमङ्गलानित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने चतुर्दशीतिथिरूप

ॐ ऐं ह्रीं श्रीं औं *ज्वालामालिनीनित्यायै* नमः।

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने पौर्णमासीतिथिरूप

ॐ ऐं ह्रीं श्रीं अं *चित्रानित्यायै* नमः।

**षड्शताधिक एकविंशतिसहस्त्र श्वासात्मने ॐ ऐं ह्रीं श्रीं अः महात्रिपुरसुन्दरी महानित्यायै नमः।**

नित्यामन्त्रानपि तत्तदादौ केचित्पठन्ति। *इयं नित्याभावना सर्वान्ते एव वा कार्या।*

अधः सहस्त्रारे

***प्रथम आवरणम्***

**ॐ ऐं ह्रीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्राय चतुरश्रत्रय चक्राय नमः**

**चतुरश्र आद्यरेखायै नमः**

इति वक्ष्यमाणस्थानेषु व्यापकं न्यस्य




| | | | |
|---|---|---|---|
| १. दक्षांसपृष्ठरूप | शान्तरसात्मने | ॐ ऐं ह्रीं श्रीं अं | अणिमासिद्ध्यै नमः। |
| दक्षपाण्यङ्गुल्यग्ररूप | अद्भुतरसात्मने | ॐ ऐं ह्रीं श्रीं लं | लघिमासिद्ध्यै नमः। |
| दक्षस्फिग्रूप | करुणरसात्मने | ॐ ऐं ह्रीं श्रीं मं | महिमासिद्ध्यै नमः। |
| दक्षपादाङ्गुल्यग्ररूप | वीररसात्मने | ॐ ऐं ह्रीं श्रीं ईं | ईशितासिद्ध्यै नमः। |
| वामपादाङ्गुल्यग्ररूप | हास्यरसात्मने | ॐ ऐं ह्रीं श्रीं वं | वशितासिद्ध्यै नमः। |
| वामस्फिग्रूप | बीभत्सरसात्मने | ॐ ऐं ह्रीं श्रीं प्रां | प्राकाम्यसिद्ध्यै नमः। |
| वामपाण्यङ्गुल्यग्ररूप | रौद्ररसात्मने | ॐ ऐं ह्रीं श्रीं भुं | भुक्तिसिद्ध्यै नमः। |
| वामांसपृष्ठरूप | भयानकरसात्मने | ॐ ऐं ह्रीं श्रीं इं | इच्छासिद्ध्यै नमः। |
| चूलीमूलरूप | शृङ्गाररसात्मने | ॐ ऐं ह्रीं श्रीं प्रां | प्राप्तिसिद्ध्यै नमः। |
| चूलीपृष्ठरूप | नियत्यात्मने | ॐ ऐं ह्रीं श्रीं सं | सर्वकामसिद्ध्यै नमः। |

अधः सहस्त्रारस्योपरि विषुसंख्ये षड्दले

**चतुरश्रमध्यरेखायै नमः** इति तदन्तर्व्यापकं न्यस्य

**पादाङ्गुष्ठद्वयरूप कामात्मने ॐ ऐं ह्रीं श्रीं ब्राह्म्यै नमः।**

**दक्षपार्श्वरूप क्रोधात्मने ॐ ऐं ह्रीं श्रीं माहेश्वर्यै नमः।**

**मूर्द्धरूप लोभात्मने ॐ ऐं ह्रीं श्रीं कौमार्यै नमः।**

**वामपार्श्वरूप मोहात्मने ॐ ऐं ह्रीं श्रीं वैष्णव्यै नमः।**

**वामजानुरूप मदात्मने ॐ ऐं ह्रीं श्रीं वाराह्यै नमः।**

**दक्षजानुरूप मात्सर्य्यात्मने ॐ ऐं ह्रीं श्रीं इन्द्राण्यै नमः।**

**दक्षबहिरंशरूप पुण्यात्मने ॐ ऐं ह्रीं श्रीं चामुण्डायै नमः।**

**वामबहिरंशरूप पापात्मने ॐ ऐं ह्रीं श्रीं महालक्ष्म्यै नमः।**




**चतुरश्रान्त्यरेखायै नमः** इति तदन्तर्व्यापकं न्यस्य।

**पादाङ्गुष्ठद्वयरूपसहस्त्रदलकमलात्मने**

**ॐ ऐं ह्रीं श्रीं द्रां सर्वसङ्क्षोभिणीमुद्रायै नमः।**

**दक्षपार्श्वरूपमूलाधारात्मने**

**ॐ ऐं ह्रीं श्रीं द्रीं सर्वविद्राविणीमुद्रायै नमः।**

**मूर्धरूपस्वाधिष्ठानात्मने**

**ॐ ऐं ह्रीं श्रीं क्लीं सर्वाकर्षिणीमुद्रायै नमः।**

**वामपार्श्वरूपमणिपूरात्मने**

**ॐ ऐं ह्रीं श्रीं ब्लू सर्ववशङ्करीमुद्रायै नमः।**

**वामजानुरूपअनाहतात्मने**

**ॐ ऐं ह्रीं श्रीं सः सर्वोन्मादिनीमुद्रायै नमः।**

**दक्षजानुरूपविशुद्धात्मने** **ॐ ऐं ह्रीं श्रीं क्रों सर्वमहाङ्कुशामुद्रायै नमः।**

**दक्षोरूप इन्द्रयोन्यात्मने** **ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें सर्वखेचरीमुद्रायै नमः।**

**वामोरूपआज्ञात्मने द्वादशान्त [र]** **ॐ ऐं ह्रीं श्रीं हसौः सर्वबीजमुद्रायै नमः।**

**रूपोर्ध्वसहस्त्रदलकमलात्मने** **ॐ ऐं ह्रीं श्रीं ऐं सर्वयोनिमुद्रायै नमः।**

**पादाङ्गुष्ठरूपाधारनवकात्मने** **ॐ ऐं ह्रीं श्रीं हस्त्रैं हस्क्लरीं हस्त्रौः सर्वत्रिखण्डामुद्रायै नमः।**

**हृद्रूपत्रैलोक्यमोहनचक्रेश्वर्यै** **ॐ ऐं ह्रीं श्रीं त्रिपुरायै नमः।**

इति तत्तत्स्थानानि स्पृष्ट्वैताः एताः सर्वाः स्वात्माभिन्नत्वेन विभाव्य स्वात्मनः अरिच्छेदराहित्यं विभावयेत्।

| | |
|---|---|
| प्रकटयोगिनीरूपस्वात्मात्मने | ॐ ऐं ह्रीं श्रीं अं अणिमासिद्ध्यै नमः। |
| अपरिच्छिन्नस्वात्मात्मने | ॐ ऐं ह्रीं श्रीं द्रां सर्वसङ्क्षोभिणीमुद्रायै नमः। |

इति प्रयोगपूर्वं भावयेत्।

*द्वितीय आवरणम्*






ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सर्वाशापूरकचक्राय षोडशदलपद्माय नमः इति तदन्तर्व्यापकं न्यस्य।

| | |
|---|---|
| १०. दक्षश्रोत्रपृष्ठरूपपृथिव्यात्मने | ॐ ऐं ह्रीं श्रीं अं कामाकर्षिणीनित्याकलायै नमः। |
| दक्षांशरूपात्मने | ॐ ऐं ह्रीं श्रीं आं बुद्ध्याकर्षिणीनित्याकलायै नमः। |
| दक्षकूर्पररूपतेजात्मने | ॐ ऐं ह्रीं श्रीं इं अहङ्काराकर्षिणीनित्याकलायै नमः। |
| दक्षकरपृष्ठरूपवाय्वात्मने | ॐ ऐं ह्रीं श्रीं ईं शब्दाकर्षिणीनित्याकलायै नमः। |
| दक्षोरुरूपाकाशात्मने | ॐ ऐं ह्रीं श्रीं उं स्पर्शाकर्षिणीनित्याकलायै नमः। |
| दक्षजानुरूपश्रोत्रात्मने | ॐ ऐं ह्रीं श्रीं ऊं रूपाकर्षिणीनित्याकलायै नमः। |
| दक्षगुल्फरूपत्वगात्मने | ॐ ऐं ह्रीं श्रीं ऋं रसाकर्षिणीनित्याकलायै नमः। |
| दक्षपादतलरूपचक्षुरात्मने | ॐ ऐं ह्रीं श्रीं ॠं गन्धाकर्षिणीनित्याकलायै नमः। |
| वामपादतलरूपजिह्वात्मने | ॐ ऐं ह्रीं श्रीं लृं चित्ताकर्षिणीनित्याकलायै नमः। |
| वामगुल्फरूपघ्राणात्मने | ॐ ऐं ह्रीं श्रीं लॄं धैर्याकर्षिणीनित्याकलायै नमः। |
| वामजानुरूपवागात्मने | ॐ ऐं ह्रीं श्रीं एं स्मृत्याकर्षिणीनित्याकलायै नमः। |
| वामोरुरूपपाण्यात्मने | ॐ ऐं ह्रीं श्रीं ऐं नामाकर्षिणीनित्याकलायै नमः। |
| वामकरपृष्ठरूपपादात्मने | ॐ ऐं ह्रीं श्रीं ओं बीजाकर्षिणीनित्याकलायै नमः। |
| वामकूर्पररूपवाय्वात्मने | ॐ ऐं ह्रीं श्रीं औं आत्माकर्षिणीनित्याकलायै नमः। |



**वामांसरूपोपस्थात्मने**

**ॐ ऐं ह्रीं श्रीं अं अमृताकर्षिणीनित्याकलायै नमः।**

**वामश्रोत्रपृष्ठरूपविकृतमनात्मने**

**ॐ ऐं ह्रीं श्रीं अः शरीराकर्षिणीनित्याकलायै नमः।**

**हृद्रूपसर्वाशापरिपूरकचक्रेश्वर्यै**

**ॐ ऐं ह्रीं श्रीं त्रिपुरेश्वर्यै नमः।**

**गुप्तयोगिनीरूपस्वात्मात्मने**

**ॐ ऐं ह्रीं श्रीं लं लघिमासिद्ध्यै नमः।**

**अपरिच्छिन्नरूपस्वात्मात्मने**

**ॐ ऐं ह्रीं श्रीं द्रीं सर्वविद्राविणीमुद्रायै नमः।**

## *तृतीय आवरणम्*

मूलाधार चक्रम् — गुदोपरि पृथिवी तत्वं ५६ मयूखाः

आनन्द भैरवी समेत आनन्दभैरव आदि ज्ञात्वा

**ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सौः सर्वसङ्क्षोभणचक्राय अष्टदलपद्माय नमः** तदन्तर्व्यापकं न्यस्य।






**११. अष्टदलपद्माय नमः** इति व्यापकं न्यस्य।

**दक्षशङ्खरूपवचनात्मने ॐ ऐं ह्रीं श्रीं कं खं गं घं ङं अनङ्गकुसुमादेव्यै नमः।**

**दक्षजत्रुरूपादानात्मने ॐ ऐं ह्रीं श्रीं चं छं जं झं ञं अनङ्गमेखलादेव्यै नमः।**

**दक्षोरुरूपगमनात्मने ॐ ऐं ह्रीं श्रीं टं ठं डं ढं णं अनङ्गमदनादेव्यै नमः।**



**दक्षगुल्फरूपविसर्गात्मने**

**ॐ ऐं ह्रीं श्रीं तं थं दं धं नं अनङ्गमदनातुरादेव्यै नमः।**

**वामगुल्फरूपानन्दात्मने**

**ॐ ऐं ह्रीं श्रीं पं फं बं भं मं अनङ्गरेखादेव्यै नमः।**

**वामोरुरूपहानाख्याबुद्ध्यात्मने**

**ॐ ऐं ह्रीं श्रीं यं रं लं वं अनङ्गवेगादेव्यै नमः।**

**वामजत्रुरूप उपादानाख्य बुम्यद्धत्लो**

**ॐ ऐं ह्रीं श्रीं शं षं सं हं अनङ्गाङ्कुशादेव्यै नमः।**

**वामशङ्खरूप उपेक्षाख्यबुद्ध्यात्मनता**

**ॐ ऐं ह्रीं श्रीं ळं क्षं अनङ्गमालिनीदेव्यै नमः।**

**हृद्रूपसर्वसङ्क्षोमभणचक्रेश्वर्यै ॐ ऐं ह्रीं श्रीं त्रिपुरसुन्दर्यै नमः।**

**गुप्ततरयोगिनीरूपस्वात्मात्मने ॐ ऐं ह्रीं श्रीं मं महिमासिद्ध्यै नमः।**

**अपरिच्छिन्नरूपस्वात्मात्मने क्लीं सर्वाकर्षिणीमुद्रायै नमः।**

## *चतुर्थ आवरणम्*

स्वाधिष्टान् चक्र — लिङ्वमूले

अग्नितत्व ६२ मयूखाः

समयाम्बा समेत संबर्तेश्वरेः आदि ज्ञात्वा

**ॐ ऐं ह्रीं श्रीं हैं हक्लीं हस्सौः सर्वसौभाग्यदायकचक्राय चतुर्दशारचक्राय नमः।**

**१२.** इति व्यापकं न्यस्य।

**ललाटमध्यभागरूपालम्बुसात्मने ॐ ऐं ह्रीं श्रीं टं सर्वसङ्क्षोभिणीशक्त्यै नमः।**

**ललाटदक्षभागरूपगुह्यात्मने ॐ ऐं ह्रीं श्रीं ठं सर्वविद्राविणीशक्त्यै नमः।**

**दक्षगण्डरूपविश्वोदरात्मने ॐ ऐं ह्रीं श्रीं डं सर्वाकर्षिणीशक्त्यै नमः।**

**दक्षांसरूपवारणात्मने ॐ ऐं ह्रीं श्रीं ढं सर्वाह्लादिनीशक्त्यै नमः।**







दक्षपार्श्वरूपहस्तिजिह्वात्मने ॐ ऐं ह्रीं श्रीं णं सर्वसम्मोहिनीशक्त्यै नमः।

दक्षोरुरूपयशोवत्यात्मने ॐ ऐं ह्रीं श्रीं तं सर्वस्तम्भिनीशक्त्यै नमः।

दक्षजङ्घारूपपयस्विन्यात्मने ॐ ऐं ह्रीं श्रीं थं सर्वजम्भिनीशक्त्यै नमः।

वामजङ्घारूपगान्धार्यात्मने ॐ ऐं ह्रीं श्रीं दं सर्ववशङ्करीदेव्यै नमः।

वामोरुरूपपूषात्मने

ॐ ऐं ह्रीं श्रीं धं सर्वरञ्जिनीशक्त्यै नमः।

वामपार्श्वरूपशङ्खिन्यात्मने

ॐ ऐं ह्रीं श्रीं नं सर्वोन्मादिनीशक्त्यै नमः।

वामांसरूपसरस्वत्यात्मने

ॐ ऐं ह्रीं श्रीं पं सर्वार्थसाधिनीशक्त्यै नमः।

वामगण्डरूप इडात्मने

ॐ ऐं ह्रीं श्रीं फं सर्वसम्पत्तिपूरणीशक्त्यै नमः।



**ललाटवामभागरूपपिङ्गलात्मने ॐ ऐं ह्रीं श्रीं बं सर्वमन्त्रमयीशक्त्यै नमः।**

**ललाटपृष्ठभागरूपसुषुम्नात्मने ॐ ऐं ह्रीं श्रीं भं सर्वद्वन्द्वक्षयङ्करीशक्त्यै नमः।**

**हृद्रूपसर्वसौभाग्यदायकचक्रेश्वर्यै ॐ ऐं ह्रीं श्रीं त्रिपुरवासिन्यै नमः।**

**सम्प्रदाययोगिनीरूपस्वात्मात्मने ॐ ऐं ह्रीं श्रीं ईं ईशितासिद्ध्यै नमः।**

**अपरिच्छिन्नरूपस्वात्मात्मने ॐ ऐं ह्रीं श्रीं ब्लूं सर्ववशङ्करीमुद्रायै नमः।**

## *पञ्चमावरणम्*

मणिपूरकचक्रं — नाभौ

जलतत्व ५२ मयूखाः

सौदाभिन्यम्बा समेत मेधेश्वरः आदि ज्ञात्वा

**ॐ ऐं ह्रीं श्रीं हसैं हस्क्लीं हसौः सर्वार्थसाधकचक्राय बहिर्दशारचक्राय नमः।**







इति तदन्तर्व्यापकं न्यस्या

**दक्षाक्षिरूपप्राणात्मने ॐ ऐं ह्रीं श्रीं कं सर्वसिद्धिप्रदादेव्यै नमः।**

**नासामूलरूपापानात्मने ॐ ऐं ह्रीं श्रीं खं सर्वसम्पत्प्रदादेव्यै नमः।**

वामनेत्ररूपव्यानात्मने ॐ ऐं ह्रीं श्रीं गं सर्वप्रियङ्करीदेव्यै नमः।

कुक्षीशकोणरूपोदानात्मने ॐ ऐं ह्रीं श्रीं घं सर्वमङ्गलकारिणीदेव्यै नमः।

कुक्षिवायुकोणरूपसमानात्मने ॐ ऐं ह्रीं श्रीं ङं सर्वकामप्रदादेव्यै नमः।

वामजानुरूपनागात्मने ॐ ऐं ह्रीं श्रीं चं सर्वदुःखविमोचिनीदेव्यै नमः।

गुदरूपकूर्मात्मने ॐ ऐं ह्रीं श्रीं छं सर्वमृत्युप्रशमनीदेव्यै नमः।

दक्षजानुरूपकृकरात्मने ॐ ऐं ह्रीं श्रीं जं सर्वविघ्नविनाशिनीदेव्यै नमः।

कुक्षिनिर्ऋतिकोणरूपदेवदत्तात्मने

ॐ ऐं ह्रीं श्रीं झं सर्वाङ्गसुन्दरीदेव्यै नमः।

कुक्षिवह्निकोणरूपधनञ्जयात्मने

ॐ ऐं ह्रीं श्रीं ञं सर्वसौभाग्यदायिनीदेव्यै नमः।

हृद्रूपसर्वार्थसाधकचक्रेश्वर्यै

ॐ ऐं ह्रीं श्रीं त्रिपुराश्रियै नमः।

कुलकौलयोगिनीरूपस्वात्मात्मने

ॐ ऐं ह्रीं श्रीं वं वशित्वसिद्ध्यै नमः।

अपरिच्छिन्नरूपस्वात्मात्मने

ॐ ऐं ह्रीं श्रीं सः सर्वोन्मादिनीमुद्रायै नमः।



### षष्ठावरणम्

अनाहत चक्रं — हृद्पद्मे

वायुतत्व ५४ मयूखाः

हंसेश्वरी समेत हंसेश्वरः आदि ज्ञात्वा

ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें सर्वरक्षाकरचक्राय अन्तर्दशारचक्राय नमः तदन्तर्व्यापकं न्यस्य।

दक्षनासारूपरेचकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं मं सर्वज्ञादेव्यै नमः।

दक्षसृकिरूपपाचकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं यं सर्वशक्तिप्रदादेव्यै नमः।

दक्षस्तनरूपशोषकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं सर्वैश्वर्यप्रदादेव्यै नमः।

दक्षवृषणरूपदाहकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं लं सर्वज्ञानमयीदेव्यै नमः।

सीवनीरूपप्लावकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं वं सर्वव्याधिविनाशिनीदेव्यै नमः।







कामवृषणरूपक्षारकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं शं सर्वाधारस्वरूपादेव्यै नमः।

वामस्तनरूपोङ्गारकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं षं सर्वपापहरादेव्यै नमः।

वामसृक्किरूपक्षोपकामन्यात्मने ॐ ऐं ह्रीं श्रीं सं सर्वानन्दमयीदेव्यै नमः।

वामनासारूपजृम्भकाग्न्यात्मने ॐ ऐं ह्रीं श्रीं हं सर्वरक्षास्वरूपिणीदेव्यै नमः।

नासाग्ररूपमोहकाग्न्यात्मने

ॐ ऐं ह्रीं श्रीं क्षं सर्वेप्सितफलप्रदादेव्यै नमः।

हृद्रूपसर्वरक्षाकरचक्रेश्वर्यै

ॐ ऐं ह्रीं श्रीं त्रिपुरमालिन्यै नमः।

निगर्भयोगिनीरूपस्वात्मात्मने

ॐ ऐं ह्रीं श्रीं प्रां प्राकाम्यसिद्ध्यै नमः।

अपरिच्छिन्नरूपस्वात्मात्मने

ॐ ऐं ह्रीं श्रीं क्रां महाङ्कुशामुद्रायै नमः।



## सप्तमावरणम्

विशुद्धि चक्रं — कण्ठे

आकाश तत्व — ७२ मयूखाः

व्योमेश्वरी समेत व्योमोश्वराख्या अर्धनारीश्वर आदि ज्ञात्वा

**ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः सर्वरोगहरचक्राय अष्टकोणचक्राय नमः** तदन्तर्व्यापकं न्यस्य।







**ॐ ऐं ह्रीं श्रीं चिबुकदक्षभागशीतात्मने ॐ ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ॐ औं अं आः ब्लूं वशिनीवाग्देवतायै नमः।**

**ॐ ऐं ह्रीं श्रीं कण्ठदक्षभागरूप उष्णात्मने ॐ ऐं ह्रीं श्रीं कं खं गं घं ङं क्ल्ह्रीं कामेश्वरी वाग्देवतायै नमः।**

**ॐ ऐं ह्रीं श्रीं हृदयदक्षभागरूप सुखात्मने ॐ ऐं ह्रीं श्रीं चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै नमः।**

**ॐ ऐं ह्रीं श्रीं नाभिदक्षभागरूप दुःखात्मने ॐ ऐं ह्रीं श्रीं टं ठं डं ढं णं य्लूं विमलावाग्देवतायै नमः।**



ॐ ऐं ह्रीं श्रीं नाभिवामभागरूप इच्छात्मने
ॐ ऐं ह्रीं श्रीं तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः।
ॐ ऐं ह्रीं श्रीं हृदयवामभागरूपसत्वगुणात्मने ॐ
ऐं ह्रीं श्रीं पं फं बं भं मं हस्ल्व्यूं जयिनीवाग्देवतायै नमः।
ॐ ऐं ह्रीं श्रीं कण्ठवामभागरूप रजोगुणात्मने
ॐ ऐं ह्रीं श्रीं यं रं लं वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः।
ॐ ऐं ह्रीं श्रीं चिबुकवामभागरूप तमोगुणात्मने
ॐ ऐं ह्रीं श्रीं शं षं सं हं ळं क्षं क्ष्म्रीं कौलिनीवाग्देवतायै नमः।
ॐ ऐं ह्रीं श्रीं हृद्रूपसर्वरोगहरचक्रेश्वर्यै त्रिपुरासिद्धयै नमः।
ॐ ऐं ह्रीं श्रीं रहस्य योगिनीरूप स्वात्मात्मने ॐ ऐं ह्रीं श्रीं भुं भुक्तिसिद्धयै नमः।
ॐ ऐं ह्रीं श्रीं अपरिच्छिन्नरूपस्वात्मात्मने ॐ ऐं ह्रीं श्रीं हस्ख्फ्रें सर्वखेचरी मुद्रायै नमः।

१६. हृदयत्रिकोणा अधोभागरूप पञ्चतन्मात्रात्मकेभ्यः ॐ ऐं ह्रीं श्रीं जं सर्वजृम्भण पुष्पबाणेभ्यो नमः।
तद्दक्षभागरूप मन आत्मकाभ्यां ॐ ऐं ह्रीं श्रीं धं यं सर्वजगत्सम्मोहन इक्षुधनुर्भ्यां नमः।
तदूर्ध्वभागरूप राग आत्मकाभ्यां ॐ ऐं ह्रीं श्रीं आं ह्रीं सर्ववङ्कर पाशाभ्यां नमः।
तद्वामभागरूप द्वेषात्मकाभ्यां क्रों सर्वस्तम्भ अङ्कुशाभ्यां नमः।

### *अष्टमावरणम् लम्बिकाग्रे*

हस्रैं हस्क्ल्रीं हस्रौः सर्वसिद्धिप्रदचक्राय त्रिकोणचक्राय नमः।

इति व्यापकं न्यस्य।

१७. ॐ ऐं ह्रीं श्रीं त्रिकोणचक्राय नमः। इति व्यापकं न्यस्य।





**हृदयत्रिकोणाग्रभागरूप महत्तत्त्वात्मने**

**ॐ ऐं ह्रीं श्रीं कएईलह्रीं महाकामेश्वरी देव्यै नमः।**

**तद्दक्षकोणरूप अहङ्कारात्मने**

**ॐ ऐं ह्रीं श्रीं हसकहलह्रीं महावज्रेश्वरी देव्यै नमः।**

**तद्वामकोणरूप अव्यक्तात्मने**

**ॐ ऐं ह्रीं श्रीं सकलह्रीं महाभगमालिनी देव्यै नमः।**

**हृद्रूप ॐ ऐं ह्रीं श्रीं सर्वसिद्धिप्रदचक्रेश्वर्यै त्रिपुराम्बायै नमः।**

**अतिरहस्ययोगिनीरूपस्वात्मात्मने**

**ॐ ऐं ह्रीं श्रीं इं इच्छासिद्ध्यै नमः।**

**अपरिच्छिन्नरूपस्वात्मात्मने ॐ ऐं ह्रीं श्रीं हसौं सर्वबीजमुद्रायै नमः।**

## *नवमावरणम्*

आज्ञाचक्रम् — भ्रुवोर्मध्ये

मनस्तत्त्वं ६५ मयूखाः

चित्पाम्बाय — विनाभूत शंभुनाथः आदि ज्ञात्वा

**१८. ॐ ऐं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सर्वानन्दमयचक्राय बिन्दुचक्राय नमः।**

इति न्यस्य।




**हृन्मध्यरूपनिरुपाधिकसंविन्मात्ररूप ॐ ऐं ह्रीं श्रीं कामेश्वराङ्कनिलयायै सच्चिदानन्दैकब्रह्मात्मने परदेवतायै ललितायै महात्रिपुरसुन्दर्यै नमः।**

निरुपाधिकचैतन्यमेव सच्चिदानन्दधर्मकमन्तःकरण-प्रतिबिम्बितम् सदाऽहमेवेत्यमुसन्धानं ललिताया लौहित्यमिति विभाव्य अभेद-सम्बन्धेन चित्त्वादिधर्म्मविशिष्टसंविदश्च तादात्म्यसम्बन्धरूपं कामाङ्क्यन्त्रणं विशेषणं विभाव्य उपाध्यभावरूपशुक्लत्वेनोपलक्षिता सती शुद्धसंविदेव शुक्लचरणः। चित्तविशिष्टसंवित्प्राथमिकपराहन्तात्मक-वृत्तिरूपेण रागेणोपलक्षिता सती रक्तचरणः। अहमाकारवृत्तिनिरूपिता विषयता चरणयोर्मिथो विशेषणविशेष्य-भावरूपैव तदुभयसामरस्यमिति विभाव्य।




**परापररहस्य योगिनीरूप स्वात्मात्मने प्रां प्राप्तिसिद्ध्यै नमः।**

**अपरिच्छिन्नरूपस्वात्मात्मने ऐं सर्वयोनिमुद्रायै नमः।**





इति तत्तत् स्थानस्पर्शपूर्व्वकं सम्यक् अनुसन्धाय उपचारान् समर्पयेत्।

आसनम्।। **तद्यथा- एवमपरिच्छिन्नतया भाविताया ललितायाः स्वे महिम्न्येव प्रतिष्ठितमासनम् अनुसन्दधामि।**

पाद्यम्।। **वियदादिस्थूलप्रपञ्चरूपपादगतस्य नामरूपात्मकस्य सच्चिदानन्दैकरूपत्व- भावनाजलेन क्षालनं पाद्यं भावयामि।**

अर्घ्यम्।। **सूक्ष्मप्रपञ्चरूपहस्तगतस्य तस्य क्षालनमर्घ्यं चिन्तयामि।**

आचमनीयम्।। **भावनारूपाणामपामपि कबलीकाररूपमाचमनं विभावयामि।**

स्नानम्।। **सत्वचित्त्वानन्दत्वाद्यखिलावयवावच्छेदेन भावनाजलसम्पर्करूपं स्नानमनुचिन्तयामि।**

वस्त्रम्।। **तेष्वेवावयवेषु प्रसक्ताया भावनात्मकवृत्तिविशेष्यतायाः प्रोञ्छनं वृत्तिविषयत्वभावनेन वस्त्रं कल्पयामि।**

आभरणम्।। **निर्विषत्वनिरञ्जनत्वाशोकत्वामृतत्वाद्यनेकधर्म्मरूपाण्याभरणानि धर्म्यभेदभावनेन समर्पयामि।**

गन्धम्।। **स्वशरीरघटकपार्थिवभागानां जडतापनयेन चिन्मात्रतावेशेषरूपं गन्धं प्रयच्छामि।**

पुष्पाणि।। **आकाशभागानां तथा भावनेन पुष्पाणि ददामि।**

धूपम्।। **वायव्यभागानां तथा भावनया धूपयामि।**

दीपम्।। **तैजसभागानां तथा करणनोद्दीपयामि।**

नैवेद्यम्।। **अमृतभागांस्तथा विभाव्य नैवेद्यं निवेदयामि।**

ताम्बूलम्।। **षोडशान्तेन्दुमण्डलस्य तथा भावनेन ताम्बूलकल्पमाचरामि।**

स्तोत्रम्।। **परापश्यन्त्यादि निखिलशब्दानां नादद्वारा ब्रह्मण्युपसंहारचिन्तनेन स्तुवीमि।**

प्रदक्षिणम्।। **विषयेषु धावमानानां चित्तवृत्तीनां विषयजडतानिरासेन ब्रह्मणि विलापनेन प्रदक्षिणीकरोमि।**

नमस्कारः।। **तासां विषयेभ्यः परावर्तनेन ब्रह्मैकप्रवणतया प्रणमामि।**

होमम्।। **विहिताविहितविषया वृत्तय उत्पन्ना अहं त्वं गुरुर्देवतेत्यादयस्ताः सर्व्वाश्चकराजस्थानननन्तशक्तिकदम्बरूपास्तत्तत्सूक्ष्मरूपा ये ये संस्काराश्च तत्सर्वं चिन्मात्रमेवेति विभावनया निर्व्युत्थानं स्वात्मनि जुहोमि।** इति उपचर्य्य जुहुयात्।

तर्पणम्।। **प्रकृतभावनासु ये गुरुचरणादिशक्तिकदम्बान्ता विषयास्ते सर्वेऽपि चिन्मात्ररूपा न परस्परं भिद्यन्त इति भावनया तर्पयामि।**

ब्रह्मविभावनम्।। **तिथिचक्रमुक्तरूपं कालचक्रं देशचक्रं च सर्व्वमस्ति भाति प्रियञ्च न तु नामरूपवत् अतः सर्वं ब्रह्मैवेति विभावयामि।।**

अथवा

पूर्व्वलिखितां नित्याभावनामिहैव श्वासविलापनफलिकां कुर्य्यात्।

प्रणव चिन्तनम्।।**तेन मनःपवनात्मनामैक्यनिफालनेन त्रीन् मुहूर्त्तान् द्वावेकं मुहूर्तमवच्छिन्नं यापयेत्।**

ततोऽवतीर्य्य प्रणायामत्रयं ऋष्यादिन्यासत्रयञ्च कृत्वा। गुरुं स्तुवीतेति सर्वं शिवम्।।

**अथर्वशिरसि प्रोक्ताभवनानां सतां मुदे।** इति भास्कररायेण प्रयोगविधिरीरितः।।

भावनोपनिषत्प्रयोगविधिः समाप्तः।

**अथयथावकाशं — खड्गमाला अष्टोत्रसहस्त्रनामावल्यदिता (प्रति पूजान्ते उत्तरार्द्ध पूजाम् कुर्यात्) अर्चनम् कुर्यीत्**

**(नामावलि खण्डः पुटं ८१३ द्रष्टव्यम्)**

## ५. उत्तरार्द्ध पूजाखण्डः

### धूपः

**ॐ ऐं ह्रीं श्रीं धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं तमं देवहूतममहृतमसि हविर्धानं दृँहस्व माह्वार्मित्रस्य त्वाम चक्षुषा प्रेक्षे माभेर्मा संविक्था मा त्वा हिँसिषम्।**

**ॐ श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः धूपमाघ्रापयामि।** धूपानन्तरं आचमनीयं समर्पयामि।

### दीपः

**ॐ ऐं ह्रीं श्रीं उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम। पशूँश्च मह्यमावह जीवनं च दिशो दिश। मा नो हिँसीर्जातवेदो गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परिपातय।**

**ओं श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः दीपं दर्शयामि। दीपानन्तरं आचमनीयं समर्पयामि।।**

ततः सर्वसङ्क्षोभिण्यादिमुद्राः प्रदर्शयेत्।।

### नैवेद्यम्

श्रीदेव्यग्रे चतुरश्रमण्डलं सामान्यर्घ्योदकेन विधाय तत्र आधारोपरि स्थापितं सौवर्णरौप्य-कांस्यादिस्थालीचषकभरितं भक्ष्यभोज्यचोष्यलेह्यपेयात्मकं रसवद्व्यञ्जनमञ्जुलं प्राज्य-कपिलाज्यं दधिदुग्धमुग्धं यथासम्भवं वा नैवेद्यं विधाय—

मूलेन निरीक्ष्य—

**ॐ ऐं ह्रीं श्रीं हः—** इति अस्त्रेण प्रोक्ष्य—

**ॐ ऐं ह्रीं श्रीं ऐं जुं सः वौषट्—**इति सुन्दरमभिमन्त्रितजलेन प्रोक्ष्य चक्रमुद्रां प्रदर्श्य—

**ॐ ऐं ह्रीं श्रीं सं—** इति वायुबीजेनाधोमुखवामकरेण सप्तवारं जपन् तद्गतदोषान् संशोष्य—

**ॐ ऐं ह्रीं श्रीं रं—** इति बह्निबीजेन अधोमुखदक्षकरेण सन्दह्य—

**ॐ ऐं ह्रीं श्रीं वं—** इति धेनुमुद्रया अमृतीकृत्य—

**ॐ ऐं ह्रीं श्रीं** मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य—

**ॐ ऐं ह्रीं श्रीं** मूलेन सप्तवारमभिमन्त्र्य—

**ॐ ऐं ह्रीं श्रीं ओं क्लीं कामदुघे अमोघे वरदे विच्चे स्फुर स्फुर श्रीं परश्रीं।**

इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य—

देव्यै पाद्यं अर्घ्यं आचमनीयं दत्वा—

**ॐ ऐं ह्रीं श्रीं** मूलेन देवीं त्रिः सन्तर्प्य

पात्रान्तरे विशेषार्घ्यं किंचिद्गृहीत्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन्

**ॐ ऐं ह्रीं श्रीं** मूलं **साङ्गायै सायुधायै सवाहनायै सपरिवारायै सर्वात्मिकायै श्रीमहात्रिपुरसुन्दरी-पराभट्टारिकायै नैवेद्यं कल्पयामि नमः—** इति नैवेद्यपरिसरे संस्थाप्य। कृताञ्जलिः

**ॐ ऐं ह्रीं श्रीं हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्।**
**पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।।**
**शर्करापायसापूपघृतव्यञ्जनसंयुतम् ।**
**विचित्ररुचि नैवेद्यं हृद्यमावेदयाम्यहम् ।।** इति निवेद्य

**ओं भूर्भुवस्सुवः + परिषिञ्चामि अमृतोपस्तरणमसि—** इति देव्यै आपोशनं दत्वा—

वामकरेण ग्रासमुद्रां दर्शयन्, दक्षकरेण प्राणादिपञ्चमुद्राप्रदर्शनपूर्वकं पञ्च प्राणाहुतीः कल्पयेत्। यथा—

**ॐ ऐं ह्रीं श्रीं ऐं प्राणाय स्वाहा।**

**ॐ ऐं ह्रीं श्रीं क्लीं अपानाय स्वाहा।**

**ॐ ऐं ह्रीं श्रीं सौः व्यानाय स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं उदानाय स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्ली सौः समानाय स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ब्रह्मणे स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क-५ आत्मतत्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु।**

**ॐ ऐं ह्रीं श्रीं क्लीं ह-६ विद्यातत्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु।**

**ॐ ऐं ह्रीं श्रीं सौः स-४ शिवतत्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मूलं सर्वतत्वव्यापिका श्रीमहात्रिपुरसुन्दरी तृप्यतु।**

इति किंचित्किंचित् सामान्यार्घ्योदकं दद्यात्।

**ॐ ऐं ह्रीं श्रीं चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम् ।**

**निवेदयामि ते देवि सानुगायै जुषाण तत् ।।**

**मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसि मधुमत्पार्थिवँ रजः। मधु द्यौरस्तु नः पुता। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।** इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत्।

**ॐ ऐं ह्रीं श्रीं नमस्ते देवदेवेशि सर्वतृप्तिकरं परम् ।**

**अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ।**

**अमृतानन्दसम्पूर्णं गृहाण जलमुत्तमम् ।।**

**ॐ ऐं ह्रीं श्रीं श्रीललितायै अमृतपानीयं समर्पयामि।**

भुञ्जनां परदेवतां ध्यायेत्।

**ॐ ऐं ह्रीं श्रीं ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समन्ताद्दिव्याकल्पैर्ललितरमणी वीज्यमाना सखीभिः।**

**नर्मक्रीडाप्रहसनपरा हासयन्ती सुरेशान् भुङ्क्ते पात्रे कनकखचिते षड्रसान् लोकधात्री।।**

देवीं भुक्तवतीं सुतृप्तां ध्यात्वा—

**ॐ ऐं ह्रीं श्रीं ॐ अमृतापिधानमसि।** इत्युत्तरापोशनं दत्वा—

**ॐ ऐं ह्रीं श्रीं श्रीललितायै हस्तप्रक्षालनं गण्डूषं पादप्रक्षालनं आचमनीयं कल्पयामि नमः।**

ताम्रबलिपात्रे निवेदनसामग्रीः किञ्चित्किञ्चिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलं अस्त्रेण शोधयेत्।

ताम्बूलं—

ॐ ऐं ह्रीं श्रीं वनस्पतिदेवत्याय ताम्बूलाय नमः। इति सामान्यार्घ्योदकेन प्रोक्ष्य—

ॐ ऐं ह्रीं श्रीं तमालदलकर्पूरपूगभागसमन्वितम् ।

एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ।

ॐ ऐं ह्रीं श्रीं ॐ श्रीललितायै ताम्बूलं कल्पयामि नमः।

## *कुलदीपः*

ॐ ऐं ह्रीं श्रीं मूलं अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।

त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये ।।

## *कर्पूरनीराजनम्*

ॐ ऐं ह्रीं श्रीं सोमो वा एतस्य राज्यमादत्ते। यो राजा सन्राज्यो वा सोमेन यजते। देवसुवामेतानि हवीँषि भवन्ति। एतावन्तो वै देवानाँ सवाः। त एवास्मै सर्वान् प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति।

ॐ ऐं ह्रीं श्रीं साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठिकं राज्यं महाराज्यमाधिपत्यम्।। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।। राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे। समेकामांकामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः।

## *मन्त्रपुष्पम्*

ॐ योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति। चन्द्रमा वा अपां पुष्पम्। पुष्पवान् प्रजावान् पशुमान् भवति। य एवं वेद। योऽपामायतनं वेद। आयतनवान् भवति। अग्निर्वा अपामायतनम्। आथतनवाम् भवथि योऽग्नेरायतनं वेद। आथतनवाम् भवथि आपो वा अग्नेरायतनम्। आथतनवाम् भवथि य एवं वेद। योऽपामायनं वेद। आथतनवाम् भवथि वायुर्वा अपामायतनम्। आथतनवाम् भवथियो वायोरायतनं वेद। आथतनवाम् भवथि आपो वै वायोरायतनम्। आथतनवाम् भवथि य एवं वेद। योऽपामायतनं वेद। आथतनवाम् भवथि असौ वै तपन्नपामायतनम्। आथतनवाम् भवथि योऽमुष्य तपत आयतनं वेद। आथतनवाम् भवथि आपो वा अमुष्य तपत आयतनम्।

आथतनवाम् भवथि य एवं वेद। योऽपामायतनं वेद। आथतनवाम् भवथि चन्द्रमा वा अपामायतनम्। आथतनवाम् भवथि यश्चन्द्रमस आयतनं वेद। आथतनवाम् भवथि आपो वै चन्द्रमस आयतनम्। आथतनवाम् भवथि य एवं वेद। योऽपामायतनं वेद। आथतनवाम् भवथि नक्षत्राणि वा अपामायतनम्। आथतनवाम् भवथि यो नक्षत्राणामायतनं वेद। आथतनवाम् भवथि आपो वै नक्षत्राणामायतनम्। आथतनवाम् भवथि यः पर्जन्यस्यायतनं वेद। आथतनवाम् भवथि आपो वै पर्जन्यस्यायतनम्। आथतनवाम् भवथि य एवं वेद। योऽपामायतनं वेद। आथतनवाम् भवथि पर्जन्यो वा अपामायतनम्। आथतनवाम् भवथि य एवं वेद। योऽपामायतनं वेद। आथतनवाम् भवथि संवत्सरो वा अपामायतनम्। आथतनवाम् भवथि यस्संवत्सरस्यायतनं वेद। आथतनवाम् भवथि आपो वै संवत्सरस्यायतनम्। आथतनवाम् भवथि य एवं वेद। योऽप्सु नावं प्रतिष्ठितां वेद। प्रत्येव तिष्ठति।

शिवे शिवसुशीतलामृततरङ्गगन्धोल्लसन्नवावरणदेवते नवनवामृतस्यन्दिनि।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः।।

समस्तमुनियक्षकिम्पुरुषसिद्धविद्याधरगुहासुरसुराप्सरोगणमुखैर्गणैः सेविते।
निवृत्तितिलकाम्बरप्रकृतिशान्तिविद्याकलाकलापमधुराकृते कलित एष पुष्पाञ्जलिः।।

त्रिवेदकृतविग्रहे त्रिविधकृत्यसन्धायिनि त्रिरूपसमवायिनी त्रिपुरमार्गसञ्चारिणि।
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः।।

पुरन्दरजलाधिपान्तककुबेररक्षोहरप्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते।
प्रवालपदपीठिकानिकटनित्यवर्तिस्वभूविरिञ्चिविहितस्तु ते विहित एष पुष्पाञ्जलिः।।

यदानतिबलादलङ्कृतिरुदेति विद्यावयस्तपोद्रविणसौरभाकृतिकवित्वसम्पन्मयी।
जरामरणजन्मजं भयमपैति तस्यै समाहिताखिलसमीहितप्रसवभूमि तुभ्यं नमः।।

निरावरणसंविदुद्गमपरास्तभेदोल्लसत्पदास्पदचिदेकतावरशरीरिणि स्वैरिणि।
रसायनतरङ्गिणीरुचितरङ्गसञ्चारिणि प्रकामपरिपूरणि प्रसृत एष पुष्पाञ्जलिः।।

तरङ्गयति सम्पदं तदनु संहरत्यापदं सुखं वितरति श्रियं परिचिनोति हन्ति द्विषः।
क्षिणोति दुरितानि यत्प्रणतिरम्ब तस्यै सदा शिवङ्करि शिवे परे शिवपुरन्ध्रि तुभ्यं नमः।।

त्वमेव जननी पिता त्वमथ बान्धवस्त्वं सखा त्वमायुरपरं त्वमाभरणमात्मनस्त्वं कला।
त्वमेव वपुषः स्थितिस्त्वमखिलायतिस्त्वं गुरुः प्रसीद परमेश्वरि प्रणतिपात्रि तुभ्यं नमः।।

**कञ्जासनादिसुरवृन्दलसत्किरीटकोटिप्रघर्षणसमुज्ज्वलदङ्घ्रिपीठे।**

**त्वामेव यामि शरणं विगतान्यभावं दीनं विलोकय दयार्द्रविलोचनेन ।।**

**श्रीललितामहात्रिपुरसुन्दर्यै नमः। पुष्पाञ्जलिं समर्पयामि ।**

## *कामकलाध्यानम्*

स्थूलं— बिन्दुना मुखं बिन्दुद्वयेन कुचौ सपरार्धेन योनिः इति कामकलां ध्यायेत्।

**महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।**
**भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृत्भावयेत्स त्वमेव ।।**
**तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयं ते ।**
**परानन्दसन्धानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ।।**

सूक्ष्मं—

**कामकला = क् + अं + अ, म् + अ, क् + अ, ल् + अ + अ।**

कामशब्दविमर्शः—

**क् = माया, अ = तदवच्छिन्नं चैतन्यमीश्वर, अ = शुद्धचैतन्यं; म् = अविद्या, अ = तदवच्छिन्नं चैतन्यं जीवः। मायावच्छिन्नचैतन्यं अविद्यावच्छिन्नचैतन्यं च शुद्धचैतन्यमेव। उपाधिनिरसनेन जीवेश्वरौ शुद्धब्रह्मणोऽभिन्नौ। सामानाधिकरण्येन जीव एव ईश्वरः। भागत्यागलक्षणयाऽयमर्थः पर्यवसन्नः। अहं सः = हंसः; सः अहं = सोऽहम्।**

कलाशब्दविमर्शः—

**क् = आकाशं, अ = तदुपहितचैतन्यं, ल् = पृथिवी, अ = तदुपहितचैतन्यं, अ = शुद्धचैतन्यं। पृथिव्याद्याकाशान्तं परिदृश्यमानः सर्वः प्रपञ्चो ब्रह्मैव। 'सर्वं खल्विदं ब्रह्म' इति हि श्रुतिः।**

**शिवाद्यवनिपर्यन्तपरिदृश्यमानसर्वप्रपञ्चाधिष्ठानिर्विशेषब्रह्मैवाहमित्यखण्डार्थानुसन्धानं कामकलाविमर्शः।**

सौभाग्यहृदयम्—

**सौः इति शक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत्। सकारविसर्ग-औकारसमुदायः— सौः इति। सकारः तच्छब्दपर्यायः। विसर्गेण हकारो लक्षितः। स च अहंशब्दपर्यायः। औकारः तयोः सामरस्यबोधकः। ब्रह्मैवाहमिति।**

कामकला ध्यातैव सौभाग्यहृदयमामृष्टं भवति।

## होम:

**होमस्य इतिकर्तव्या परिशिष्टे द्रष्टव्या। होम: कृताकृत:। अकरेण न प्रत्यवाय:, करणे तु श्रेय एव।**

## *बलिदानादि हवि: प्रतिपत्तयन्तम्*

**बलिदानम्**

देव्या दक्षभागे सामान्यार्घ्योदकेन त्रिकोणवृत्तचतुरश्रात्मकं मण्डलं परिकल्प्य—

**ॐ ऐं ह्रीं श्रीं ऐं व्यापकमण्डलाय नम: —** इति गन्धाक्षतैरभ्यर्च्य— अर्धभक्तपूरितोदकं सक्षीरादित्रयं बलिपात्रं तत्र विन्यस्य—

**ॐ ऐं ह्रीं श्रीं ओं ह्रीं सर्वविघ्नकृद्भ्य: सर्वभूतेभ्यो हुं फट् स्वाहा—** इति मन्त्रं त्रि: पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वामपर्ष्णिघातकरास्फोटौ कुर्वाण: समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैर्ग्रासितं विभाव्य योनिमुद्रया प्रणमेत्।

तत: पादौ प्रक्षाल्य, आचम्य, प्रदक्षिणनमस्कारं कृत्वा यथाशक्ति जपमाचरेत्।

**गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा।।**

इति जपं समर्पयेत्।

## स्तोत्रम्

**ॐ ऐं ह्रीं श्रीं गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्। देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम्।।१।।**
**प्रणमामि महादेवीं मातृकां परमेश्वरीम् । कालहल्लोहलोल्लोलकलनाशमकारिणीम् ।।२।।**
**यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नर: । रविताक्ष्र्येन्दुकन्दर्पशङ्करानलविष्णुभि: ।।३।।**
**यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् । वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ।।४।।**
**यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् । ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ।।५।।**
**यदेकादशमाधारं बीजं कोणत्रयोद्भवम् । ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ।।६।।**
**अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् । ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तनिवासिनीम् ।।७।।**
**तामीकाराक्षरोद्धारां सारात्सारां परात्पराम्। प्रणमामि महादेवीं परमानन्दरूपिणीम् ।।८।।**
**अद्यापि यस्या जानन्ति न मनागपि देवता:। केयं कस्मात् क्व केनेति सरूपारूपभावनाम्।।९।।**
**वन्दे तामहमक्षय्यां क्षकाराक्षररूपिणीम्। देवीं कुलकलोल्लासप्रोल्लसन्तीं परां शिवाम्।।१०।।**
**वर्गानुक्रमयोगेन यस्यां मात्रष्टकं स्थितम् । वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ।।११।।**
**कामपूर्णजकाराख्यश्रीपीठान्तर्निवासिनीम् । चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ।।१२।।**

**इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत्। देव्यास्त्वखण्डरूपायाः स्तवनं तव तद्यतः ।।**

**भूमौ स्खलितपादानां भूमिरेवावलम्बनम्। त्वयि जातापराधानां त्वमेव शरणं शिवे ।।**

**जपो जल्पः शिल्पं सकलमपि मुद्राविरचना गतिः प्रादक्षिण्यक्रमणमषनाद्याहुतिविधिः ।**
**प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ।।**

**पिता माता भ्राता गुरुरथ सुहृद्बान्धवजनः प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।**
**विशुद्धा विद्या वा पदमपि च तत्प्राप्यमसि मे त्वमेव श्रीमातः स्वपिमि गतशङ्कः सुखतमः ।।**

**दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।**
**अनेनायं धन्यो भवति न च ते हानिरियता वने वा हर्म्ये वा समकरनिपातो हिमकरः ।।**

**हे सद्रूपिणि हे चिदर्चिरुदये हे कामराजप्रिये हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसंजीविनि।**
**हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे हे श्रीमल्ललिताम्ब हे परशिवे मां पाहि डिम्मं निजम्।।**

**नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे ।**
**नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते।।**

**जय जय जगदम्ब भक्तवश्ये जय जय सान्द्रकृपावशान्तरङ्गे ।**
**जय जय निखिलार्थदानशौण्डे जय जय हे ललिताम्ब चित्सुखाब्धे ।।**

**षडङ्गदेवता नित्या दिव्याद्योघत्रयीगुरून् । नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ।।**

**अमुकानन्दनाथाय मम श्रीगुरवे नमः । अमुकानन्दनाथाय गुरवे परमाय मे ।।**
**अमुकानन्दनाथाय गुरवे परमेष्ठिने । यदिदं श्रीगुरुस्तोत्रं स्वस्वरूपोपलक्षणम् ।।**
**बालभावानुसारेण ममेदं हि विचेष्टितम् । मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ।।**

एवमादिभिः स्तुतिभिर्देवीं स्तुयात्।

## *सुवासिनीपूजा*

प्राङ्निमन्त्रितां सुवासिनीमाहूय तां देवीरूपां विभाव्य—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सुवासिन्यै अर्घ्यं कल्पयामि नमः।** इत्यादिरीत्या अर्घ्य— आचमन-स्नान-गन्ध-हरिद्राकुङ्कुम-पुष्प-धूप-दीप-नैवेद्य— ताम्बूलानि दद्यात्, (सति विभवे वसनादीनि च)।

सा च दीक्षिता चेत् मूलेन समस्तप्रकटेत्यादिसमष्टिमन्त्रेण च क्रमेण श्रीदेव्यै आवरणदेवताभ्यश्च पुष्पाञ्जलिं दद्यात्। ततस्तस्याः करे क्षीरपात्रं नागरखण्डं च समर्पयेत्। सा च उत्थाय शिरसि श्रीगुरुपादुकामनुना त्रिरिष्ट्वा, हृदये आत्मचतुष्टयं सन्तर्प्य, चक्रे देवीं त्रिः सन्तर्प्य, मूलेन पात्रं वामकरे

आपीन मंडलाभोग समुन्नत पयोधशम्। प्रलंबकर्णाभरणां कर्णोत्तंस विराजिताम्।।
तमालनीलां तरुणीं मधुमत्तां मतंगिनीम्। चतुःषष्टिकलारूपां पार्श्वस्थ शुकसारिकाम्।।
कोटिबालार्क संकाशां जपाकुसुम सन्निभाम। एवंवा पीतवर्णां च ध्यायेन्मातंगिनीं पराम्।।

ऐ ह्रीं श्री नमो...सर्वमुखरजिनि ह ५ सर्वराज... पुरुषवशंकरि ह ६ सर्वदुष्टमृगवशंकरि ४ सर्व सत्ववशंकरि ७ सर्वलोकवशकरि वशमानय ६ स्वाहा।।

## *चण्डमातंगिनी मन्त्रः*

दक्षिणा मूर्त्ति, ऋषिः। गायत्री छन्दः। श्री चण्डमातङ्गिनी देवता। ह्रां ह्रीं इत्यादि न्यासः

ध्यानम्

मातंगीं सर्व यावकार्द्रवरणामुल्लासि कृष्णाशुकाम्।
वीणोल्लासिकरां सुमुनकुचां मुक्ताप्रवलावलीम्।
हृद्यांगीं सित शंख कुडलधरा बिबाधरीं सुस्मिताम्।
आकोणलिक वेणिमब्जनयनाम् ध्यायेच्छुंक श्यामलाम्।
मनुः— ह्रीं नमः हिलिहिलि मातंगिनी स्वाहा।।
ह्रीं नमः ह ५ हिलिहिलह ६ चण्डमातंगिनी स ४ स्वाहा।

### चक्र रूपा मातंगी

चक्रं।.

पीठदेवताः मं मंडूकादि... नमः। नवपीठशक्तीः। विभूत्यै मातंग्यै नमः इति सर्वत्र मातंगि पदं सयोजयेत्। कांत्यै, सृष्टयै, कीर्त्यौ, सन्नत्यै, व्युष्टयै, उत्कृष्टयै, मध्ये ऋद्धयै।।

ॐ ह्रीं सर्वशक्तिकमलासनाय नमः

१. त्रिकोणे। ॐ ह्रीं ऐं श्रीं ४ रत्यै, ४ प्रीत्यै, भ ममनोभवायै, ४ (मातगिपदं योजयेत्)।।
२. षट्कोणकेसरेषु आग्नेयादि चतुर्दिक्षु मध्येदिक्षुच। ॐ ह्रीं ऐं श्रीं इति संयोज्य षडंग युवतीः।।
३. अष्दलेषु पूज्यपूजकयोरंतरालं प्राचीक्रमेण ब्राहम्यादि अष्टमातृकाः।
४. अष्टदलेषु ब्राहम्यादिनां समीपे असितांगभैरवादि अष्टभैरवा।
५. षोडशदलेषु प्रचीक्रमेण। ४ वामामातंगी, ज्येष्ठा, रौद्री, शांत्यै, श्रद्धा, माहेश्वरी, क्रिया, लक्ष्मी सृष्टि मोहिनी प्रमथा, श्वासिनी, विद्युल्लता, सुन्दरि, नन्दा, नन्दबुद्धि।

६. **भूपुराभ्यन्तरे प्राच्यादि चतुर्दिक्षु। ४ मातंगीमातंग्यै, ४ महामातग्यै, महालक्ष्म्यै, सिद्ध्यैआग्नेयादि चतुर्विदिक्षु। ४ विघ्नेशायै, ४ दुर्गायै, बटुकायै, क्षेत्रपालायै इति पूर्वोक्त सर्वनामानि, ॐ ह्रीं ऐं श्री इति पूर्वे, मातंग्यै इति च अन्ते योजयेत्।।**

७. **भृपुराद्बहिः इंद्रादि दशदिक्पालाः। तेषां आयुधानि च यजेत्।।**

## *राजश्यामला (मातंगी) मन्त्रः*

(पूर्वाम्नाय देव्याः) (राजद्वारे सर्वकार्य सिद्धिर्थम्)

**अस्य मन्त्रस्य। भगवान् मतंग ऋषिः। पंक्ति छन्दः श्रीराजमातंगीश्वरी देवता। ऐं बीजं। सौः शक्तिः। क्लीं कीलकं।**

**३ ऐं क्लीं सौः।**

१. **ॐ नमो भगवति राजमातंगीश्वरि।**

२. **सर्वजनमनोहारिणि सर्वमुखरंजिनि।**

३. **क्लीं ह्रीं श्रीं सर्वराजवशंकरि।**

४. **सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि।**

५. **सर्वलोकवशंकरि अभीष्टंगे सर्वजनमे वशमानय स्वाहा।**

६. **सौः क्लीं ऐं श्रीं ह्रीं ऐं।। संख्याक्रमेण न्यास।।**

ध्यानम्

**मातंगीं मोहनांगींमधुमदमुदितां घूर्णमानाक्षियुग्मां,**
**विद्युद्वक्त्रां कदम्ब प्रसवपरिलसद्वेणिका मात्तवीणां।**
**बिंबोष्ठीं रक्तवस्त्रां मृगमदतिलकामिन्दुरेखावतंसां,**
**कर्णोद्यच्छंखपत्रां कटिनकुचभरां नौमि तां श्यामलांबाम्।।**

मनुः पूर्ववत्।।

## *हसन्तिश्यामला*

भय एवं बन्ध निवाराणार्थम्

अस्य मन्त्रस्य। मतंग ऋषिः। गायत्री छन्दः। श्रीहसंतिश्यामलांबा देवता।

**ह्रां बीजं। ह्रीं शक्तिः। ह्रूं कीलकं। ह्रां इत्यादि न्यासः।**

ध्यानम्

आगुल्फांतावलंबा मरुणमणिनिभां कंचुकीं धारयन्ती,
कादंबर्या कषाया कृतनमनयुग कंदलन्मंदहासा।
मेघश्यामा मृगांकोल्लसितकबरिका पाणिपद्मात्तनेत्रा,
मातंगीष्टाहसंती मम भवतु सदा मन्त्रविघ्नाप्रशांत्यै।।

**मनुः।। ॐ ह्रीं हसंति हसितालापे मातंगी परिचारिके। भय निघ्नापदां नाशं कुरु कुरू ठः ठः ठः हुं फट् स्वाहा।।**

## *श्रीशुकश्यामला*

(विशेषतः राजद्वारे सर्व कार्य सिद्धयर्थम्)

अस्य मन्त्रस्य। शुक भगवान् ऋषिः। गायत्री छन्दः। श्री शुकश्यामलांबा देवता। श्रां बीजं। श्रीं शक्तिः। श्रूं कीलकं। श्रां इत्यादि न्यासः।।

ध्यानम्

निगमसमाहारमाले निर्मलतारालवाल वलयांते।
प्रतिफलदागम शाखाफल भररसिक शुकोऽस्तु भूत्यै।।
वीणावाद्य विनोदगीतनिरतां लीलाशुकोल्लासिनीं,
बिबोष्ठीं नवयावकार्द्र चरणामाकीर्णकेशालकाम्।
हृद्यांगीं सितशंख कुण्डलधरां सर्वांगभूषोज्ज्वलाम्
मातंगीं प्रणतोऽस्मि सुस्मितमुखीं देवीं शुकश्यामलाम्।।

**मनुः। ॐ नमो भगवते महाशुकाय त्रिभुवनांलंकृताय राजमद मेर्दनाय शीघ्रं राजानं मे वशमानय स्वाहा।**

## *श्रीशारिका श्यामला (मातृकार्थ शारिणी)*

कलीकोविदनार्थंम्

अस्य मन्त्रस्य। शौनक ऋषिः। अतिजगती छन्दः। श्री शारिका श्यामलांबा देवता। श्रीं बीजं। श्रीं शक्तिः। श्रूं कीलकं। श्रां इत्यादि न्यासः। ध्यानम्।।

**श्यामांकरांभोरुहकेलिलग्नां सोमावतंसां स्तुतिपाठमग्नाम्।**
**विद्यालिहृद्यां विशदामुपासे शारीं चतुष्षष्टिकलास्वरूपाम्।।**
**चतुष्षष्टिकलारावां विद्यां हृदि विराजिताम्।**
**श्रावयन्तीं करे देवीं शारिकका देवतां भजे।।**
**मनुः। ॐ नमो भगवती शारिके सकल कलाकोविदेदेवि बोधय बोधय स्वाहा।।**

## *श्रीवीणाश्यामला*

(वीणावाद्ययेषु पारङ्गत्वं प्राप्तियर्थम्)

अस्य मन्त्रस्य। नारद ऋषिः गायत्री छन्दः। श्रीवीणाश्यामलांबा देवता।
क्लीं बीजं। ह्रीं शक्तिः। सौः कोलकं। यां इत्यादि न्यासः। ध्यानम्।

**कामनानुगुण गानकल्पना कल्पशिल्पतरमंजुलखनां।**
**वैणिकी स्तनतटे विहारिणीं वल्लकीं मनसि भावयाम्यहम्।।**
**मनुः ॐ नमो भगवती वीं वीणाये मम संगीतविद्यां प्रयच्छ स्वाहा।।**

## *श्रीवेणुश्यामला*

साहित्येषु रङ्गत्व वंप्तियर्थम्

अस्य मन्त्रस्य। मतंग ऋषिः गायत्री छन्दः। श्री वेणुश्यामलांबा देवता।
ऐं बीजं। ह्रीं शक्तिः। श्रीं कीलकं। बालामन्त्रेण न्यासः। ध्यानम्।

**बत्र्के सौरभ सुवासितरंध्रेवस्तुना पटुतरावयवेन।**
**गानदोहन कलाकलनादे मानसे भवतु मणिवेणुः।।**
**मुनः—ॐ नमोभगवते वें वेणुश्यामले मम साहित्य विद्याम् प्रयच्छस्वाहा।**

## *हंसवागीश्ववरी मन्त्रः*

अस्य हंसवागीश्ववी महा मन्त्रस्य। कण्व ऋषिः त्रिष्टुप छन्दः। हंसवागीश्वरी दैवता।

**ऐं बीजं। ह्रीं शक्तिः। ब्रह्म बीजं। माया शक्तिः जीवो बीजं। बुद्धिः शक्तिः। उदानो बीजं। कुण्डलिनी शक्तिः। ॐ ह्री** (शिरसी) **ऐं सौः** (कर्णरंध्रोयोः) **ॐ सं** (नेत्रयोः) **ॐ रं स्वं** (नासारन्ध्रोयोः) **त्यै** (मुखे) **नं** (लिंगे)**मंः** (गुदे)।

**ह्रीं ह्रीं** इत्यादि षङ्गन्यस-करन्यास हृदयन्यासाः कृत्वा।

ध्यानम्

**वाणीं पूर्ण निशाकरोज्जवलमुखीं कर्पूर कुंदप्ाभाम्**
**चन्द्रार्धाङ्गितमस्तकां निजकरैः संबिभ्रतीमादरात्।**
**वीणां मक्षगुणं सधाद्यकलशँ विद्यां च कुभस्तनीम्**
**दिव्यैराभरणै विभूषिततनूंह सांधि रूढां भजे।**

पञ्चपूजा—

**मनुः — ॐ ह्रीं ऐं सौः ॐ सरस्वत्यै नमः** (एकादशाक्षरः) पुरश्चरणम्-द्वादलशां। सिताम्बुजपुष्पै द्वादश सहस्रं होमः अथवा नाग चमम्पक पुष्पैः

## *मन्त्रांतरम्*

(एकादशाक्षर)

मनुः (ऐं) **वाचस्पते ऽ मूते प्लवः प्लुम्** (वाग्भवम् विना दशवर्णमन्त्रः)
ऋषि-छन्दः पूर्वत्। ऐं बीजं प्लुं शक्तिः सरस्वती देवथा
१. ऐं २. वाचस्पतये ३. ऽमुते ४. प्लुवः ५. प्लुम् ६. सर्वबीजेन च न्यासः

ध्यानम्

**आसीना कमले करैर्जपपटीं पुस्तकं। विभ्राणां तरूणेन्दुबद्ध मुकुटां —मुक्तेन्दुकुन्द प्रभा।**
**भालोन्भी लितलोचनां कुच भराक्रान्ता भवेद्भूतये भूयाद्वागधिदेवता मुनिगणैरासेत्यमानाऽमिशम्**
रूद्रलक्षं पुश्श्चरणं। दशांशम् धृतेन होम। पलाशपुष्पैः वा कदम्ब कुसुम श्रीफलैर्वा होमः। नन्द्यावर्त कुसुमैर्वा होमः अचिरात् वाग्वल्लभो भवति।

**ब्राह्मीरसे स्वकल्काढये कपिलज्यं पचेज्जपन्।**
**पिबेद्दिनादौ तं नित् सरव शास्त्रार्थविद्भवेत्।।**
**अनया विद्यया जप्तं ब्राह्मी पत्र द्रभक्षणात्।**
**न विस्मरति मेघावी श्रुत्वा वेदागमान्मुनः।।**
**बहुना किमियं विधा जपतां कामदो मणिः।।**

कामदोमणिरिति: नेत् रोगं। मूत्राशो तिथि लक्षां जपत्वा योऽङ्कोल सर्पिषा जहुयम् अष्टस सहस्र वेत्ति सः भूत-भविष्य वर्तिव्य च इति। ब्राह्मीघृतं। घृताश्चतुर्गुगे ब्राह्मी रसैः घृतम् पर्चत्

**(देवीं) हुत्वा पलाशकुसुमैः वाक्श्रियं महती व्रजेत्।**
**ब्राह्मीघृतं पिवेल्यत्वा कवित्वं वत्सराद्भवेत्।।**

## मातङ्गीस्तुतिः

यथा—

मातङ्गि मातरीशे मधुमदमथनप्रिये महामाये ।
मोहिनि मोहप्रमथिनि मन्मथमथनप्रिये नमस्तेऽस्तु ।।
स्तुतिषु तव देवि विधिरपि पिहितमतिर्भवति विहितमतिः ।
तदपि तु भक्तिर्मामपि भवतीं स्तोतुं विलोभयति ।।
यतिजनहृदयनिवासे वासववरदे वराङ्गि मातङ्गि ।
वीणावादविनोदिनि नारदगीते नमो देवि ।।
देवि प्रसीद सुन्दरि पीनस्तनि कम्बुकण्ठि घनकेशि ।
मातङ्गि विद्रुमोष्ठि स्मितमुग्धाक्ष्यम्ब मौक्तिकाभरणे ।।
भरणे त्रिविष्टपस्य प्रभवसि तत एव भैरवी त्वमसि ।
त्वद्भक्तिलब्धविभवो भवति क्षुद्रोऽपि भुवनपतिः ।।
पतितः कृपणो मूकोऽप्यम्ब भवत्याः प्रसादलेशेन ।
पूज्यः सुभगो वाग्मी भवति जडश्चापि सर्वज्ञः ।।
ज्ञानात्मिके जगन्मयि निरञ्जने नित्यशुद्धपदे ।
निर्वाणरूपिणि शिवे त्रिपुरे शरणं प्रपन्नस्त्वाम् ।।
त्वां मनसि क्षणमपि यो ध्यायति मुक्तामणीवृतां श्यामाम् ।
तस्य जगत्त्रितयेऽस्मिन् कास्ताः ननु याः स्त्रियोऽसाध्याः ।।
साध्याक्षरेण गर्भितपञ्चनवत्यक्षराञ्चिते मातः ।
भगवति मातङ्गीश्वरि नमोऽस्तु तुभ्यं महादेवि ।।
विद्याधरसुरकिन्नरगुह्यकगन्धर्वयक्षसिद्धवरैः ।
आराधिते नमस्ते प्रसीद कृपयैव मातङ्गि ।।
वीणावादनवेळानर्तदलाबुस्थगितवामकुचम् ।
श्यामलकोमलगात्रं पाटलनयनं स्मरामि महः ।।
अवटुतटघटितचूलीताडिततालीपलाशताटङ्काम् ।
वीणावादनवेळाकम्पितशिरसं नमामि मातङ्गीम् ।।
माता मरकतश्यामा मातङ्गी मदशालिनी ।
कटाक्षयतु कल्याणी कदम्बवनवासिनी ।।
वामे विस्तृतिशालिनि स्तनतटे विन्यस्तवीणामुखं
तन्त्रीं तारविराविणीमसकलैरास्फालयन्ती नखैः ।

अर्धोन्मीलदपाङ्गमंसवलितग्रीवं मुखं बिभ्रती
माया काचन मोहिनी विजयते मातङ्गकन्यामयी ।।
वीणावाद्यविनोदगीतनिरतां लीलाशुकोल्लासिनीं
बिम्बोष्ठीं नवयावकार्द्रचरणामाकीर्णकेशाळिकाम् ।
हृद्याङ्गीं सितशङ्खकुण्डलधरां शृङ्गारवेषोज्ज्वलां
मातङ्गीं प्रणतोऽस्मि सुस्मितमुखीं देवीं शुकश्यामलाम् ।।
स्रस्तं केसरदामभिः वलयितं धम्मिल्लमाबिभ्रती
तालीपत्रपुटान्तरेषु घटितैस्ताटङ्किनी मौक्तिकैः ।
मूले कल्पतरोर्महामणिमये सिंहासने मोहिनी
काचित् गायनदेवता विजयते वीणावती वासना ।।
वेणीमूलविराजितेन्दुशकलां वीणानिनादप्रियां
क्षोणीपालसुरेन्द्रपन्नगवरैराराधिताङ्घ्रिद्वयाम् ।
एणीचञ्चललोचनां सुवसनां वाणीं पुराणोज्ज्वलां
श्रोणीभारभरालसामनिमिषां [षः] पश्यामि विश्वेश्वरीम् ।।
मातङ्गीस्तुतिरियमन्वहं प्रजप्ता जन्तूनां वितरति कौशलं क्रियासु ।
वाग्मित्वं श्रियमधिकां च गानशक्तिं सौभाग्यं नृपतिभिरर्चनीयतां च ।।

## ४. श्यामला जानकारियाँ खण्डः

### *सुवासिनीपूजाऽऽदिशेषकृत्यम्*

अथ श्यामलां शक्तिमाहूय श्रीक्रमोक्तक्रमेण पञ्चमवर्जं तामुपचर्य तच्छेषमुररीकृत्य हविः प्रतिपत्त्यादिक्रमशेषं समापयेत्। हविः प्रतिपत्तौ मूलेन सर्वेण तत्त्वत्रयशोधनं विशेषः।

### *श्यामोपासकनियमाः*

**एतदुपासकस्यावश्यानुष्ठेयाः नियमाः यथा—**

कदम्बतरुं न छिन्द्यात्। वाचा [१]कालीति पदं नोच्चारयेत्। वीणावेणुवादन-नर्तनगाधागोष्ठीषु प्रवर्तमानासु पराङ्मुखो न भवेत्। गायकान् न निन्द्यात् इति।

---

१. कमलिनीपदं— भ.

## पुरश्चरणसंकल्पः

एवं नित्यसपर्यां निर्वर्तयन् पुरश्चरणमाचरेत्। तच्च जपहोमतर्पणब्राह्मणभोजनाख्याङ्ग-चतुष्टयसमष्टिरूपम्। तत्प्रकारस्तु— दीक्षाप्रकरणोक्तकाले श्रीगुर्वनुज्ञातो ब्राह्मणैः स्वस्ति वाचयित्वा आचम्य प्राणानायम्य अमुकशर्मवर्मादिरहं श्यामामन्त्रसिद्धिकामो लक्षसङ्ख्याकं जपं, प्रकृते कलियुगत्वात् तच्चतुर्गुणितं, तद्दशांशहवन-तद्दशांशतर्पणतद्दशांशब्राह्मण[1]भोजनानि च करिष्य इति सङ्कल्पयेत्। एवं तत्तन्मन्त्रेषु तत्र तत्र प्रोक्तजप[2]सङ्ख्याऽऽदिसङ्कल्पो ज्ञेयः।

## मन्त्रजपः

अथ सति सम्भवे तन्त्रान्तरदृष्टेन विधिना ग्रामात् बहिः क्रोशे नगराच्च क्रोशद्वये क्षेत्रं परिगृह्णीयात्। अथवा समुद्रमहानदीतीरयोः पश्चिमाभिमुखवृषशून्यशिवायतनयोः विष्णुगृहपुण्यक्षेत्रतीर्थारण्यपर्वतशिखराश्वत्थ-बिल्वमूलविविक्तनिजगृहगोष्ठानां श्रीगुरुस्वेष्टदेवतासन्निध्योश्चान्यतमं देशमासाद्य दीपस्थानविन्यस्ते व्याघ्रचर्ममृगाजिनचित्रकम्बलकुशकटरक्तपटपट्टवसनोर्णावस्त्राद्यन्यतमे आसने उपविश्य विघ्नानुत्सार्य प्राणानायम्य सङ्कल्प्य वक्ष्यमाणलक्षणया अक्षमालया वक्ष्यमाणसंस्कारया रुद्राक्षाद्यन्यतमया वा मालया पूर्वाङ्गमन्त्रपूर्वकं प्रत्यहं सहस्रसङ्ख्याकं मूलमन्त्रं तद्दशांशान् उत्तराङ्गमन्त्रांश्च जप्त्वा पुनर्न्यासादिकं कृत्वा। पूर्वाङ्गमन्त्रो यथा—

**हसन्ति हसितालापे मातङ्गिपरिचारिके। मम भयविघ्ननाशं कुरु कुरु ठः ठः ठः हुं फट् स्वाहा** ।।इति।।

मूलमन्त्रश्च— न्यासोक्तसप्तदशखण्डसमष्टिरूपः।

**उत्तराङ्गमन्त्रास्तु— ऐं नमः उच्छिष्टचाण्डालि मातङ्गि** (**हुँ फट् स्वाहा** इति पाठान्तरम्) **सर्ववशङ्करि स्वाहा—** इति श्यामाङ्गं लघुश्यामा।

**ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा—** इति तदुपाङ्गं वाग्वादिनी।

**ॐ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।**

**सर्वस्यै वाच ईशाना चारु मामिह वादयेत्।।**

इति तत्प्रत्यङ्गं नकुली।

## जपकालः

अयं च जपो अपराह्णे कर्तव्यः, अपराह्णे श्यामेति सूत्रेण अपराह्णस्य पूजाकालत्वविधानात्। अन्ये त्वामध्यन्दिनमेव। देशोपप्लवादिसम्भावनायामासायाह्नमपीति स्थितिः।।

---

१. भोजनतद्दशांशमार्जनानि च करिष्ये इति संकल्पयेत्। जपसंख्या १०००००, तद्दशांशहोमसंख्या १००००, तद्दशांशतर्पणसंख्या १०००, तद्दशांशब्राह्मणभोजनसंख्या १००, तद्दशांशमार्जनसंख्या १०।। एवं— ब२.

२.

## स्त्रीशूद्रयोः प्रणवप्रत्याम्नायः

द्विजातीनां जपाद्यन्तयोः प्रणवोच्चारः स्त्रीशूद्रयोस्तु सबिन्दुकचतुर्दशस्वर उच्चार्यः।

## *पुरश्चरणांगहोमः*

**एवं जपोत्तरं तस्मिन्नेवाहनि श्रीक्रमोक्तेन विधिना कुण्डस्थण्डिलान्यतरप्रतिष्ठापितेऽग्नौ देव्या उपचारान्ते सर्वासामावरणदेवतानां एकैकाहुतिं तत्तन्मन्त्रैः प्रधानदेवतायाः दशाहुतीश्च स्वाहाऽन्तमूलेन उद्देशत्यागपूर्वकं एकैकेन त्रिमध्वक्तेन पलाशकुसुमेन हुत्वा अथ जपदशांशं च हुत्वा होमशेषं समापयेत्।**

**मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी।**
**तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता।।**

इति शक्ति सङ्गमतन्त्रवचनात् स्वाहाऽङ्गमन्त्रेष्वपि पुनः स्वाहा प्रयोगः कार्यः।।

इदं च द्रव्यं इह इन्द्रियकामाग्निहोत्राङ्गदधिवन्नित्यं काम्यं च, संयोगपृथक्त्वात्। तिलैः शान्त्या इत्यादिविधीनामन्यतः सिद्धहोमाश्रयेण, गोदोहनस्य तादृशप्रणयनाश्रयेणेव, फलायगुणविधिरूपत्वात्, सत्यां कामनायां अयमेव होमो द्रव्यान्तरैरपि वक्ष्यमाणैः कार्यः, काम्यस्य नित्यबाधकत्वात्।

## *पुरश्चरणांगं तर्पणम्*

ततो नद्यादौ चतुरश्रमण्डलं विधाय तत्र चिन्तिते श्यामायन्त्रे देवीमावाह्य पञ्चधा उपचर्य सुरभिलेन सुवर्णरजतताम्रादिपात्रगृहीतेन सलिलेन मूलान्ते **श्रीमातङ्गीश्वरीं तर्पयामीति** होमदशांशं तर्पयेत्। सत्यानुकूल्ये जपस्थान एव वा पूजाचक्रे तर्पयेत्। ''**तर्पणेऽपि तथैव स्यान्नमसोन्ते पुनर्नमः**'' इति शक्तिसङ्गमतन्त्रोक्तेः नमोन्तेष्वपि मन्त्रेषु पुनः नमस्तर्पयामीति प्रयोगः। तन्त्रान्तरानुसारिणो मार्जनपक्षेऽपि नमोयोजनं तत्रैवोक्तम्।।

## *पुरश्चरणांगं भोजनम्*

ततः तर्पणदशांशसङ्ख्याकानेतद्विद्यादीक्षितानलाभे यथासम्भवं तत्तन्मन्त्रदीक्षितान्वा सदाचारान् प्रातः निमन्त्रिताभ्यञ्जितान् ब्राह्मणान् सुवासिनीः कुमारीश्च यथाविभवं वस्त्रगन्धादिभिः देवताधियाऽभ्यर्च्य मृष्टान्नेन भोजितान् ताम्बूलदक्षिणापरितोषितान् प्रदक्षिणीकृतनमस्कृतानाशिषो गृहीत्वा विसृजेत्।

तर्पणदशांशब्राह्मणभोजनाशक्तौ तु तर्पणोक्तवज्जले देवतामावाह्य उपचर्य च मूलान्ते **आत्मानमभिषिञ्चामि नमः** इति कुम्भमुद्रया तर्पणदशांशवारं मूर्धन्यभिषेकं वा कुशैः मार्जनं वा विधाय तद्दशांशं ब्राह्मणान् भोजयेत्।

इत्येकः पक्षः। प्रतिलक्षान्ते सर्वान्ते वा होमादि कुर्यादित्यपरौ।

## होमप्रत्याम्नायो जपः

होमाशक्तौ ब्राह्मणाम् पुरश्चरणजपसङ्ख्याद्विगुणो जप इति मुख्यः पक्षः। होमसङ्ख्याद्विगुणो जप इति गौणः। क्षत्रियादीनां त्रयाणां त्रिगुणादिर्जयः। एवं तर्पणेऽपि। द्विजभक्तस्य शूद्रस्य द्विजस्त्रीणामपि होमप्रतिनिधिः जप एव। तेषां होमे तु नाधिकारः। ब्राह्मणभोजनस्य तु न क्वापि प्रतिनिधिः।

## आरब्धस्य पुरश्चरणादेः आशौचेऽपि कार्यत्वम्

इदं च पुरश्चरणमारब्धं सत् आशौचप्राप्तावपि कार्यम्। नित्यार्चनादि च। तदुक्तम्—

**जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।**
**नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ।।**

इति देवीयामले।

**सूतके मृतके चैव नित्यं विष्णुमयस्य च ।**
**सानुष्ठानस्य विप्रेन्द्र सद्यः शुद्धिः प्रजायते ।।**

इति नारदपाञ्चरात्रे।

**शिवविष्ण्वर्चने दीक्षा यस्य चाग्निपरिग्रहः ।**

इति तस्येति शेषः।

**ब्रह्मचारियतीनां च शरीरे नास्ति सूतकम् ।।**

इति विष्णुयामले।

**ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि । पूजां गृहणामि शूद्राणां त्वाचारनिरतात्मनाम् ।।**
**यज्ञव्रतविवाहेषु श्राद्धे होमार्चने जपे । आरब्धे सूतकं न स्यादनारम्भे च सूतकम् ।।**
**आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः। नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ।।**

इति विष्णुवचनम् । ब्राह्मणस्येत्यपलक्षणं क्षत्रियवैश्ययोः।

**नचैवापूज्य भुञ्जीत शिवलिङ्गं महेश्वरि । सूतके मृतके चापि न त्याज्यं शिवपूजनम् ।।**

इति लिङ्गपुराणे। पराशरोऽपि—

**उपासने तु विप्राणामङ्गशुद्धिः प्रजायते।।**

इति च। एवमन्यान्यपि वचनानि तन्त्रान्तरेषु बहुलं उपलभ्यमानानि विस्तरभयान्नेह लिखितानि। सूतकादौ नैमित्तिककाम्ययोः अनधिकार एव, साधकस्य प्रतिबन्धकबाहुल्यात्।

## सिद्धिपर्यन्तं पुरश्चरणस्य अभ्यासः

एकेन पुरश्चरणेन यदि न मन्त्रः सिध्यति तदा तस्य द्वयं त्रयं वा कुर्यात्। तथाऽपि तदसिद्धौ सिद्धिकारकाः प्रयोगाः ग्रन्थान्तरोक्ताः ग्राह्याः। सिद्धिसूचकानि चान्यतो ज्ञेयानि, इह तु विस्तरभयान्न लिखितानि।

**सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन हि । सर्वे मन्त्राश्च सिध्यन्ति तत्प्रभावात् कुलेश्वरि।।**

**सम्यक्सिद्धैकमन्त्रस्य नासाध्यं विद्यते क्वचित्। बहुमन्त्रवतः पुंसः का कथा शिव एव सः।।**

अतः पुरश्चरणमावश्यकमिति।

## पुरश्चरणप्रत्याम्नायाः

अथ सङ्गत्या पुरश्चरणप्रत्याम्नायाः कतिचित् लिख्यन्ते। शशिसूर्योपरागे त्रिरात्रमेकरात्रं वा पूर्वामुपोष्य एकभुक्तं वा विधाय ग्रहणारम्भे घटिकार्धात् प्रागेव स्नातः समुद्रगाया नद्यास्तटाकादेर्वा नाभिमात्रजले तिष्ठन्, अशक्तौ तु तट एवोपविष्टः, आचम्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, **ॐ अमुकराशिगते सवितरि सोमस्य सूर्यस्य वा ग्रहणे अमुकगोत्रोऽमुकशर्मवर्मादिरहं अमुकविद्यासिद्धिकामः स्पर्शमारभ्य विमुक्तिपर्यन्तं जपं करिष्ये** इति सङ्कल्प्य जपेत्। ततोऽपरेद्युः ग्रहणकालीनस्य जपस्य समसङ्ख्याकं तद्दशांशं वा होमं, तद्दशांशं तर्पणं, तत्समसङ्ख्याकं तद्दशांशं वा ब्रह्मणभोजनं च कुर्यात्। यद्वा—ग्रहणपुण्यकाल एव मन्त्रानुसारेण जपस्य तत्समांशस्य तद्दशांशस्य वा होमस्य तदनुगुणस्य तर्पणस्य च कालं विभज्य जपाद्याचरेत्। परेद्युः तर्पणसमसङ्ख्याकं तद्दशांशं वा ब्राह्मणभोजनं कारयेदित्येकः प्रकारः।

कृष्णाष्टम्यां प्रातः कृतनित्यक्रियः पूर्ववत् सङ्कल्प्य अयुतचतुष्टयं जपं सप्तधा विभज्य प्रत्यहं चतुर्दशोत्तरसप्तशताधिकसहस्रपञ्चकसङ्ख्याया (५७१४) तत्कृष्णत्रयोदशीपर्यन्तं (६x५७१४=३४,२८४) जप्त्वा चतुर्दश्यां षोडशोत्तरसप्तशताधिकसहस्रा पञ्चकं (५७१६; ५७१६+३४२८४=४००००) जपेत्। सङ्कल्पे चाद्य कृष्णाष्टमीमारभ्य एतच्चतुर्दशीपर्यन्तमिति विशेषः। होमादिविधिस्तु तद्दशांश एवेत्यन्यः।

**प्रातः नित्यक्रियोत्तरं प्राग्वत् सङ्कल्प्य अकारादिक्षकारान्तान् मातृकावर्णान् आनुलोम्येनोच्चार्य मूलं च सकृदुच्चार्य पुनर्मातृकावर्णान् विलोमानुच्चारयेत्। इत्येवंरीत्या प्रत्यहमष्टोत्तरशतसङ्ख्यया मासमात्रं जप्त्वा होमादि कुर्यात्। सङ्कल्पस्तु एतदनुगुण एवोह्यः इत्यपरः।**

यथासम्भवं अनयोः प्रत्याम्नाययोः जपस्य चतुर्गुणितत्वं तर्पणादेश्च तद्दशांशत्वं बोध्यम्। प्रत्यहं रात्रौ त्रिकालं सर्वोपचारैरिष्टदेवतां साङ्गां सावरणां अर्चयेत्। एवं षण्मासान् मासमात्रं वा पूजयितुः पुरश्चरणमन्तरेणापि विद्यासिद्धिः भवति। सङ्कल्पश्चैतदनुरूप एवोह्यः इति चापरः।

**सूर्योदयं समारभ्य यावत्सूर्योदयावधि । तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत्।।**
**सहस्त्रारे गुरुः पादपद्मं ध्यात्वा प्रपूज्य च । केवलं देवभावेन जप्त्वा सिद्धीश्वरो भवेत्।।**

इति चान्यः।

प्रकारान्तराणि च ग्रन्थान्तरेषु द्रष्टव्यानीति दिक्।

## कूर्मचक्रलक्षणम्

समीकृते भूतले प्राक्प्रत्यगायताः दक्षिणोत्तरायताश्चतस्त्रश्चतस्त्रो रेखा विलिख्य नवकोष्ठानि विधाय तत्र पूर्वादिप्रादक्षिण्यक्रमेण अष्टसु कोष्ठेषु क च ट त प य श ळ ख्यान् अष्टवर्गान् अकारादिस्वरद्वयं च विलिख्य मध्यकोष्ठे श्रीकारं विलिखेत्। इदं च कूर्मचक्रं क्षेत्रग्रामगृहभेदात् त्रिविधम्। तत्र क्षेत्रग्रामयोः तत्तन्नामाद्यक्षरयुक्तं कोष्ठं मुखं कूर्मस्य। एतदेवास्य दीपस्थानमुच्यते। गृहे तु गृहपतेः नामाद्यक्षरयुक् कोष्ठं मुखम्। तत्पार्श्वद्वयगतकोष्ठद्वयं हस्तौ। तदधःस्थितं कुक्षिः। तदधःस्थितौ तु चरणौ। कुक्षिमध्यगतं कोष्ठं पृष्ठम्। चरणमध्यगतं कोष्ठं च पुच्छं इति विवेकः। एवमुक्तप्रकारस्य क्षेत्रादौ विभावितस्य कूर्मस्य मुखे पृष्ठे वा जपे होमे च सर्वार्थसिद्धिः। करयोः तनौ कोष्ठान्तराणि अनुपयुक्तानीति कूर्मचक्रानावश्यकतोक्ता कतिपयेषु स्थलेषु। यथा—

**कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे। महाकाळे च काश्यां च दीपस्थानं न चिन्तयेत्।।**

इति। दीपस्थानोपलक्षिततत्वात् कूर्मचक्रमपि दीपस्थानमित्युक्तम्। इह चक्रे चोक्तेषु कोष्टेषु रिपुस्थानं विचिन्त्य तत्त्यागपूर्वकमवशिष्टं मित्रस्थानमुपादेयम्। अरिमित्रविचारो यथा—

**अद्वयस्य ठकारेण ठकारस्यापि तेन च । लृद्वयस्य पकारेण पकारस्यापि तेन च ।।**
**ओद्वयस्य षकारेण षकारस्यौयुगेन च । जकारस्य टकारेण झकारस्य खकारतः ।।**
**उकारस्य लकारेण फकारस्य धकारतः । भकारस्य तु रेफेण यकारस्य सकारतः ।।**
**अरित्वमेषं वर्णानां अन्येषं मित्रभावना ।।इति।।**

## मालासंस्कारः

ताश्च अकारादिक्षकारान्तमातृकावर्णरुद्राक्षमुक्ताफलमाणिक्यस्फटिकप्रावळस्वर्णरजतशङ्खरक्तचन्दनोपादनकमणिपत्रजीवपद्मबीजकुशग्रन्थ्यादिमय्यः।

## अक्षमालायाः संस्कारानपेक्षा

अक्षमाला हि ब्रह्मरन्ध्रस्य दक्षभागादिनाभिमभिव्याप्य वामभागपर्यन्तमवरोहारोहणक्रमेण ब्रह्मनाड्यां अन्योन्याभिमुखत्वेन ग्रथितैः आनुपूर्व्येणोच्चारितैः अकारादिभिः ळकारान्तैः पुनः प्रातिलोम्येनोच्चारितैः

च ळकारादिभिः अकारान्तैः वर्णैः शतबीजात्मिका भवति। क्षकारस्य मेरुस्थानीयस्य ळकारद्वयस्य मध्य उच्चारणमात्रम्। न तु जपसङ्ख्याऽन्तर्गणना। अत्रानुलोम्येन अवरोहारोहयोः प्रथमं मातृका ततो मन्त्रः। प्रातिलोम्येन अवरोहारोहयोस्तु प्रथमं मन्त्रः ततो मातृकेति तत्त्वम्। शतान्ते अ क च ट त प य शाख्यवर्गाष्टकादित्वेन जपस्य अष्टोत्तरशतत्वं ज्ञेयम्। एवं सहस्रादौ च। अस्या मालाया न संस्कारापेक्षा।

## *रुद्राक्षमालासंस्कारः*

अष्टोत्तरशतं रुद्राक्षान् षड्गुणिते वक्ष्यमाणान्यतमे सूत्रे सप्रणवेकैकमातृकोच्चारणपूर्वकमन्तरान्तरा सग्रन्थिकं अन्योन्याभिमुखं गोपुच्छाकारेण सर्पाकारेण वा ग्रथयित्वा स्थूलमेकं रुद्राक्षमेकीकृते सूत्राग्रद्वये मेरुत्वेन ग्रथयित्वा नवसङ्ख्याकैः अश्वत्थपत्रैः अष्टदलपद्मं विरच्य तत्र मालां निवेश्य मूलमन्त्रान्ते गोमूत्रगोमयगव्यदुग्धदधिघृताख्येन पञ्चगव्येन, **ॐ सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमो नमः। भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः।।**— इति मन्त्रान्ते कुशोदकेन च प्रक्षाळ्य, **ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः**— इति मन्त्रान्ते चन्दनागरुकर्पूरादिभिराघर्षणं विधाय, **ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।।**— इति मन्त्रेण धूपयित्वा, **ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्।।**— इति मन्त्रेण चन्दनकस्तूरीकुङ्कुमकर्पूरैः लेपयित्वा, अक्षमालां वामकरपुटे निधाय, **ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।।**— इति मन्त्रेण अष्टोत्तरशतवारमभिमन्त्र्य, **रुद्राक्षमालायाः प्राणाः इह प्राणाः। रुद्राक्षमालायाः जीव इह स्थितः रुद्राक्षमालायाः सर्वेन्द्रियाणि रुद्राक्षमालायाः वाङ्मनः प्राणाः इह आयान्तु स्वाहा।।**— इति मन्त्रेण प्राणप्रतिष्ठां कृत्वा, उपास्यदेवतां तत्रावाह्य, मूलेन पञ्चधा उपचर्य, तेन मातृकावर्णैश्चाभिमन्त्र्य, होमप्रकरणोक्तरीत्या अग्निमुखं विधाय, मूलेन अष्टोत्तरशताज्याहुतीः हुत्वा, सम्पाताज्यं मालायं निक्षिपेत्। अशक्तौ तु होमसङ्ख्याद्विगुणं मूलमन्त्राभिमन्त्रणं इति।

## *मालाऽन्तरसंस्कारः*

**अथान्यासां मालानां संस्कारः**— उक्तरीत्या ग्रथितां मालां प्रासादमन्त्रेण पञ्चगव्ये क्षणं निक्षिप्य, तस्मादुद्धृत्य कुशोदकेन प्रक्षाल्य, चन्दनादिभिरुपलिप्य, पात्रे निधाय, पञ्चायतनदेवताः तत्तन्मन्त्रेणावाह्य, पञ्चधोपचर्य, प्रासादेन शतवारानभिमन्त्र्य, सूर्यादीन् ग्रहानिन्द्रादीन् दिक्पालांश्च तत्तमन्त्रेण सम्पूज्य, सघृतैः तिलैः यथाशक्तिवारं मूलेनाग्नौ जुहुयात्। अशक्तौ अभिमन्त्रयेत्। ततो यथाविभवं काञ्चनं गुरवे दक्षिणां दत्वा, ब्राह्मणांश्च भोजयेत्। इति।

**संस्कारान्तरं यथा—** सूत्रं मणींश्च पञ्चगव्यं दिनत्रयं संस्थाप्य, चतुर्थदिने उद्धृत्य, अस्त्रेण प्रक्षाल्य, हृन्मन्त्रेण स्वेष्टमन्त्रेण वा प्रत्येकं आवृत्तेन मणीनन्योन्याभिमुखं ग्रथयित्वा, स्थण्डिले स्वेष्टदेवतासपर्यामण्डलं विधाय, तत्र तामभ्यर्च्य, मूलमष्टोत्तरशतसङ्ख्यं जप्त्वा, तत्तत्कल्पोक्तपुरश्चरणहोमद्रव्येण घृतेन वा यथाशक्ति हुत्वा, मण्डले मालां निधाय, तस्यामस्त्रमन्त्र-मूलमन्त्र-षडङ्गमन्त्रांश्च विन्यस्य, तां स्वेष्टदेवतारूपां विभाव्य, सम्पूज्य, सर्वभूतबलिं दत्वा, आचार्यं दक्षिणाऽऽदिभिः परितोष्य ब्राह्मणान् भोजयेदिति।

उक्तसंस्कारविधिः त्रैवर्णिकविषयः। स्त्रीशूद्राणां तु उपास्यमूलमन्त्रेणैव सर्वं कार्यम्।

यन्मन्त्रजपार्थं या माला संस्कृता तया तस्यैव जपः कार्यो नान्यस्य। अत्र च विशेषः—

**शिवमन्त्रेण संग्रथ्य शक्तिमन्त्रं जपेदपि। शक्तिमन्त्रेण संग्रथ्य शिवमन्त्रं जपेच्छिवे।।**
**ध्रुवेण मातृकाभिर्वा ग्रथ्यन्ते मणयो यदि। तदा सर्वेऽपि जप्तव्या मनवो मालया तथा।।**इति।।

ध्रुव : प्रणवः।

## *देवताभेदेन सूत्रभेदः*

**देवताभेदेन सूत्रभेद उक्तः। यथा—** देव्या रक्तपट्टसूत्रम्। शिवस्योर्णाभवं श्वेतं वा वल्कलं वा। सूर्यगणेशयोः कार्पासजम्। तच्च सुवासिन्या ब्राह्मण्या कर्तिनम्। स्वामन जनीयोषित्कर्तितं रा। त्रिगुणं त्रिगुणीकृतम्। यत्र ब्राह्मणीकर्तितं न मिलति तत्र वर्णान्तरीयकेवलसुवासिनीकर्तितं ग्राह्यम्। अन्येषु सूत्रेषु त्वैच्छिकं गुणस्थौल्यं मानं च।

## *मालासंस्कारकालः*

**मालासंस्कारकालस्तु—** विष्णोः द्वादश्यां पूर्वाह्णः। शक्ते अष्टमीनवमीचतुर्दशीनां रात्रिः। शिवस्य त्रयोदशीदिवा। सूर्यस्य सप्तमीदिवा इति।

## *मालाभेदेन फलभेदः*

**मालाभेदेन फलभेदो यथा—** मातृकाऽक्षमाला क्षिप्रं मन्त्रसिद्ध्यै। रुद्राक्षमाला मोक्षाय। मौक्तिकमाणिक्यमय्यौ साम्राज्याय। स्फाटिकी सर्वेभ्यः कामेभ्यः। पुत्रजीवमयी सम्पत्सारस्वतावाप्त्यै। पद्मबीजमयी श्रीयशोभ्याम्। रक्तचन्दनमयी वश्यभोगाभ्याम्। इत्यन्यासामपि फलानि ग्रन्थान्तरेषु द्रष्टव्यानि।।

## *सूत्रजीर्णतादौ प्रायश्चित्तम्*

सूत्रे जीर्णे नवेन ग्रथयित्वा मूलेनाष्टोत्तरशतवारानभिमन्त्रयेत्। जपसमये प्रमादात् करगलितायां छिन्नायां वा मालायां निषिद्धस्पर्शे वा अष्टोत्तरशतमूलमन्त्रजपः प्रायश्चित्तम्।

## जपभेदाः

अथ जपभेदाः। ज्ञानार्णवे—

निगदेनोपांशुना वा मानसेनाथवा जपेत् । निगदः परमेशानि स्पष्टं वाचा निगद्यते ।।
अव्यक्तश्च स्फुरद्वक्त्र उपांशुः परिकीर्तितः । मानसस्तु वरारोहे चित्तेनान्तररूपवान् ।।
निगदेन तु यज्जप्तं लक्षमात्रं वरानने । उपांशुस्मरणेनैव तुल्यं भवति शैलजे ।।
उपांशुलक्षमात्रं तु यज्जप्तं कमलेक्षणे । मानसस्मरणेनैव तुल्यमेकेन सुन्दरि ।।इति।।

स्वच्छन्दतन्त्रसारे तु—

जपस्तु षड्विधः प्रोक्तस्तत्प्रकारोऽयमुच्यते । वाचिकं मानसं चैव यौगिकं योगवाचिकम्।।
योगमानसिकं चैव वाङ्मानसिकयौगिकम् । वाचा केवलयोच्चार्य मन्त्रं देवीं विभाव्य च।।
जपेद्यत् परमेशानि वाचिकं तत्प्रकीर्तितम् । देव्या रूपं च सञ्चिन्त्य सावधानेन चेतसा।।
मन्त्रस्याप्यनुसन्धानं मानसं परिकीर्तितम् । त्रिस्थानेन त्रिबीजानि क्रमात् सञ्चिन्त्य मार्गतः।।
आरोहो यौगिकं प्रोक्तमुच्यते योगवाचिकम् । लक्ष्ये मनः समायोज्य वाचा मन्त्रं जपेच्छिवे।।
योगवाचिकमेतत् स्याद्योगमानसिकं शृणु । लक्ष्येण मानसं पूर्वं संयोज्य मनसा जपम्।।
योगमानसिकं विद्यादथान्यदपि चोच्यते । मनसाऽपि जपेन्मन्त्रं बीजानारोहणक्रमात्।।
वाङ्मानसिकयोगाख्यं जपमेतदनुत्तमम् । वाचिकेन जपेनैव केवला वाक् प्रवर्तते।।
मानसाच्छ्रियमाप्नोति यौगिकाद्योगसिद्धयः । वाङ्मानसजपेनैव वाग्ज्ञानैश्वर्यसिद्धयः।।
भवन्ति परमेशानि योगमानसिकेन तु । अणिमादीनि चान्यानि सर्वाणि लभते ध्रुवम्।।
वाङ्मानसिकयोगाख्यजपेन परमेश्वरि । वागाद्यकुलपर्यन्तमचिराल्लभते नरः।।
येन केन जपेनैव ह्रस्वदीर्घप्लुतक्रमात् । जप्ता विद्याश्च मन्त्रांश्च सर्वे सर्वार्थदायिनः।।
भवन्तु गुरुवक्त्रेण लब्धाः सर्वाङ्गसुन्दरि । स्वयं निरीक्ष्य ये कोशं मन्त्रं विद्यामथापि वा।।
गृह्णीयुर्ये व्रजेयुस्ते रौरवं नरकं शिवे । तस्मादास्तिक्यसंयुक्तः साधको देशिकाज्ञया।।
शिवागमान्निरीक्षेत नान्यथा वीरवन्दिते ।।इति।।

## होमे वह्निस्थितिविचारः

तत्र मुहूर्तचिन्तामणौ—

सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः।
सौख्याय होमः शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च।।

अस्यार्थः— शुक्लप्रतिपदादिहोमदिनसङ्ख्ययैकमधिकमङ्कमादित्यादिवारसङ्ख्यां च मेलयित्वा चतुर्भिर्हरणेन त्रये शिष्टे शून्ये वा वह्निर्भुवि वसति। तदा होमः सुखाय भवति। एकस्मिन् द्वये वा शेषे

क्रमाद्विवि पाताळे च वह्निवासः तदानीं होमेन प्राणार्थनाशौ भवतः इति। ततैव ग्रहविचारो रुद्रयामळे—

**तेषां स्थितिक्रमं वक्ष्ये नक्षत्रेषु यथा स्थिताः । सूर्यो बुधा भृगुश्चैव शनिश्चन्द्रो महीसुतः।।**
**जीवो राहुश्च केतुश्च नवैते देवि खेचराः । सूर्यभाच्चन्द्रभं यावत् गणयेच्च महेश्वरि।।**
**त्रीणि त्रीणि च ऋक्षाणि रविभादीनि [1]दापयेत्। सूर्यादीनां फलं देवि शृणु वक्ष्ये यथाक्रमम्।।**
**आदित्ये तु भवेच्छोको बुधे चैव धनागमः । शुक्रे लाभं विजानीयाच्छनौ पीडा न संशयः।।**
**चन्द्रे लाभो महान् देवि भौमे चैव तु बन्धनम् । गुरुणा च धनप्राप्तिः राहौ हानिस्तथैव च।।**
**केतुना जायते मृत्युः फलमेवं महेश्वरि। क्रूरहोमस्तथा देवि क्रूरग्रहमुखो भवेत्।।**इति।।

सूर्यभं सूर्याक्रान्तं नक्षत्रं, चन्द्रभं तद्दिवसनक्षत्रम्। दापयेत् सूर्यादिभ्यः इति शेषः। सूर्यनक्षात्रादिचन्द्रनक्षत्रपर्यन्तं नक्षत्राणां त्रयं त्रयं सूर्यादिस्वामिकमित्यर्थः। क्रूरहोमो मारणोच्चाटनादिफलकः। शेषं सुगमम्। एवं बह्निस्थितिं ग्रहांश्च विचार्य, सौम्यहोमः सौम्यग्रहेषु क्रूरश्च क्रूरग्रहेषु कार्यः।

## *कुण्डस्थण्डिलयोः परिमाणम्*

तत्र एकोनपञ्चाशत्सङ्ख्याकाहुतिपर्यन्तं स्थण्डिलमेव। तच्च अष्टादशाङ्गुलप्रमाणं परितः अङ्गुष्ठोन्नतम्। अग्रे कुण्डेन सह विकल्पोऽशक्तिशक्तिभ्यां व्यवस्थितिः। पञ्चाशदादिनवनवतिसङ्ख्याहुतिपर्यन्तं मुष्टिमात्रम्। मुष्टिः अरन्तिः। शतादिनवनवत्यधिकनवशत्याहुतिपर्यन्तं अरत्लिमितम्। निष्कनिष्ठमुष्टिर्हस्तोऽरत्निः। सहस्रादिहोमे हस्तमात्रम्। अयुतादौ द्विहस्तम्। लक्षादौ चतुर्हस्तम्। दशलक्षादौ षड्ढस्तम्। कोटिहोमादौ अष्टहस्तं दशहस्तं वा। चतुर्विंशत्यङ्गुलैः हस्तः। अङ्गुलं तु तिर्यङ्निहिताष्टयवप्रमाणं स्वमध्यमामध्यपर्वमितं वा ज्ञेयम्। मुष्ट्या वा चतुरङ्गुलानि। अर्धयवोनचतुस्त्रिंशताङ्गुलैः द्विहस्तम्। सार्धैकचत्वारिंशता त्रिहस्तम्। अष्टचत्वारिंशता चतुर्हस्तम्। पादोनचतुःपञ्चाशता पञ्चहस्तम्। पादोनैकोनषष्ट्या षड्ढस्तम्। सार्धत्रिषष्ट्या सप्तहस्तम्। अष्टषष्ट्या यवोनया अष्टहस्तम्। द्विसप्तत्या नवहस्तम्। षट्सप्तत्या दशहस्तं कुण्डं स्थण्डिलं वा भवति। कुण्डाङ्गानां व्यासखातनाभिकण्ठमेखलायोनीनां सम्यज्ज्ञान एव कुण्डं युक्तम्। अन्यथा अत्यन्तमनिष्टम्। स्थण्डिलं चतुरश्रङ्गुलोत्सेधं चतुरङ्गुलोत्सेधं वा। स्थूलद्रव्यहोमे तत्तत्परिमाणस्यापर्याप्तौ स्वोत्तरपरिमाणमपि ग्राह्यम्।

## *होमे इतिकर्तव्यताविशेषः*

बहु-ऋत्विक्कर्तृके होमे यथाकालं प्रत्याहुत्युद्देशत्यागयोः कर्तुमशक्यत्वात् यजमानो देवतां द्रव्यं च मनसा ध्यात्वा अमुकदेवताया इदं सर्वहोमद्रव्यजातं न ममेति त्यजेत्।

---

१. भावयेत्— ब२.

ऋत्विजस्त्वाचान्ताः कृतप्राणायामाः प्रत्येकं देशकालौ सङ्कीर्त्य अमुकेन वृतोऽहं अमुकसङ्ख्याकहोममध्ये अमुकांशेन यजमानोपकल्पितामुकद्रव्येण होमं करिष्ये इति सङ्कल्प्य आसनविधिं भूतशुद्ध्यादिकं तत्तद्देवतार्ष्यादिन्यासत्रयं कृत्वा अग्नौ देवताध्यानमानसपूजाऽन्ते प्राङ्मुखा वोदङ्मुखा वा जुहुयुः। होमसङ्ख्यासमाप्तौ परिधिपरिस्तरणान्तःपतितं हविः सर्वमग्नौ प्रक्षिपेत्। तद्बहिःपरितं तु न।

अनेकदिनसाध्ये तु होमे प्रतिदिवसं कयाचित् सङ्ख्यया संस्थाप्य वह्निरक्षणपूर्वकं शुभदिने समाप्तिं कुर्यात्। प्रतिदिनं होमाद्यन्तयोः प्रधानदेवतां अङ्गदेवताश्च गन्धपुष्पादिभिः अग्निमध्ये पूजयेत्। आरम्भे समाप्तिदिने अग्निमूलमन्त्रेण स्वाहास्वधासहितमग्निं पूजयेत्। तत्र गन्धादिकं बहिरेव अग्नये दद्यात्।

यत्र होम एव प्रयोगविशेषे फलप्रदत्वात् प्रधानं न पुनर्जपाङ्गं तत्र ब्राह्मणभोजनसङ्ख्या तन्त्रे विशेषानुक्तौ स्मृत्युक्ता ग्राह्या। तत्र लक्षहोमे षष्ट्यधिका नवशती मुख्यः पक्षः। विंशत्यधिका पञ्चशती मध्यमः। दशाधिका त्रिशती अधमः।

यत्र प्रधानदेवताऽङ्गत्वेन स्मृतितन्त्रोक्तयोरविरोधे समुच्चयपक्षमाश्रित्य ग्रहा अपि पूज्यन्ते तत्र तदङ्गब्राह्मणभोजनमपि कार्यम्। तत्रोत्तमे पक्षे विंशत्यधिका सप्तशती ब्राह्मणानां भोजनीया। मध्यमपक्षे चत्वारिंशदुत्तरं शतत्रयम्। अधमे च दशाधिकं शतमिति।

## काम्यहोमद्रव्याणां मानं फलं च

तिलैश्चुलुकमितैः शतसङ्ख्याकैर्वा प्रत्याहुतिहोमः शान्त्यै, आज्येन च कर्षप्रमाणेन। ग्रासमितैरन्नैरन्नाय। अमृतासमिद्भिः कनिष्ठास्थूलाभिः चतुरङ्गुलप्रमाणाभिः ज्वरोपशमनाय चूतपल्लवैश्च। दूर्वाभिः तिसृभिस्तिसृभिरायुषे। कृतमालकुसुमैः धनाय। उत्पलैः भोगाय। बिल्वदलैः राज्याय। समग्रैः पद्मैः साम्राज्याय। मुष्टिमितैः लाजैः कन्यायै। नन्द्यावर्तैः कवित्वाय। [1]वञ्जुळमल्लिकाजातीपुन्नागैः भाग्याय। बन्धूकजपाकिंशुकमधूकैः ऐश्वर्याय। कदम्बैः वश्याय। लवणैः शुक्तिप्रमाणैः आकर्षणाय। शालितण्डुलैः अर्धमुष्टिमितैः धान्याय। कुङ्कुमगोरोचनादिभिः गुञ्जामितैः सौभाग्याय। पलाशपुष्पैः तेजसे कपिलाघृतेन चोक्तमानेन। धुत्तूरकुसुमैरुन्मादाय। [2]विषवृक्षनिम्बश्लेष्मातकविभीतकसमिद्भिः दशाङ्गुलप्रमाणाभिः शत्रुनाशाय। निम्बतैलाक्तैः [3]लवणैः उक्तमानैः मारणाय। काकोलूकपक्षेणैकैकेन विद्वेषणाय। तिलतैलाक्तैः मरीचैः विंशत्या कासश्वासप्रशमनाय इति। पुष्पेषु स्थूलमेकैकं, अल्पानि द्वित्रीणि इति वा विवेकः। एतानि द्रव्याणि काम्यजपाङ्गेषु होमेषु तत्तज्जपदशांशसङ्ख्याकानि। प्राधान्येन होमे तु सङ्ख्याऽनुक्तौ सहस्रसङ्ख्याकानि। इह च प्रथमं अभीष्टदेवतायै विज्ञाप्य अमुककर्मसिद्ध्यर्थं एतावदाहुतीः करिष्यामीति सङ्कल्पयेत्। कर्षस्तु दशगुञ्जामितमाषषोडशकप्रमाणः शुक्तिः कर्षद्वयम्। मुष्टिस्तु पलम्।

---

१. वकुल— अ. २. तिलतैलाक्तैः इत्यधिकः— अ.
३. भक्तल— अ.

## पुरश्चरणकाले विहितानि

मनःस्थैर्यशोचमौनमन्त्रार्थचिन्तननिर्वेदश्रद्धोत्साहक्रोधाभावसन्तोषेन्द्रियनिग्रहब्रह्मचर्यगुरुप्रणतिसुगन्धामलकस्नानसुवसनसुरभिळानुलेपनमध्यपत्रवर्जपलाशपत्रावलिमितैकवारभोजनप्रक्षाळितदर्भास्तीर्णधौतवस्त्रशयनत्रिषवणस्नानादीनि। अशक्तौ तु प्रातःस्नानमात्रम्।

## निषिद्धानि

अप्रियानृतभाषणकरञ्जविभीतकार्कस्नुहिछायाक्रमणप्रतिग्रहादीक्षितस्त्रीशूद्रपतितनास्तिकसंभाषणबह्वेकमलिनवस्त्रधारणकाम्यकर्माविहितकर्मकांस्यभोजनासत्सङ्गोष्णजलस्नानकञ्चुकोष्णीषधारणप्राणिहिंसापादुकायानशय्याऽऽरोहणनग्नत्वकुशरहितकरत्वादीनि अतिभोजनं च।

## भोज्यानि

शुक्लैकविधान्नं हैमन्तनीवारकङ्कुषष्टिका यवाः शूद्रानवहताः गुडवर्जितमैक्षवं कृष्णतिलमुद्गकलायकन्दविशेषनारिकेळकदळीलवलीपनसाम्रामलकार्द्रकसामुद्रळवणानुद्धृतसारगव्यपिप्पली-जीरकनारङ्गादीनि।

## अभोज्यानि

गुडकृत्रिमलवणपर्युषितनिस्स्नेहकीटादिदूषितकाञ्जिकग्रञ्जनबिल्वकरञ्जनबिल्वकरञ्जलशुनमृणाळकोद्रवतैलपक्वमाषमसूरचणकगोधूमदेवधान्यादीनि।

## भोजनपर्यायः

स्वेष्टदेवतायै निवेदितं सव्यञ्जनमन्नं मूलेन प्रोक्ष्य सप्तवारं प्रतिद्रव्यमभिमन्त्र्य अश्नीयात्। उदकं द्वात्रिंशद्वारं मूलाभिमन्त्रितं पिबेत्।

जपादिसमय आवश्यकोपाधौ शुचौ देशे तं निवर्त्य स्नात्वा शेषं समापयेत्। अशक्तौ तु मन्त्रभस्मान्यतरस्नानवस्त्रपरिवर्तने केवलं कुर्यादिति।

इत्थं कृतपुरश्चरणः सिद्धमनुः देवताप्रसादसम्पन्नः स्वातन्त्र्येणोपास्तौ श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः सति कामे काम्यमनुतिष्ठन् पूर्णमनोरथः सुखी विहरेदिति शिवम्।

।। श्रीकाञ्चीनगरी उपनिषद्ब्रम्हेन्द्रमठः पीठादीशः इष्टसिद्धेन्द्र सरस्वतीयतिशिष्य कृष्णानानन्द्र सरस्वती यति शिष्य श्रीपूर्णानानन्द्रसरस्वतीयति शिष्य श्री ज्ञानानन्देन्द्रसरस्वतीयति विरचित श्री विद्यामहार्णवे श्री श्यामलाप्रकरणम् समाप्तः।।

